KÂVYAMÂLÂ. 32.



# THE SAHṚIDAYÂNANDA

OF

# KRISHNÂNANDA.

EDITED BY

MAHAMAHOPADHYAYA PAṆḌIT DURGÂPRASÂ

AND

WÂSUDEVA LAXMAṆ SHÂSTRÎ PAṆASHÎKAR.

Second Edition.



PUBLISHED BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR "NIRṆAYA-SÂGAR" PRESS.

BOMBAY.

PRINTED BY B. R. GHÂṆEKAR AT THE "NIRṆAYA-SÂGAR" PRESS,
FOR THE PUBLISHER.

1910.

*Price 10 Annas.*

काव्यमाला ३२.



कृष्णानन्दविरचितं

# सहृदयानन्दम् ।



जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना महामहोपाध्याय-
पण्डितदुर्गाप्रसादेन, मुम्बापुरवासिपणशीकरोपाह्वय-
लक्ष्मणात्मजवासुदेवशर्मणा च संशोधितम् ।

(द्वितीयावृत्तिः ।)



तच्च

मुंबय्यां

तुकाराम जावजी

इत्येतेषां कृते तेषामेव निर्णयसागराख्ययन्त्रालये बालकृष्ण
रामचन्द्र घाणेकर इत्यनेन मुद्रयित्वा प्रकाशितम् ।

शाकः १८३२, खिस्ताब्दः १९१०.





मूल्यं १० आणकाः ।

# कृष्णानन्दः ।

वैदर्भोक्तिविभ्रमजन्मभूमिः कपिञ्जलकुलकुमुदिनीकलानिधिः सांधिविग्रहिको महापात्रः श्रीकृष्णानन्दमहाकविः कस्मिन्काले समुत्पन्न इति न ज्ञायते । परं चन्द्रशेखरकविसूनोर्विश्वनाथात्प्राचीनस्तदनुवर्त्यी चेति निर्विकल्पमवसीयते । यतो विश्वनाथरचितसाहित्यदर्पणस्याष्टमपरिच्छेदे 'सूचीमुखेन सकृदेव कृतव्रणस्त्वम्–' इति सहृदयानन्दस्थश्लोक उदाहृतः । अथास्य विश्वनाथस्य च सांधिविग्रहिक-महापात्रेति विशेषणद्वयं समानम् । तत्र सांधिविग्रहिक इति राज्याधिकारिसूचकः पदविशेषः । संधिविग्रहे भवः सांधिविग्रहिकः । एतत्पदं ब्राह्मणादिसाधारणम्, न ब्राह्मणमात्रविषयकम् । तथाहि— 'तन्मातुलेन तद्रोपाद्वीरनाथेन योगिना । सांधिविग्रहिकेनाथ स स्वेनैव न्यगृह्यत ॥' इति राजतरङ्गिणी ६।१११ । ' लिखितं संधिविग्रहाधिकृत-दिविर-पतिवत्रभट्टिना' इति इण्डियन आण्टिक्केरी १४।१८८' । अत्र दिविर इति कायस्थस्य पर्यायान्तरम् । 'विना मद्यं विना मांसं परस्वहरणं विना । विना परापकारेण दिविरो दिवि रोदिति ॥' इति लक्ष्यान्तरं च । महापात्र इति राजमन्त्रिसंज्ञान्तरमिति केचित् । तन्न । सर्वप्रधानाधिकारभाजः सांधिविग्रहिक इति कथनानौचित्यात् । ब्राह्मणसंज्ञान्तरमित्यपरे । सामान्योपनामान्तरमितीतरे । अयं च जगन्नाथपुर्यामासीत् । एतन्निर्मितस्य सहृदयानन्दकाव्यस्य तत्र प्रसिद्धिरप्यास्ते ।

अमुष्य काव्यरत्नस्योत्कललिपिसमुल्लसितं स्थलविशेषे सटिप्पणीकं सपादवर्षशतोट्टङ्कितमिवोपलक्ष्यमाणमेकं तालपत्रपुस्तकं भगवतः श्रीजगदीश्वरस्यार्चकान्मदनमोहनच्छात्रशिरोमणेरासाद्य तत्प्रतिरूपकं देवाक्षरैः संपाद्य च श्रीमन्तो विद्वन्मुकुटमणयो रायपुरीयहायस्कूलपाठकसत्तमाः सुगृहीतनामधेयाः 'वामन दाजी ओक' इत्याख्या महाशयवर्याः काव्यमालार्थमस्मभ्यं दत्तवन्त इति तेषां सौजन्यामृततरङ्गितान्तःकरणानामन्तर्वाणिवरेण्यानामुपकारं सप्रश्रयमुररीकुर्महे ।

अथैतत्कविप्रणीता काचन नैषधीयचरितटीकापि वर्तत इति तत्रत्येभ्यः श्रूयते । परमद्यावधि सा लोचनगोचरतां नागता । एवं सति नैषधीयचरितकर्तुः श्रीश्रीहर्षकवेरर्वाचीनः साहित्यदर्पणप्रणेतुः प्राचीनोऽयं कृष्णानन्दकविरिति परिणमति ।

श्रीहर्षस्तु भगवतः श्रीशंकराचार्यादर्वाचीनः पृथ्वीराजमहीपतेः प्राचीनः । यतोऽयं कविः स्वकीये खण्डनखण्डखाद्यनामके ग्रन्थे भगवत्पादस्य स्मरति, एवं च पृथ्वीराजसामन्तश्चन्दकविः स्वीये 'पृथ्वीराजरासा'संज्ञे निबन्धे स्तौति ।

१. 'भगवत्पादेन वा बादरायणीयेषु सूत्रेषु भाष्यं नाभाषि' इति 'भगवत्पादेन शंकराचार्यपादेन । बादरायणो व्यासः' इति तत्र शंकरमिश्रव्याख्यानम्.

जयसलमेरमहीपालचरितरूपस्य सुदर्शनचम्पूकाव्यस्य निर्माता कृष्णानन्दकविरस्मा-
स्माद्भिन्नो नवीनश्च ।

हा हन्त तत्तद्ग्रन्थसहस्ररत्नपटलीशाणायितशेमुषीके महामहोपाध्यायपदभाजि पण्डि-
तश्रीदुर्गाप्रसादे सुधर्माप्रणयितां गते द्वित्रमासपर्यन्तं प्रकृतग्रन्थसंपादने वैयाकरणशिरोरत्न-
श्रीशिवदत्तशर्मणा यः श्रमोऽकारि स धन्यवादपुरःसरं मुहुः स्मर्यते ।

M Mahalingasastri

# काव्यमाला।

## महाकविश्रीकृष्णानन्दप्रणीतं

## सहृदयानन्दम्।

प्रथमः सर्गः।

यदिन्द्रियाणां विषयत्वमेति लोकेषु यत्तत्त्वमतीन्द्रियं च।
कृत्स्नस्य तस्य प्रतिपत्तिहेतुर्वाग्देवता सा मयि संनिधत्ताम् ॥ १ ॥
दैत्येन्द्रमेकं करजैरजैकैर्विदारयन्क्रीडमिव प्रपन्नः।
स्वच्छेषु तेष्वनुबिम्बदम्भात्कुर्वन्ननेकं जयतां नृसिंहः ॥ २ ॥
दोषोदये तोषमपि प्रपन्नः खलस्तुलामेति न कौशिकस्य।
पूर्वस्य सर्वत्र विपक्षतास्ति निसर्गतोऽन्यस्य सपक्षतैव ॥ ३ ॥
धात्रा खलानां च सतां च किंचिद्विवेचनार्थं क्रियते न चिह्नम्।
परस्य दोषेषु गुणेषु चामी प्रमोदलाभात्प्रकटीभवन्ति ॥ ४ ॥
रत्नस्य काव्यस्य च नूतनस्य तुल्यः स्वभावः प्रतिभासते मे।
मृजाभिरेते निपुणैः कृताभिः समश्नुवाते हि गुणान्तराणि ॥ ५ ॥
ता एव नूनं सफलोदयाः स्युर्मुक्ताः प्रसन्नाः कविसूक्तयश्च।
गुणोपपत्त्या कमनीयगुम्फाः कण्ठे सतां याः पदमाप्नुवन्ति ॥ ६ ॥
अत्रेतिवृत्ते रचितप्रबन्धे क्रुद्धो मुधा मास्तु कविः पुराणः।
न स्पर्धया व्योम्नि सहस्रधाम्नः खद्योतकः स्वां द्युतिमातनोति ॥ ७ ॥
आसीदसीम्ना सहजेन धाम्ना निषिद्धशत्रुर्निषधेष्वधीशः।
अनन्यसाधारणवीरसेनं यं वीरसेनं सुधियो वदन्ति ॥ ८ ॥
मध्यंदिने म्लायति कृष्णवर्त्मा दिनावसाने रविरस्तमेति।
यस्य प्रतापः प्रतिपार्थिवानां दिवानिशं दुर्विषहो बभूव ॥ ९ ॥

शरन्निशानाथमरीचिगौरैर्विसृत्वरैर्यस्य यशःप्रवाहैः ।
प्रक्षाल्यमानेऽपि जगत्यरीणां मलीमसान्येव मुखान्यभूवन् ॥ १० ॥
युगान्तवातैस्तरलीकृतोर्मिर्वेलामतिक्रामति तोयराशिः ।
द्विषां जयैरुन्नतिमागतोऽपि न लङ्घयामास नृपः स्थितिं यः ॥ ११ ॥
दोर्दण्डदर्पस्तपनो यदीयस्तमो निरस्यन्नपि लोकवृत्ति ।
प्रत्यर्थिपृथ्वीपतिमण्डलस्य निमीलयामास मुखाम्बुजानि ॥ १२ ॥
क्वचिन्न या रज्यति भुज्यमाना गाढानुरागैरपि मेदिनीन्द्रैः ।
सैव क्षितिर्यं पतिमभ्युपेत्य पतिव्रतानां व्रतमन्वतिष्ठत् ॥ १३ ॥
निजेन धाम्ना जगतोऽखिलस्य दोषापनोदाय समुद्यतस्य ।
द्वीपेषु सप्तस्वपि निर्विशेषः करोदयो यस्य रवेरिवासीत् ॥ १४ ॥
अपि प्रभुः शास्त्रनियन्त्रितत्वाद्धर्मार्थकामानिव तुल्यवृत्तिः ।
पौरानसौ जानपदांश्च नित्यमन्योन्यबाधारहितं बभार ॥ १५ ॥
दिशामधीशैः पुरुहूतमुख्यैरपि प्रकामं स्पृहणीयलक्ष्मीः ।
ततः क्षितीन्द्रात्तनयोऽधिजज्ञे क्षीराम्बुराशेरिव कल्पवृक्षः ॥ १६ ॥
तस्मिन्क्षणे प्राङ्गणसीम्नि राज्ञः प्रसूनवृष्टिर्नभसः पपात ।
नीरन्ध्रमासादितया समन्ताद्यया हसन्तीव मही विरेजे ॥ १७ ॥
वसुंधरे सागरमेखलां त्वामनन्यसाधारणमेष भोक्ता ।
इतीव नादैः प्रथयांबभूवुर्वृन्दानि वृन्दारकदुन्दुभीनाम् ॥ १८ ॥
तदा कुमारोदयमङ्गलश्रीरास्थानभाजः पृथिवीश्वरस्य ।
न्यवेदि पूर्वं सुरपुष्पवर्षैर्योषिन्नियुक्तैश्चरमं तु चारैः ॥ १९ ॥
दुःखैरसंभिन्नगुरुप्रमोदा दोषेऽप्यनास्वादितदण्डभीतिः ।
संकल्पमात्रोपनतार्थसिद्धिस्तदाभवद्द्यौरिव राजधानी ॥ २० ॥
अन्तःपुरस्थोऽपि नरेन्द्रसूनुरानन्दयामास विशां मनांसि ।
पूर्वाद्रिशृङ्गान्तरितोऽपि भास्वान्प्रसादयत्येव दिशां मुखानि ॥ २१ ॥
ततो नियोगादवनीश्वरस्य पुरोधसा निर्मितजातकर्मा ।
स राजसूनुः सुतरां विरेजे नीहारनिर्मुक्त इवोष्णरश्मिः ॥ २२ ॥

१. स्वर्गे इव.

विलोकमानः कमनीयरूपं कुमारमारोप्य तमङ्कदेशे ।
निमेषचेष्टामपि पक्ष्मपङ्क्त्योश्चिरं विसस्मार महीमहेन्द्रः ॥ २३ ॥
लब्धार्थकामार्जनकोविदत्वमयं न लीयेत कदापि पापे ।
इतीव निश्चित्य गुरुर्निमित्तैश्चकार नाम्ना नलमात्मजं तम् ॥ २४ ॥
तस्यानिमित्तस्मितचन्द्रिकाभिर्यथा यथा जृम्भितमर्भकस्य ।
तथा तथासीदवनीश्वरस्य प्रमोदवारांनिधिरुत्तरङ्गः ॥ २५ ॥
पद्भ्यां हरिद्रारसरञ्जिताभ्यां स्पृष्टा मही यत्कमलाङ्किताभूत् ।
तेनैव तस्मिन्कमलोद्भवायाः सांनिध्यमुच्चैः प्रथयांबभूव ॥ २६ ॥
बाल्यादनाविष्कृतवर्णभेदैर्वचोभिरर्धोच्चरितैस्तदीयैः ।
राज्ञः प्रमोदः प्रथमं व्यधायि लिङ्गैस्तु पश्चात्कथितस्तदर्थः ॥ २७ ॥
निर्मीयमाणा निपुणैर्नृपस्य नेपथ्यलक्ष्मीर्न तथा प्रियासीत् ।
यथा यदृच्छारसिकस्य तस्य विलुप्यमाना करपल्लवेन ॥ २८ ॥
संस्पर्धमानेव नराधिपस्य प्रमोदलक्ष्मीं मुहुरुल्लसन्तीम् ।
दिने दिने तस्य शरीरयष्टिर्नवां नवां वृद्धिमुपारुरोह ॥ २९ ॥
अभ्यासहेतोः क्षिपतः पृषत्काञ्ज्याकृष्टिजन्मा ध्वनिरस्य योऽभूत् ।
तेनैव दर्पः प्रतिपार्थिवानां धनुर्भृतां दूरतरं निरस्तः ॥ ३० ॥
न केवलं लोचनवर्त्मवर्ति शराः शरव्यं जगृहुस्तदीयाः ।
शब्देन दूरादनुमीयमानं विचिन्त्यमानं मनसापि भेजुः ॥ ३१ ॥
आतिथ्यमक्ष्णोः क्षणमभ्युपैति सौदामनी व्योम्नि विजृम्भमाणा ।
कृपाणपाणेर्धृतचर्मणस्तु नलस्य नालक्षि गतिर्जनेन ॥ ३२ ॥
विद्यासु सर्वासु तथा चकार परिश्रमं राजसुतः क्रमेण ।
निश्चायकं संशयितेऽर्थतत्त्वे मेने यथैनं निवहो गुरूणाम् ॥ ३३ ॥
अथौषधिः कान्तिविशेषवृद्धेः साम्राज्यलक्ष्मीः स्मरपार्थिवस्य ।
नीराजना विक्रमकुञ्जरस्य नलं सिषेवे नवयौवनश्रीः ॥ ३४ ॥
पीयूषरश्मेरपहाय मध्यं भजेदुपान्तं यदि प(ल)क्ष्मलेखा ।
नवोदितश्मश्रुलताभिरामं तदोपमीयेत मुखं नलस्य ॥ ३५ ॥

महीभुजां संयति निर्जितानां श्रियः करिष्यन्ति निवासमस्मिन् ।
इतीव निश्चित्य विधिश्चकार प्रकामविस्तीर्णममुष्य वक्षः ॥ ३६ ॥

नरेन्द्रसूनुः कृशिमातिरेकात्परं न मध्येन जिगाय सिंहान् ।
दृप्तारिवीरद्विपदारणेन नैसर्गिकेणापि पराक्रमेण ॥ ३७ ॥

मौर्वीकिणश्यामिकया कृताङ्कमाजानु दीर्घं भुजयुग्ममस्य ।
विलोकमानः परिपन्थिलोकः स्वे भाविनि श्रेयसि निःस्पृहोऽभूत् ॥ ३८ ॥

गाम्भीर्यमब्धिं स्थिरता नगेन्द्रं प्रभा दिनेशं कमनीयतेन्दुम् ।
अप्येकमेनं निखिलो गुणौघः परस्परस्पर्धितयेव भेजे ॥ ३९ ॥

ततः स्वदोर्दैर्घ्यपरीक्षणाय कदाचिदभ्याशजुषां मुखेन ।
शस्त्रेण साध्यं पृथिवीन्द्रसूनुः किंचिद्विधेयं पितरं ययाचे ॥ ४० ॥

अथ क्षितिं वीक्ष्य जितामशेषां स्वेनैव धाम्ना निषधाधिनाथः ।
दोर्दण्डकण्डूमपनोदयिष्यन्दिदेश सूनोर्मृगयाविहारम् ॥ ४१ ॥

आपांसुकेलि प्रतिपन्नसख्यैरुपात्तशस्त्रैः सह मन्त्रिपुत्रैः ।
बिभ्रद्धनुः पार्श्वनिषक्ततूणः स वाहमारुह्य वनं प्रतस्थे ॥ ४२ ॥

पतिः पृथिव्यास्तमनु प्रयातुं चमूचरानाटविकान्दिदेश ।
स केवलं तान्पितृगौरवेण न कार्यबुद्ध्यानुचरांश्चकार ॥ ४३ ॥

नेत्राञ्चलैरेव मृगेक्षणानां निपीयमानाननचन्द्रलक्ष्मीः ।
पुरीमतिक्रम्य नगोपकण्ठे खेलत्कुरङ्गं स्थलमाससाद ॥ ४४ ॥

तथा स चक्रे भुवि मण्डलानि सव्यापसव्यानि तुरंगमेण ।
यथा मृगैरप्यनवाप्य मार्गं तन्मध्य एव भ्रमता व्यधायि ॥ ४५ ॥

विहाय तेषां सरणिं स भूयो हयं तथा तीव्ररयं चकार ।
दूरं प्रयातानपि तानतीत्य यथा निवृत्तेषुभिराजघान ॥ ४६ ॥

इतस्ततो विद्रवतां मृगाणां येषां विषाणानि नलश्चकर्त ।
संरोप्यमाणैर्विशिखैः शिरःसु पुनः सशृङ्गानिव तांश्चकार ॥ ४७ ॥

ततस्तुरंगोद्धतधूलिचक्रं स्थलं परिक्षीणमृगं विहाय ।
अग्रेसरैः कैश्चन कृष्णसारैरादिष्टवर्त्मेव वनं स भेजे ॥ ४८ ॥

कुरङ्गकैः कीर्णनिकुञ्जगर्भं भुजंगमैः शंसितभूमिरन्ध्रम् ।
शाखामृगैर्लङ्घिततुङ्गशाखं खगैः समासादितपादपाग्रम् ॥ ४९ ॥
सिंहैः समाक्रान्तदरीविशेषं तरक्षुभिः काङ्क्षितसान्द्रकक्षम् ।
विगाह्यमानं परितो नलेन विनीतवत्काननमाबभासे ॥ ५० ॥ (युग्मम्)
प्रतिस्वनाक्रान्तदिगन्तरेण ज्याकृष्टिघोषेण गणो मृगाणाम् ।
तमेव सर्वत्र विशङ्कमानः पाशैर्विना बद्ध इवावतस्थे ॥ ५१ ॥
प्रवेष्टुकामानिव भीतिवेगात्क्षितिं मुखैरुल्लिखतो वराहान् ।
फूत्कारघोषेण निवेद्यमानान्ददर्श दूरादवनीन्द्रसूनुः ॥ ५२ ॥
तरस्विना तेन नृपात्मजेन विकृष्य चापं कुतुकाद्विमुक्तैः ।
नीरन्ध्रमङ्गेषु शरैर्निखातैः प्रापुः श्रियं शल्लकिनां वराहाः ॥ ५३ ॥
धनुर्भृता तेन शरो विमुक्तः शिक्षाविशेषादविशीर्णवेगः ।
प्रदीर्घपङ्क्तिः क्वचिदेकपद्यामेकोऽपि यूथं बिभिदे मृगाणाम् ॥ ५४ ॥
वाहद्विषां निष्पततां पुरस्ताद्विषाणचक्रं स तथा चकर्त ।
अभ्याशभाजोऽपि विलोक्य वाहान्द्वेषं यथैते सफलं न कुर्युः ॥ ५५ ॥
स बाणवर्त्मन्यपि वर्तमानान्कपीनमुञ्चत्करुणार्द्रचेताः ।
संरक्षतः स्वावयवानुपेक्ष्य कण्ठेषु डिम्भानवलम्बमानान् ॥ ५६ ॥
निकुञ्जलीनः क्षुधितस्तरक्षुर्विक्रम्य जग्राह मृगं न यावत् ।
नृपात्मजस्तावदुपेत्य वेगादुद्धृत्य कुन्तेन तमुद्बभार ॥ ५७ ॥
अलक्षितः क्वापि जवातिरेकाच्चमूचरैः सान्द्रमहीरुहेषु ।
भ्रमन्वनान्तेषु मृगानुसारी पद्माकरं कंचिदसौ ददर्श ॥ ५८ ॥
किंचिन्निपीतश्रमवारिबिन्दुः सरोजसंसर्गवतानिलेन ।
स तस्य तीरे सुखसुप्तहंसे नरेन्द्रसूनुः सुचिरं चचार ॥ ५९ ॥
मुखे प्रियायाः प्रणयानुबन्धाद्बालं मृणालाङ्कुरमर्पयन्तम् ।
सरोजिनीपत्रनिषण्णमेकं हिरण्मयं हंसमसौ ददर्श ॥ ६० ॥
तं धारयिष्यन्नविपन्नमेव संमोहनास्त्रं स समाददे च ।
लताश्रितानां वनदेवतानां शुश्राव वाक्यं च मनोज्ञमेतत् ॥ ६१ ॥

Imaginative handling of the Hamsa episode
Considerable improvement on the original

चापादपाकृष्य नरेन्द्रसूनो शिलीमुखं तूणमुखे निधेहि ।
संपादयिष्यत्ययमीप्सितं यत्तवानुरूपं तनुरूपलक्ष्म्याः ॥ ६२ ॥
ततस्तदाकर्ण्य वचः कुमारः सविस्मयं तद्विदधे तथैव ।
उपेत्य हंसः सुविदूर एव निषेदिवानित्थमुदाजहार ॥ ६३ ॥
मधुद्विषो नाभिसरोजजन्मा निर्माणशिल्पी जगतां त्रयाणाम् ।
त्रयीलतोन्मीलनमूलकन्दः करोतु देवस्तव मङ्गलानि ॥ ६४ ॥
त्रैलोक्यभर्तुः कमलासनस्य विमानधुर्याधिपतित्वलाभात् ।
सयक्षरक्षःसुरकिंनरेषु लोकेषु पूज्या मम तातपादाः ॥ ६५ ॥
स्वकर्म मां शिक्षयता विमाने पित्रा नियुक्तं क्षणमप्यवेक्ष्य ।
निजासनाम्भोरुहकेसरैर्मे श्रमापनोदं कुरुते विरिञ्चिः ॥ ६६ ॥
स्नानोन्मुखीनां सुरसुन्दरीणां काश्मीरपङ्कैः परिपिञ्जरेषु ।
अदूरमन्दारतरुप्रसूनैः समीरमुक्तैः सुरभीकृतेषु ॥ ६७ ॥
दिक्कुञ्जराणामविरामपातैर्मदाम्बुभिः कर्बुरितोदरेषु ।
चरामि सार्धं सहचारिणीभिः स्वर्गापगायाः पुलिनान्तरेषु ॥ ६८ ॥ (युग्मम्)
कौमारमारभ्य सुताः सुराणां जयन्तमुख्या अपि बद्धसख्याः ।
तथापि भूयांस्तव दर्शनोत्थश्चित्तेऽपि संमाति न मे प्रमोदः ॥ ६९ ॥
न मानसे नैव सुमेरुशृङ्गे न नन्दने नापि गृहे विरिञ्चेः ।
न क्वापि गन्तुं वलते मनो मे त्वया सनाथामवनीं विहाय ॥ ७० ॥
सख्यं त्वया साधयितुं ततो मां स्पृहातिरेकस्तरलीकरोति ।
पुष्पेषुपुष्पाकरयोरिवास्तु तदावयोः स्याद्यदि कौतुकं ते ॥ ७१ ॥
ततः समास्थाय स मौनबन्धं मन्दाकिनीपुष्करगन्धभाजा ।
अमार्जयत्पक्षपुटानिलेन तदङ्गलग्नानि रजांसि हंसः ॥ ७२ ॥
भवादृशानां मनुजेषु सख्यं मनोरथानामपि दूरवर्ति ।
तदद्य संपादयतो विधातुरहेतुकोऽयं मयि पक्षपातः ॥ ७३ ॥
मृगार्थमित्थं भ्रमतो वनेषु दैवादभूद्यस्त्वयि सख्यबन्धः ।
स एष पाषाणकणाञ्जिघृक्षोः करोदरे मौक्तिकपुञ्जपातः ॥ ७४ ॥

अद्य प्रभृत्येव सखा त्वमेकः प्रेमास्पदं स्वादपि जीवितान्मे ।
इति ब्रुवन्नेव नरेन्द्रसूनुः करेण कण्ठे खगमाममर्श ॥ ७५ ॥

इत्थं प्रसादाभिमुखेन धात्रा निर्यत्नमावर्जितसख्यबन्धौ ।
तौ तस्थतुस्तत्र मुहूर्तमात्रं परस्पराभाषणकौतुकेन ॥ ७६ ॥

स्वस्त्यस्तु ते संप्रति साधयामि निवेदितं यद्वनदेवताभिः ।
संतर्पयिष्यामि दृशौ वयस्य भूयस्तवालोकरसायनेन ॥ ७७ ॥

जाता दिनश्रीर्जरती तदेष गृहानुपैतुं समयस्तवापि ।
इत्थं वचः कर्णपथाभिराममुदीर्य हंसो वियदुत्पपात ॥ ७८ ॥

अतीतदृग्वर्त्मनि हेमहंसे क्रमादुपेतेषु चमूचरेषु ।
शरीरमात्रेण पुरं प्रतस्थे नलोऽन्वगच्छन्मनसा तमेव ॥ ७९ ॥

प्रेम्णाह्वयन्तीमिव दीर्घदीर्घैः प्रदोषशङ्खध्वनिभिर्विदूरात् ।
संध्यांशुदम्भादनुबद्धरागां नलः प्रपेदे कुलराजधानीम् ॥ ८० ॥

तदद्भुतं तस्य वनान्तवृत्तं सुहृत्सु शंसत्सु परस्परेण ।
स्मरन्मुहुः स्वर्णविहंगमस्य निशामनैषीन्निषधेन्द्रसूनुः ॥ ८१ ॥

वनेषु तस्याचरितं चरेण विज्ञाय राज्ञो भृशमुत्सुकस्य ।
प्रत्यूषकृत्यं विधिवद्विधाय मूर्ध्ना ववन्दे चरणौ कुमारः ॥ ८२ ॥

अथाभिनन्द्यात्मजमादरेण दोर्भ्यां परिष्वज्य पतिः पृथिव्याः ।
मौलेष्वमात्येषु दृशौ निवेश्य प्रमोदबाष्पाकुलमित्युवाच ॥ ८३ ॥

गुणैरुदारैर्विनयावतंसैर्निरस्तसाम्येन भुजौजसा च ।
आरोपितोऽहं धुरि पुत्रभाजां वत्स त्वयाविष्कृतपौरुषेण ॥ ८४ ॥

अद्य प्रभृत्येव नरेन्द्रलक्ष्मीर्मयानुशिष्टास्तु वशंवदा ते ।
श्रेयस्तपःसाधनमेव राज्ञां ज्ञातानुभावेषु तनूद्भवेषु ॥ ८५ ॥

तदेष रक्षाविधये प्रजानां नक्तंदिवं जाग्रदवाप्तखेदः ।
धुरं धरित्र्यास्त्वयि संनिवेश्य चिराय विश्राम्यतु वीरसेनः ॥ ८६ ॥

निवार्यमाणोऽपि मुहुः प्रणम्य नलेन बद्धाञ्जलिसंपुटेन ।
निवेश्य तस्मिन्नवनीन्द्रलक्ष्मीमुपाददे लक्ष्म तपोधनानाम् ॥ ८७ ॥

स बाष्पमोक्षैरपि न क्षमोऽभूत्पितुः समारम्भनिवर्तनाय ।
विपर्ययं नैति महात्मनां हि प्रतिश्रुतोऽर्थः प्रतिबन्धकेन ॥ ८८ ॥
अनुप्रयातः सह पौरवर्गैर्नलेन पर्यश्रुविलोचनेन ।
चिरावृतः क्ष्मातिलकः प्रतस्थे तपोवनं निर्विषयाभिलाषः ॥ ८९ ॥
शोकाग्निवेगं वचनामृतेन चिरान्मृदूकृत्य नृपः सुतस्य ।
तं पौरमुख्यैः स्वपुरं प्रवेश्य चकार वश्येन शरीरवृत्तिम् ॥ ९० ॥

वैखानसैर्मुनिजनैरभिनन्द्यमानः
संसिद्धिमाप तपसः किल वीरसेनः ।
भेजे नलस्त्वखिलपार्थिवमौलिरत्नै-
र्नीराज्यमानचरणः पृथिवीन्द्रलक्ष्मीम् ॥ ९१ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते नलसाम्राज्यलाभो नाम प्रथमः सर्गः ।

## द्वितीयः सर्गः ।

ततोऽभ्यषिञ्चन्विधिवन्नलं द्विजाः सतां प्रमोदात्तरलं मनोऽभवत् ।
चकार लक्ष्मीः पदमस्य वक्षसि प्रपेदिरे संपदमूर्जितां प्रजाः ॥ १ ॥
नरेन्द्रलक्ष्म्याः परिरम्भसंभवां तथा न भेजे मुदमूर्जितां नलः ।
पितुः सपर्याविरहेण संभृतां यथोपलेभे परितापसंपदम् ॥ २ ॥
अपि स्वयं पार्थिवनीतिपारगः स मन्त्रिणां संमतिमन्ववर्तत ।
विधूदयासादितवृद्धिरम्बुधिर्न जातु वेलामभिलङ्घ्य गच्छति ॥ ३ ॥
धृतोदये सीदति कैरवं रवौ तुषारभानौ कमलं निमीलति ।
अशेषमुच्चैर्मुदमाददे जगन्निषेव्यमाणे तु नले नृपश्रिया ॥ ४ ॥
नवोदयेनेव सहस्रभानुना स्वमण्डलं तेन समन्वरज्यत ।
अमुष्य तेजस्तु विसारि सर्वतः परं द्विषामेव बभूव दुःसहम् ॥ ५ ॥
शरीरभाजां करणीयसाक्षिणः परेषु मित्रेषु च तुल्यवृत्तयः ।
विचेरुरेतस्य दिने दिने चराः करास्तुषारेतरदीधितेरिव ॥ ६ ॥
प्रविश्य रन्ध्राणि तनून्यपि द्विषामुदीरयामास स वृत्तिमौरगीम् ।
शिरांसि तुङ्गान्युपनीय नम्रतां वितेनिरे तत्र परे तु वैतसीम् ॥ ७ ॥

his assumption of kingship is wedged in to the Hamsa-vrittanta



अपि त्रिलोकीं विजहार लीलया निरर्गलं दोर्द्रविणार्जितं यशः ।
अमुष्य मन्त्रस्तु कदाचिदाययौ न कर्णमूलान्यपि पार्श्ववर्तिनाम् ॥ ८ ॥
यथेन्द्रियाणां निवहो निजं निजं विहाय नान्यं विषयं निषेवते ।
तथा जनस्तेन कृतानुशासनः पथः स्वकीयादपरं न शिश्रिये ॥ ९ ॥
निरूपिते वर्त्मनि शास्त्रचक्षुषा पदं वितन्वन्नकृताङ्गपीडनः । Scintillating multicolour rays
अणीयसोऽपि प्रकटीकृताङ्कुरानलुण्ठयत्क्ष्मातिलकः स कण्टकान् ॥ १० ॥
निरर्गलं शैलवनाभिगामिनीमपीडयन्नेव करेण गामसौ । compression by verbal magic
वृषं पुरस्कृत्य समीहितं दुहन्नदृष्टपूर्वां स्फुटमाप गोपताम् ॥ ११ ॥
न केवलं दण्डभयाज्जनोऽखिलस्तदाभवत्तत्करतापसंमुखः ।
अभून्न तादृग्विषयोऽपि देहिनां मनोरथो येन जगाम वन्ध्यताम् ॥ १२ ॥
निरङ्कुशस्तस्य यशोमतङ्गजः प्रतापसिन्दूररजोरुणाननः । ability in compactness
निरस्य यन्तारमितस्ततश्चरन्नरिद्विपानां समशोषयन्मदम् ॥ १३ ॥
इति व्यपास्य व्यसनान्यनारतं प्रपास्यतस्तस्य महीं महीभुजः ।
उपायनीकर्तुमिवावनीरुहां प्रसूनकोषादुदभून्नवो मधुः ॥ १४ ॥
शरीरभाजां जनयिष्यतो मुदं निदेशलाभादिव मेदिनीपतेः ।
न वासरस्तीव्रतरातपोऽभवन्निशापि नातीव तुषारदूषिता ॥ १५ ॥
अनु प्रतस्थे मलयाद्रिमारुतस्त्विषांपतिं प्रस्थितमुत्तरां दिशम् ।
विहाय मार्गं महनीयतेजसां निजेच्छया चेष्टितुमुत्सहेत कः ॥ १६ ॥
सरोरुहाणां सुहृदां पराभवादवाप्तविद्वेष इवानुवासरम् । conceit
क्रमेण संपादितपाटवैः करैर्जहार नीहारपरम्परां रविः ॥ १७ ॥
विलोक्य रत्नाकरमेखलां भुवं स्ववंशकेतावनुरागिणीं नलैः । arguing
प्रमोदलाभादिव शीतदीधितिः प्रसादसंपत्तिमवाप कामपि ॥ १८ ॥
हितं प्रजानां सततं विधित्सतः क्षणप्रदानार्थमिवास्य भूपतेः । Idea inspiring utpreksha has weight
निरस्य रात्रेः परिणाहसंपदं रविर्दिनं द्राघयितुं प्रचक्रमे ॥ १९ ॥
लताः परीरम्भमवाप्य निर्भरं नभस्वतश्चन्दनशैलजन्मनः ।
समुल्लसन्नूतनपल्लवच्छलाद्व्यजृम्भयन्रागमिवान्तरं बहिः ॥ २० ॥

विचुम्बनेऽपि क्षमतामनागता वितन्वती केवलमुत्सवं दृशोः ।
बभूव मुग्धा सहकारमञ्जरी पिकस्य मौनव्रतभञ्जने पटुः ॥ २१ ॥
मयैव कृत्स्नं जगदद्य निर्जितं वयस्य दूरेऽस्तु शरव्ययस्तव ।
इतीव पुंस्कोकिलकूजितच्छलादुदीरयामास मधुर्मनोभवम् ॥ २२ ॥
प्रसूनसौरभ्यहरं समीरणं नियन्तुमभ्युत्सुकतामुपागताः ।
विलोलपुष्पंधयमण्डलीमिषादुदक्षिपन्पाशमिवायसं द्रुमाः ॥ २३ ॥
परागपूरैः करिकेसरोद्भवैः पिशङ्गिताङ्गः समदो मधुव्रतः ।
चिरं वितन्वन्नपि चाटुचातुरीं विमृश्य दीर्घं प्रिययान्वगम्यत ॥ २४ ॥
लताः परिष्वज्य हठान्नभस्वता विमुच्यमानाः प्रतिलोलपल्लवाः ।
मधुव्रतौघैश्चपलैर्विरेजिरे विमर्दमुक्तैः कबरीभरैरिव ॥ २५ ॥
परिप्लवा मूर्ध्नि लवङ्गवीरुधः शिलीमुखालिः सुतरां व्यराजत ।
नभस्वता चन्दनशैलतश्चिरादुपेत्य मुक्ता किमु वेणिरायता ॥ २६ ॥
निसर्गशोणैर्ललितः स पल्लवैर्नवैरशोकः स्तबकैरशोभत ।
निचीयमानः श्वसितैर्वियोगिनां मनोभवाग्निः किमु राशितां गतः ॥२७॥
निराकृतः कण्टकमालया बहिः समाहृतः सौरभसंपदान्तिकम् ।
बभूव रोलम्बयुवा न चुम्बितुं प्रभुर्विमोक्तुं च सुवर्णकेतकीम् ॥ २८ ॥
इति प्रगल्भे सुरभौ निरङ्कुशं पिकस्वनैर्गायति मन्मथस्तवम् ।
हिरण्मयं पत्रिणमेव तं स्मरन्नरंस्त भावेषु न केषुचिन्नलः ॥ २९ ॥
अपाकरिष्यन्नथ मानसीं रुजं नृपः कदाचिद्गृहदीर्घिकां ययौ ।
जवातिरेकादवितर्कितागतिः स चोपतस्थे पतगोत्तमः पुरः ॥ ३० ॥
ससंभ्रमं तौ नयनातिथीकृतौ परस्परं कल्पितबन्धुसत्क्रियौ ।
मिथः कथालापरसायनैरुभौ निषेदतुः क्वापि निकुञ्जमन्दिरे ॥ ३१ ॥
सुरापगाशीकरसङ्गशीतलं पतंगमुत्सङ्गतले निवेशयन् ।
विशांपतिः प्रेमवशाद्बिसाङ्कुरं करेण तस्याधिमुखं न्यवेशयत् ॥ ३२ ॥
अनन्तरं स्मेरसरोजसोदरे मुखे नरेन्द्रस्य निवेश्य लोचने ।
सुधारसस्यन्दि मनोहरं क्षणादवोचदित्थं वचनं विहंगमः ॥ ३३ ॥

अवाप नूनं परिपाकसंपदं वसुंधरायाश्चिरसंचितं तपः ।
पुरंदरं द्यौरिव येयमीश्वरं सखे भवन्तं समुपस्थिता स्वयम् ॥ ३४ ॥
दिने दिने किंनरसुन्दरीजनैः सुखोषितैः कल्पमहीरुहामधः । Perfect minded
अनन्यसामान्यतया सकौतुकं सुधांशुशुभ्रं तव गीयते यशः ॥ ३५ ॥
कथाप्रसङ्गेन वयस्य भूभुजां गुणोत्तरं पृच्छति वृत्रवैरिणि ।
उदाहरन्ति प्रथमं सकौतुकाः पुनः पुनस्त्वां सुरसिद्धचारणाः ॥ ३६ ॥
अहं च साम्राज्यसुखेऽपि निःस्पृहं मनस्त्वदीयं मयि दूरवर्तिनि ।
विदन्नपि त्वामपहाय यच्चिरं चरामि दूरे शृणु तत्र कारणम् ॥ ३७ ॥
यदैव पूर्वं वनदेवतामुखैर्न्यवेदयं साधयितुं त्वदीप्सितम् ।
तदैव लोकोत्तररूपशालिनीं तवोपनेतुं महिषीमचिन्तयम् ॥ ३८ ॥
ततोऽनुरूपां तव रूपसंपदः पुरंदरस्यापि पुरे मृगीदृशम् ।
अपश्यतः स्वीकृतभङ्गशङ्किनः कृतं पदं चेतसि चिन्तया मम ॥ ३९ ॥
कदापि सेवावसरे दिवौकसां मनोभवं प्राञ्जलिमग्रतः स्थितम् ।
उपास्यमानः सुरसुन्दरीजनैः कुतूहलादित्थमुवाच वासवः ॥ ४० ॥
जगत्त्रयेऽस्मिन्नितरेतराधिकाः सहस्रशः सन्ति मनोरमाः स्त्रियः ।
वशंवदं विश्वममूर्वितन्वते त्वयोपदिष्टैस्तु विलासचेष्टितैः ॥ ४१ ॥
ततः प्रसूनाशुग वामचक्षुषां विशेषितत्वं त्वमवैषि केवलम् ।
निरस्य दाक्षिण्यमुदाहरस्व तां गुणैः स्वरूपेण च या विशिष्यते ॥४२॥
निजेषु रूपातिशयेषु संशयं प्रयाति वृन्दारकसुन्दरीजने ।
कुतूहलेनोत्तरलेषु नाकिनां गणेष्वनङ्गः शतमन्युमब्रवीत् ॥ ४३ ॥
जगत्त्रये किंचिदपीह विद्यते न ते सहस्राक्ष परोक्षतां गतम् ।
तथापि यन्मामनुयोक्तुमीहसे विधेयतां मे सफलीकरोषि तत् ॥ ४४ ॥
पुरी विदर्भा विदितैव ते विभो निजैर्गुणैर्या विजिगीषते दिवम् ।
भुनक्ति तां वैरिषु भीमविक्रमः प्रभुर्भुवो भीम इति प्रथां गतः ॥४५॥
सुतां स लेभे कमनीयविग्रहां प्रसाद्य भक्त्या दमनाह्वयं मुनिम् ।
अतोऽस्य नाम्नैव कृतोपलक्षणा जनेन साभूद्दमयन्त्युदीरिता ॥ ४६ ॥

अंसौ जगन्नेत्रचकोरचन्द्रिका विसारिलावण्यतरङ्गदीर्घिका ।
अलंकृता नातिचिरात्कृशोदरी वयोविशेषेण मदेकबन्धुना ॥ ४७ ॥
कुतूहलेनोत्तरलो यदा विधिः शिरीषपुष्पादपकृष्य मार्दवम् ।
करिष्यते काञ्चनयष्टिगोचरं वपुस्तदास्यास्तुलनामुपैष्यति ॥ ४८ ॥
निसर्गसौरभ्यदरिद्रतां यदा कलापिनः पिच्छभरं विमोक्ष्यति ।
मृगीदृशोऽस्याश्चिकुरोत्करश्रियस्तदोपमानं सुलभं भविष्यति ॥ ४९ ॥
सुधामयूखेऽपि कलङ्कदूषिते प्रदोषसंकोचिषु पङ्कजेष्वपि ।
विलज्जितः शिल्पमदोद्धुरो विधिर्व्यधत्त तस्याः कमनीयमाननम् ॥५०॥
शरैर्मदीयैरपि कुण्ठता श्रिता वशीकृतान्तःकरणेषु केषुचित् ।
मृगीदृशोऽस्यास्तु दृगन्तविभ्रमः करोति तेषामपि धैर्यविच्युतिम् ॥५१॥
कुरङ्गमुत्सङ्गशयं शरद्विधुर्विधूय धत्ते यदि तद्दृशौ परम् ।
मृगेक्षणायाश्चटुलाक्षमाननं तदा निकामं तुलनामुपैष्यति ॥ ५२ ॥
निमीलयन्त्यारुणरत्नदीधितिं विलज्जयन्त्या नवपल्लवश्रियम् ।
समुल्लसन्त्याधरकान्तिसंपदा विकासिबन्धूकमधः करोति सा ॥ ५३ ॥
इमौ मृदू निर्भरमस्मि कर्कशं स्थितिः सहाभ्यां मम नैव सांप्रतम् ।
इतीव तस्याः परिणाहसंपदा भुजौ विदूरं नुदति स्तनद्वयम् ॥ ५४ ॥
तदीयमालोहितपाणिपल्लवं शिरीषमालामृदुलं भुजद्वयम् ।
विडम्बयन्भाति मृणालकाण्डयोरधोमुखस्मेरसरोजयोः श्रियम् ॥ ५५ ॥
विधाय मध्यं सुतनोस्तथा तनुं बभूव तद्भङ्गभयाकुलो विधिः ।
यदेष पश्चात्त्रिवलीमिषादमुं चकार हैमैर्वलयैर्वृतं त्रिभिः ॥ ५६ ॥
परस्परस्यास्पदलङ्घनैषिणोर्निवारणाय स्तनयोर्मृगीदृशः ।
तनूरुहश्रेणिमिषान्नवं वयः करोति सीमानमिवानयोरधः ॥ ५७ ॥
किमुच्यतेऽस्याः प्रथिमा नितम्बयोर्यदत्र दृष्टिः पतिता विलासिनाम् ।
चिरं परिभ्रम्य कुतूहलाद्भृशं श्रमादिवान्यत्र न गन्तुमिच्छति ॥ ५८ ॥
निरस्तरम्भातरुरामणीयकं तदीयमूरुद्वितयं विचिन्तयन् ।
अनादरोऽहं विषयान्तरे मुहुः करोम्यसूयाकुटिलेक्षणां रतिम् ॥ ५९ ॥
विकस्वरैर्लोहितपङ्कजैस्तुलां विलोक्य पादद्वितयं दमस्वसुः ।
गुणाधिकं कर्तुमिदं समुत्सुकश्चकार धाता नखमु(मौ)क्तिकाङ्कितम् ६०

Cupid speaks in 1 Narad— ... for dramatic effect



अशेषलावण्यनिधानभाजनं जगत्रयीमोहनसिद्धभेषजम् ।
प्रजासृजः शिल्पमहीरुहः फलं वपुस्तदीयं प्रतिभाति मे हृदि ॥ ६१ ॥
इति स्वयं तां स्मृतिजन्मना स्तुतां विचिन्तयन्तः पृथिवीन्द्रनन्दिनीम् ।
स्वधैर्यबन्धेष्वभवन्ननीश्वराः पुरंदराद्याः ककुभामधीश्वराः ॥ ६२ ॥
तथागतांस्तानवलोक्य दिक्पतीन्विमृश्य वाक्यं रतिवल्लभस्य च ।
परस्परस्यापि मुखावलोकने विलज्जमानाः सुरसुभ्रुवोऽभवन् ॥ ६३ ॥
शरत्तुषारद्युतिबिम्बसोदरं तिलोत्तमायास्तमसा वृतं मुखम् ।
स्वदेहसौन्दर्यविशेषसंभृतो मदालसायाः शिथिलोऽभवन्मदः ॥ ६४ ॥
अभूदभिध्यानपरेव निश्चला सुलोचना मुद्रितलोचनोत्पला ।
प्रदीर्घनिःश्वासविधूसराधरा स्थिता सखीमध्यगता सुमध्यमा ॥ ६५ ॥
अपि त्रिलोकीबहुमानभाजनं न मेनकामानयदात्मनो वपुः ।
निवेश्य नेत्रद्वितयं स्वपादयोरलम्बुसालम्बत पार्श्वगां सखीम् ॥ ६६ ॥
अनिन्ददाशु त्रिदशाभिनन्दितं कलावती केलिकलासु कौशलम् ।
अशेषवृन्दारकदृष्टिबन्धनं सुविभ्रमा विस्मरति स्म विभ्रमम् ॥ ६७ ॥
कपोलबिम्बं परिघूर्णितालकं निधाय पङ्केरुहसोदरे करे ।
चिराय चित्रार्पितयेव निश्चलं स्थितं सखीसंसदि चित्रलेखया ॥ ६८ ॥
निरायताभिःश्वसितानिलोर्मिभिर्विधुन्वती केलिसरोरुहं मुहुः ।
हृतेव कासारजलात्कुमुद्वती शशिप्रभासीत्तरसैव निष्प्रभा ॥ ६९ ॥
अधारयद्वासवधैर्यलोपिनी न जीवितेऽपि स्मरजीविता मनः ।
अहारयत्र्यम्बकचित्तहारिणी विदग्धतां गीतिषु मञ्जुगीतिका ॥ ७० ॥

लास्येष्वप्सरसां निरस्य कुतुकं संचिन्त्य भैमीं मुहुः
स्वं स्वं धाम पुरंदरप्रभृतयः सर्वे ययुर्निर्जराः ।
स्वत्कार्यं हृदये निधाय सपदि प्राप्तस्त्वरां भूयसीं
क्षोणीन्द्र त्रिदिवादवातरमहं रम्यां विदर्भामनु ॥ ७१ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते हंसदर्शनो नाम द्वितीयः सर्गः ।

तृतीयः सर्गः ।

तास्तास्ततो दिविषदामवगाह्य वीथीः
पाथोमुचामपि पथस्तरसावतीर्य ।
सौधैः सुधांशुधवलैस्त्रिदिवं हसन्ती
दृष्टा मया नरपते नगरी विदर्भा ॥ १ ॥
भैमीविलोकनसमुत्सुकमानसेन
तस्यां मया विचरता क्वचिदप्यदर्शि ।
मध्ये विलाससरसः स्फटिकावनद्धं
नातिप्रभूतपरिचारमगारमेकम् ॥ २ ॥
आकल्पशून्यवपुषं मणिभूषणेषु
विद्वेषिणीं प्रियसखीभिरुपाहृतेषु ।
आलेख्यवत्फलकमेव निरीक्षमाणां
तां तत्र भीमनृपतेस्तनयामपश्यम् ॥ ३ ॥
आकर्णिताधिकगुणामवलोक्य भैमीं
भूषां विनापि नयनोत्सवमावहन्तीम् ।
संभावितं हृदि मया मदनस्य जाड्यं
लावण्यवर्णनविधौ वरवर्णिनीनाम् ॥ ४ ॥
किंचिद्विषण्णवदनामिव तां विभाव्य
तद्भावमिङ्गितलवैरवधारयिष्यन् ।
आसन्नपङ्कजवनेषु निबद्धनीडैः
प्रक्रीडितोऽस्मि सह तत्र विलासहंसैः ॥ ५ ॥
मन्दादरा मधुरभाषिणि केलिकीरे
निष्कौतुका कलरुतास्वपि सारिकासु ।
आसाद्य मां वचसि मानुषनिर्विशेषं
किंचित्कुतूहलवती मयि सा तदासीत् ॥ ६ ॥
अत्रान्तरे सरभसं समुपेत्य काचि-
दन्तर्विजृम्भितविषादवशंवदायाः ।

तस्याः क्षितीन्द्रदुहितुः सविधं प्रपन्ना
प्रेमानुबन्धमधुरां गिरमित्यवादीत् ॥ ७ ॥
शून्या कुरङ्गमदपत्रविशेषकेण
गण्डस्थली परिणमल्लवलीविपाण्डुः ।
नैषा कथं विषहते विरहं कृशाङ्गि
शोणारविन्दसुहृदः करपल्लवस्य ॥ ८ ॥
आवर्जितैर्निजकरेण सखि त्वदीयै-
र्भृङ्गारवारिभिरभूदभिवर्धिता या ।
उज्जृम्भमाणमुकुला नर्ममालिकापि
नैषा कथं वितनुते नयनोत्सवं ते ॥ ९ ॥
आलक्ष्यमुग्धमुकुलां सहकारशाखां
तन्वीं निपीडयति निष्करुणः पिकोऽयम् ।
व्यालोलमञ्जुवलयस्वनमांसलाभि-
र्नैनं निवारयसि किं करतालिकाभिः ॥ १० ॥
आमोदलोलुपतया परिहृत्य पुष्पं
पुष्पंधयाः सरभसं समुपेत्य दूरात् ।
पर्याकुलाः पुनरमी विनिवर्तमानाः
संसूचयन्ति तव निःश्वसितेषु तापम् ॥ ११ ॥
उत्तंसितेष्वपि तमालदलेषु लोल-
मालोक्य यं सखि कुतूहलमातनोषि ।
त्वां वीक्ष्य खिन्नहृदयां निहितं मुखेऽपि
दर्भाङ्कुरं त्यजत एष कुरङ्गशावः ॥ १२ ॥
कौतूहलात्करतले विनिवेश्य मुग्धं
वैदग्ध्यभङ्गिषु गिरां सखि यं व्यनैषीः ।
त्वां मौनमास्थितवतीमवलोक्य सोऽयं
क्रीडाशुकोऽपि नवबद्ध इवास्ति मूकः ॥ १३ ॥

उत्कूजितेन मधुरेण समाह्वयन्ती-
मग्रे गतां सहचरीमपि नानुयाति ।
चञ्चूपुटे तव करेण समर्प्यमाणं
मुग्धे मृणालमभिकाङ्क्षति केलिहंसः ॥ १४ ॥

नैसर्गिकीं कनकचम्पकसोदरीं ते
कान्तिं विलुम्पति कुतः सखि पाण्डुतेयम् ।
तन्वि त्वमेषि पुनरेव कुतस्तनुत्वं
कुल्येव भानुकिरणैः कलिता निदाघे ॥ १५ ॥

इत्थं तया निगदिते शतशोऽपि सख्या
नाख्यायि किंचिदपि तत्र नरेन्द्रपुत्र्या ।
अन्या तु भावमुपलब्धवती तदीयं
काचिन्न्यवेदयदिदं वचनं वयस्या ॥ १६ ॥

रूपादिभिर्गुणगणैरनुरूपमस्या-
स्तातश्चिराय विमृशन्वरमात्मजायाः ।
आलेख्यकर्मकुशलैः फलकेषु कृत्स्ना-
नालेखयत्क्षितिभुजः प्रथितान्ववायान् ॥ १७ ॥

कौतूहलेन फलकेषु मयाहृतेषु
क्षोणीभृतो विलिखितान्निपुणं निरूप्य ।
आसीदियं त्रिजगतामभिनन्दनीये
कुत्रापि यूनि विनिवेशितचित्तवृत्ति ॥ १८ ॥

खेदोज्झितामपि तनूमवसादयन्ती
विश्वं निरावरणमेव तिरोदधाना ।
निद्रां विनापि नयने विनिमीलयन्ती
चिन्ता पदं कृतवती हृदये ततोऽस्याः ॥ १९ ॥

एणीदृशः प्रबलतापभयादिवास्याः
श्वासानिलाः प्रतिमुहुः प्रसरन्ति दूरम् ।

बाष्पाम्बुवीचिषु निमज्जनकातरेव
निद्रा दृशोर्न सविधेऽपि पदं विधत्ते ॥ २० ॥
उज्जृम्भते भृशमुशीरविलेपनेन
धत्ते रुषं कमलिनीदलमारुतेन ।
अन्तःस्थमेव सुभगं सततं स्मरन्त्याः
संताप एष सुतनोर्बत दुर्निवारः ॥ २१ ॥
ज्योत्स्नीषु चन्द्रमवलोकितुमक्षमेयं
लोलेक्षणा नयनयुग्ममवाञ्चयन्ती ।
वीक्ष्याननं स्तनतटे प्रतिबिम्बितं स्वं
तच्छङ्कया सपदि वेपथुमातनोति ॥ २२ ॥
एषा निसर्गसुकुमारतनूविशेषा-
त्क्षामा स्मरेण विषहेत कथं भरं मे ।
इत्थं विचिन्त्य किमु निर्गलितं कराभ्यां
क्षोणीतले लुठति कङ्कणयुग्ममस्याः ॥ २३ ॥
नीरन्ध्रमावृणुत कैरविणीं समेताः
क्षौमाञ्चलैः सरभसं समुपेत्य सख्यः ।
एषापि नाहमिव दाहवशंवदास्तु
संप्रत्यपि प्रणयिनी हतचन्द्रिकासु ॥ २४ ॥
पानाय चन्द्रमहसामसकृद्विलोलः
चञ्चूपुटस्तव चकोर पुरेव मा भूत् ।
एतेषु संप्रति सुधामपसार्य सद्यः
प्राणापहारि गरलं हि विधिर्व्यधत्त ॥ २५ ॥
मुञ्चन्ति मुर्मुरकणान्मरुतस्त एव
तान्येव कोकिलरुतानि तुदन्ति कर्णौ ।
सख्यः किमेतदिति निःसहमालपन्ती
निद्रां न विन्दति नरेन्द्रसुता निशासु ॥ २६ ॥

Hyperbolical stretch of convention

All this is length, … to 40



स्मेरेषु चन्द्रकिरणैर्वलभीगृहेषु
धौतेषु चन्दनरसैर्मणिकुट्टिमेषु ।
आरामसीमसु घनद्रुमशीतलासु
कुत्रापि निर्वृतिरभून्न विदर्भजायाः ॥ २७ ॥

इत्थं रहस्यमभिधाय शनैर्वयस्या
तत्कालयोग्यमुपचारविधिं विधित्सुः ।
आहृत्य केलिसरसः सरसैर्म्रदिष्ठैः
पाथोजिनीकिसलयैः शयनं व्यधत्त ॥ २८ ॥

तस्मिन्निसर्गशिशिरेऽपि मृगीदृशोऽस्याः
पाथोजिनीकिसलयास्तरणे लुठन्त्याः ।
आसीन्न निर्वृतिलवः शफराङ्गनायाः
कुल्याम्भसीव रविदीधितिदीपितायाः ॥ २९ ॥

सान्द्रा मृणाललतिका स्मरविक्लवाया-
स्तस्याः सखीभिरधिकण्ठतटं न्यधायि ।
श्यामीकृता सपदि तापभरेण सापि
स्निग्धेन्द्रनीलमणिहारतुलामयासीत् ॥ ३० ॥

इत्थं सखीविरचितैः शिशिरोपचारै-
र्दुर्वारतापरभसामवलोक्य बालाम् ।
संवीजयन्किमपि पक्षपुटाञ्चलेन
तामित्यवादिषमहं मृदुना स्वरेण ॥ ३१ ॥

एकः स एव तरुणः स्पृहणीयजन्मा
तस्यैव पुण्यनिवहः परिणाहशाली ।
चेतोभुवस्त्रिजगतीजयवैजयन्ति
यः प्रेम पल्लवयितुं निपुणस्तवासीत् ॥ ३२ ॥

neat, elegant, … 

तन्वन्ति ये त्वयि तनूदरि भावबन्धं
धन्यास्त एव भुवनत्रितये युवानः ।

किं नाम तेऽपि मधुपाः स्मितलेशभाजं
सायंतनीमनुसरन्ति न मल्लिकां ये ॥ ३३ ॥

त्वं श्लाघ्यसे शतमखप्रमुखैरमर्त्यैः
कीदृग्विधेषु मनुजेषु मृगायताक्षि ।
अभ्यर्थितस्तु तव सुन्दरि दुर्लभो यः
सोऽयं न कस्य हृदि विस्मयमातनोति ॥ ३४ ॥

मध्ये विलासविपिनं मणिमन्दिरेषु
मन्दारदामभिरलंकृतकुट्टिमेषु ।
शच्यापि सार्धममराधिपतिर्विहर्तुं
मन्दादरो भवति सुन्दरि चिन्तया ते ॥ ३५ ॥

दाक्षिण्यतः सुरमहीरुहमञ्जरीभि-
रापिञ्जराभिरवतंसयितुं प्रियायाः ।
अर्धप्रसारितकरोऽप्यमराधिनाथ-
स्त्वच्चिन्तया सुमुखि मन्थरतामुपैति ॥ ३६ ॥

मध्येऽपि दुग्धजलधेः कलिताधिवासः
संवाह्यमानचरणोऽपि तरङ्गिणीभिः ।
अन्तर्विचिन्त्य भवतीमवनीन्द्रपुत्रि
तापोत्तरं वपुरपामधिपो बिभर्ति ॥ ३७ ॥

तन्वि त्वदर्थमनिशं परिपीड्यमानः
पञ्चेषुणा धनपतिर्विनिमीलिताक्षः ।
सख्युः सकाशमवसर्पति चन्द्रमौले-
स्तन्मौलिचन्द्रमहसः परिशङ्कमानः ॥ ३८ ॥

त्वां भावयन्कनककेतकगर्भगौरि
मन्दादरः प्रणयिनीष्वपि पार्श्वगासु ।
पञ्चाशुगेन सुहृदापि शिलीमुखानां
लक्षीकृतः स्वमपि निन्दति रोचिरिन्दुः ॥ ३९ ॥

न्यस्तेक्षणस्तव तनौ स्तनबन्धुराङ्गि
रागान्ध्यमेत्य भगवानरविन्दबन्धुः ।
भ्राम्यन्मुहुः कनकभूधरमेखलाया-
माम्रेडितानि वितनोति गतागतेषु ॥ ४० ॥

सव्यार्धतामुपगतां गिरिशस्य वीक्ष्य
क्षोणीधरेन्द्रतनयामवनीन्द्रपुत्रि ।
स्पर्धावती त्वमसि चेद्वद निर्विशङ्कं
त्वां दक्षिणार्धमहमस्य करोमि सद्यः ॥ ४१ ॥

किं विस्तरेण वचसामपरेण भूय-
स्त्वं चेत्कुतूहलवती तरलायताक्षि ।
क्षीराम्बुराशितनयामपरामिव त्वां
नारायणस्य हृदये विनिवेशयामि ॥ ४२ ॥

एते मया मखभुजः कथिताः पुरस्ते
ये दुर्लभास्त्रिषु जगत्सु विलासिनीभिः ।
अग्रेसरत्वमुपनेष्यति भाग्यभाजां
त्वत्पाणिपीडनविधिः कतमं तदेषु ॥ ४३ ॥

कर्णाभिराममिह मां बहु भाषमाणं
त्वं केलिकीरमिव सुन्दरि मावमंस्थाः ।
वैमानिकोऽस्मि कमलप्रभवस्य तन्मे
लोकेषु सप्तसु न दुष्करमस्ति किंचित् ॥ ४४ ।

इत्थं मया निगदिता बहुधा मृगाक्षी
सा निश्चयं कृतवती वचने मदीये ।
यत्रावलोकितवती तव देहलक्ष्मीं
भूयोऽपि तत्फलकमेव हृदि न्यधत्त ॥ ४५ ॥

तस्मिन्सखे लिखितया तव देहलक्ष्म्या
त्वय्येकतानहृदयामवलोक्य बालाम् ।

आत्मानमाकलयता सफलप्रयास
भैमी प्रमोदतरलेन मयाभ्यधायि ॥ ४६ ॥
त्वं माधवी मधुरसौ जगदेकवीर-
स्त्वं कौमुदी कुमुदबन्धुरयं नरेन्द्रः ।
आस्तां निरस्तसदृशान्तरयोश्चिराय
संबन्ध एष युवयोरभिनन्दनीयः ॥ ४७ ॥
आश्वास्यतामिति वचोभिरहं दिदृक्षु-
स्त्वां यावदम्बरपथं न समुत्पतामि ।
तावत्तया स्तनतटादपकृष्य हारः
स्वेनैव पाणिकमलेन समर्पितोऽयम् ॥ ४८ ॥
द्राघीयसी हिमरुचेरपि निर्मलेयं
वक्षोजकुङ्कुमरजोभिरुदीर्णरागा ।
तस्याः सखे हृदयवृत्तिरिव द्वितीया
मुक्तालता हृदि तवास्पदमातनोतु ॥ ४९ ॥
मुक्ताकलापमथ तेन समर्प्यमाणं
पश्चान्नलः करतले कलयांचकार ।
स्वेदोदबिन्दुचयदन्तुरितं समन्ता-
त्प्रागेव तस्य वपुरुत्पुलकं बभूव ॥ ५० ॥
तेनोरसि प्रियसखेन निवेश्यमान-
मापिञ्जरं मृगदृशः कुचकुङ्कुमेन ।
हारं निरीक्ष्य कलितः कुसुमेषुबाणै-
रन्तर्व्यचिन्तयदिदं सुचिरं नरेन्द्रः ॥ ५१ ॥
सूचीमुखेन सकृदेव कृतव्रणस्त्वं
मुक्ताकलाप लुठसि स्तनयोः प्रियायाः ।
बाणैः स्मरस्य शतशोऽपि निकृत्तमर्मा
स्वप्नेऽपि तां कथमहं न विलोकयामि ॥ ५२ ॥

१. उदाहृतोऽयं श्लोकः साहित्यदर्पणे.

प्रत्यक्षरं क्षरदिवामृतनिर्झरौघ-
माकर्ण्य कर्णमधुरं वचनं खगस्य ।
तं मौनभाजमसकृत्परिरभ्य दोर्भ्या-
मानन्दमन्थरमिदं नृपतिर्बभाषे ॥ ५३ ॥

अभ्यर्थितं फलति कल्पतरुः प्रकामं
चिन्तामणिर्दिशति चिन्ततमेव भूयः ।
अप्रार्थितानि वितरन्ति वि(त्रिहः?) चिन्तितानि
कीर्तिं तयोरपि भवानधरीकरोति ॥ ५४ ॥

अत्रान्तरे वियदशोभयदंशुपूरैः
पूर्णेन्दुसुन्दरमुखी दिवसान्तलक्ष्मीः ।
लब्धोदयैस्त्रिषु जगत्सु गुणैरुदारै-
र्भैमीव तस्य हृदयं पृथिवीश्वरस्य ॥ ५५ ॥

अथ सुहृदि सरोषे वैरसेनिं जिघांसौ
विदधति विषमेषौ चापमारोपितज्यम् ।
प्रथयितुमिव भूयस्तस्य साहाय्यमिन्दुः
ककुभि बलभिदः स्वं बिम्बमाविश्चकार ॥ ५६ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते हंससंदेशो नाम तृतीयः सर्गः ।

---

## चतुर्थः सर्गः ।

सुरपतेरपहाय दिशं विधुर्विशदतां क्रमशः समुपाययौ ।
मनसि तां विनिवेश्य मृगीदृशं कलयति स्म नलस्त्वनुरागिताम् ॥ १ ॥
बहिरुदञ्चति कैरवबान्धवे स्फुरति चेतसि मुग्धदृशो मुखे ।
समवलम्ब्य बलं सुहृदोर्द्वयोरभिजघान शरैस्तमनन्यजः ॥ २ ॥
विचुकिलैः सितशालि विकस्वरैः सुरभितं कुमुदैः क्षणदामुखम् ।
दुरवलोकमभूदवनीभुजः स्मरशरज्वरकातरचेतसः ॥ ३ ॥
अपि निमीलितमह्नि निशामुखे कुमुदमुल्लसितश्रियमानशे ।
हृदयमस्य तदैव महीभुजः समधिकं विधुरत्वमुपाददे ॥ ४ ॥

स्थितिमतां प्रथमोऽपि महाशयः पतिरपां रजनीरमणत्विषा ।
अवनिवासवसंभवया तया नल इवोत्तरलत्वमुपाययौ ॥ ५ ॥
अपकिरन्नमृतं परितः करैः प्रसृमरैरमृतद्युतिरुज्ज्वलैः ।
मुदमुदञ्चयितुं पृथिवीभुजः सरसिजस्य च नाभवदीश्वरः ॥ ६ ॥
किसलयान्तरसंधिषु पुञ्जितैः शशभृतः किरणैरपि भूरुहाम् ।
असमयेऽपि कथंचिदुदञ्चितैः सुमनसां स्तबकैरिव रेजिरे ॥ ७ ॥
शशिरुचः परिपीय मुहुर्मुहुः सपदि तुन्दिलतां समुपेयुषी ।
गृहचकोरवधूर्निजपञ्जरे पृथुतरेऽपि चिराय न संममौ ॥ ८ ॥
शशिरुचा शशिकान्तगृहाङ्गने प्रसरदम्बुभरे सरसीयति ।
उडुगणैः परितः प्रतिबिम्बितैरुपहृतः कुमुदोत्करविभ्रमः ॥ ९ ॥
उपहसन्निव हंसकदम्बकं विचकिलं कलयन्निव निष्प्रभम् ।
अपहरन्निव हारलताश्रियं शशिरुचां निचयः समरोचत ॥ १० ॥
कतिचिदम्बर एव तिरोदधे निजकरैरपराः परिषस्वजे ।
अभिससार परा अपि तारकाः सितरुचिर्विकिरन्वसुसंपदम् ॥ ११ ॥
विकचकैरवसौरभलोलुपैस्तत इतः कलगुञ्जितकैतवात् ।
स्मृतिभुवस्त्रिजगद्विजयार्जितं यश इव भ्रमरैरुदगीयत ॥ १२ ॥
अथ हृदि प्रसभं विहितास्पदैः स्मरशरैरिव लम्बितशङ्कया ।
सहजया स च धीरतयोज्झितः खगमिदं निजगाद नरेश्वरः ॥ १३ ॥
तव निपीय सखे वचनामृतं श्रवणयुग्ममभून्मम शीतलम् ।
तदवधिप्रसभं दहतीव मे हृदयमर्म कथं स्मरमुर्मुरः ॥ १४ ॥
दहतु नाम सखे मलयानिलः कवलनात्फणिनां विषदूषितः ।
अमृतदीधितिरेष सुधामयैरपि करैर्दहतीति महाद्भुतम् ॥ १५ ॥
ध्रुवमियं मलयानिलचारिणां फणभृतां श्वसितोर्मिपरम्परा ।
न पुनरेष स दक्षिणमारुतस्तनुभृतां वितनोति सुखानि यः ॥ १६ ॥
दहति मे हृदयं हिमदीधितिस्तुदति चन्दनशैलसमीरणः ।
दलयति प्रसभं पिकपञ्चमः किमवलम्ब्य सखेऽस्तु सुखोदयः ॥ १७ ॥

ज्वलति शीतरुचिर्वियदङ्गने तपति दिक्षु मरुन्मलयोद्भवः ।
किरति मर्मसु पञ्चशरः शरान्सुखलवोऽपि सखे मम दुर्लभः ॥ १८ ॥
स्मृतिभुवो यदि पञ्च शिलीमुखा यदि च ते कुसुमैरुपपादिताः ।
अविरतं निपतन्ति सहस्रशः कथममी हृदयं दलयन्ति च ॥ १९ ॥
हिमरुचिर्दहतीति किमद्भुतं बहिरसौ विशदः कलुषो हृदि ।
अबुध एष जनस्तु यदीदृशादपि सुखाधिगमाय समुत्सुकः ॥ २० ॥
तव सखे रचितोऽद्य मयाञ्जलिः शशधरः स तथा प्रतिबोध्यताम् ।
समधिरुह्य निजाङ्कमृगं क्षणादयमुपैति यथास्तमहीधरम् ॥ २१ ॥
शशिनमंसतटे निविवेश्य वा नय सखे चरमाचलकंदरम् ।
तव विरञ्चिविमानकधुर्यतामुपगतस्य भविष्यति कः श्रमः ॥ २२ ॥
उदयमद्रिमधिश्रयितुं सखे त्वरय संप्रति वा दिनवल्लभम् ।
वसुसमृद्धिमदं शमयन्विधोर्विरहिणां स भवत्ववलम्बनम् ॥ २३ ॥
कथय किं नु कदापकृतं मया कुलगुरोरपि चन्द्रमसः सखे ।
मयि निरस्तकृपः कथमन्यथा किरति जीवितहारि विषं करैः ॥ २४ ॥
इदमुदीरयतः पृथिवीपतेः कथमपि प्रतिपद्य पदं दृशोः ।
सकृपयेव तदा किल निद्रया क्षणमदर्शि नरेन्द्रसुता पुरः ॥ २५ ॥
अथ नलः प्रतिबुध्य ससंभ्रमं तत इतो विनिवेश्य विलोचने ।
प्रियतमां सविधे न विलोकयन्निदमुवाच मनोभवकातरः ॥ २६ ॥
मम कृते मृदुलाङ्गि दवीयसीं सरणिमाशु विलङ्घ्य यदागतम् ।
तदिदमाचरितं सुदति त्वया समुचितं प्रणयस्य गरीयसः ॥ २७ ॥
अपकृतं त्वमुना मम निर्भरं भुजयुगेन वृथा परिणाहिना ।
वलयतां समुपेत्य निजान्तरे त्वमसि यन्न चिराय निवेशिता ॥ २८ ॥
स्मितविकस्वरया दशनश्रिया किमपि कन्दलिताधरपल्लवम् ।
पुनरुपैष्यति लोचनगोचरं मम कदा तव सुन्दरि तन्मुखम् ॥ २९ ॥
धृतकुरङ्गमदद्रुततूलिकं मम करं मकरीलिखनोन्मुखम् ।
तव कपोलतले पुलकोद्गमः सुमुखि नेष्यति मन्थरतां कदा ॥ ३० ॥

zen the beloved.' Poet a slave of Rhetorical tenets



स्मरविमर्दविशृङ्खलबन्धनं लुलितमंसतटे शिथिलस्रजम् ।
तव कदा सुतनो कबरीभरं निगडयिष्यति पाणियुगं मम ॥ ३१ ॥
कृतकरोषजुषस्तव यावके चरणयोर्नमता शिरसाकृते ।
विरचयन्परिकर्म सवेपथुर्मम कदा सुकृती भविता करः ॥ ३२ ॥
नयनयुग्म जनुस्तव निष्फलं प्रणयिनीं न चिराय यदीक्षसे ।
त्वमसि मानस पुण्यतमं यतः शशिमुखी सततं त्वयि खेलति ॥ ३३ ॥
तव कपोलतले विमलत्विषि प्रतिफलन्नविभावितमण्डलः ।
विलसदङ्कमृगस्तनुते शशी मृगमदद्रवपत्रविशेषताम् ॥ ३४ ॥
ध्रुवमसि त्वमिहैव तिरोहिता विरहपाण्डुवपुः शशिरोचिषा ।
इदमिदं तव नूपुरशिञ्जितं श्रवणयोः सविधे मम जृम्भते ॥ ३५ ॥
क्व ते शिरीषाधिककोमलं वपुः क्व लङ्घनं तन्वि दवीयसः पथः ।
निषीद तन्मे क्षणमङ्कसीमनि क्लमं कराभ्यां विनयामि पादयोः ॥ ३६ ॥
अध्वक्लान्त्या मुकुलितमिदं द्वन्द्वमुन्मीलयाक्ष्णो-
भूयो भूयः कुवलयमयी दिश्यतां दिक्षु वृष्टिः ।
व्रीडानम्रं क्षणमपि नयोन्नम्रतामेतदास्यं
व्योम्नि स्मेरं भवतु कमलं पश्यतः शीतभानोः ॥ ३७ ॥
कथं कथं मामपहाय भाविनि त्वरावती त्वं पुनरेव गच्छसि ।
निरागसि प्रेयसि केन हेतुना मयि क्षणं दक्षिणतां न रक्षसि ॥ ३८ ॥
तथातिभूमिं भवतैव लम्भितं कथं सखे सौहृदमाशु विस्मृतम् ।
इतः प्रयान्ती मम जीवनेश्वरी प्रसाद्य यन्नैव निवर्त्यते त्वया ॥ ३९ ॥
इतः प्रयाता पदवीं दवीयसीमदृश्यतां यास्यति जीवितेश्वरी ।
अनुव्रजन्नाशु निवर्तयामि तां सखे क्षणं पक्षयुगं प्रयच्छ मे ॥ ४० ॥
आश्वासनार्थमिव मे कमले विधौ च
लक्ष्मीलवं तव मुखस्य विधिर्व्यधत्त ।
निद्राति पूर्वमनयोरपरस्तु जाग्र-
न्मर्माणि हन्त मम कृन्तति किं करोमि ॥ ४१ ॥✓

The fact remains that superlative love-daydreams & sickness are depicted

[इति] प्र(वि)लपितमस्य मेदिनीन्दोः स्मरविधुरीकृतचेतसो निशम्य।
प्रतिपदममृतद्रवं विमुञ्चन्वचनमुवाच दशोचितं विहंगः॥ ४२॥

कुवलयदृशि तस्यामेष भावानुबन्ध-
स्तव निषधनरेद्र प्रीतये कस्य न स्यात्।
भवति हि मधुलक्ष्म्याः साहचर्यं प्रपन्नः
समधिकमभिनन्द्यश्चन्दनाद्रेः समीरः॥ ४३॥

धैर्यं निधाय मनसि प्रतिपालयेदं
क्ष्मावल्लभ क्षणमिव क्षणदावसानम्।
प्रत्यूष एव भवतोऽभिमतार्थसिद्धे-
र्द्वारं भविष्यति विसंघटितापिधानम्॥ ४४॥

इति वचनमुदीर्य मेदिनीन्द्रं विरमति तत्र विरञ्चियानधुर्ये।
अनुव(ग)दितुमिवास्य वाचमुच्चैरुदचरदाशु निशान्तशङ्खनादः॥ ४५॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते नलोन्मादो नाम चतुर्थः सर्गः।

## पञ्चमः सर्गः।

बहिर्विहाराय विशीर्णसक्थिनी निषेदुषी गर्भगृहोदरेषु।
नभस्तुषारांशुमुखं दधाना क्रमेण रात्रिर्जरती बभूव॥ १॥
समुत्सुकः प्राप्तुमिवास्य लक्ष्मीं नलस्य पञ्चेषुशराकुलस्य।
विगाहमानः ककुभं प्रतीचीं बभूव चन्द्रः सविशेषपाण्डुः॥ २॥
अनुद्यते भास्वति मन्दभासि विधौ किमप्याविरभूत्तमिस्रम्।
आसाद्य रन्ध्रं महनीयधाम्नां मलीमसः संपदमातनोति॥ ३॥
निद्रां विमुञ्चत्सु सरोरुहेषु सौरभ्यलोलैर्निवहैरलीनाम्।
स्तोकावशेषोऽपि बभूव सान्द्रः पद्माकरेषु क्षणमन्धकारः॥ ४॥
संस्पृश्यमानैव बलाज्जहार वसूनि सर्वाण्यपि पश्चिमाशा।
इन्दोः प्रकृत्या विमलस्य जातस्तथापि तस्यामनुरागबन्धः॥ ५॥
दिशं प्रतीचीं परिरभ्य चन्द्रे दरीगृहं गच्छति पश्चिमाद्रेः।
बभार बालारुणरश्मिशोणं प्राची मुखं कोपकषायितेव॥ ६॥

अर्धप्रबुद्धेषु सरोरुहेषु नातिप्रसुप्तेषु च कैरवेषु ।
करम्बितं सौरभमाददानः प्रालेयशीतिः पवनश्चचार ॥ ७ ॥

तथाविधां तस्य दशां नृपस्य निरीक्षितुं कातरतामुपेत्य ।
निद्राविरामध्वनिभिः खगानामाहूय चन्द्रं रजनी जगाम ॥ ८ ॥

पूर्वापराद्र्योः शिखराग्रभाजौ द्वावेव माणिक्यमणिप्रकाशौ ।
परस्परस्य प्रतिबिम्बलक्ष्मीं क्षणं प्रपन्नाविव पुष्पवन्तौ ॥ ९ ॥

सुतैरिव स्वैरुडुभिः सहैव नभोङ्गणे यामवतीमतीत्य ।
विहर्तुकामश्चरमाद्रिवेलां शनैः प्रपेदे तुहिनांशुहंसः ॥ १० ॥

वितीर्णरागः कुसुमोत्करश्रीर्ज्योत्स्नाविपाण्डुश्छदनान्यपास्य ।
बभार बालारुणरश्मिदम्भान्नभस्तरुर्नूतनपल्लवानि ॥ ११ ॥

उपैप्यतश्चण्डरुचेर्मयूखैर्निरस्यमानेऽपि घनान्धकारे ।
नलस्य भैमीविरहाग्निजन्मा जगाम वृद्धिं मदनान्धकारः ॥ १२ ॥

विकासलक्ष्मीः कमलं जगाम संकोचमुद्रा कुमुदं प्रपेदे ।
संपद्विपद्वापि निसर्गलोला कुत्रापि न स्थैर्यमुरीकरोति ॥ १३ ॥

मधूनि पीत्वा क्षणदामिदानीमदक्षिणोऽयं नलिनीमुपैति ।
इतीव सेर्प्या निजकोषमध्ये कुमुद्वती कापि बबन्ध भृङ्गम् ॥ १४ ॥

कथंचिदास्थाय स धैर्यबन्धं प्रत्यूषसंध्याविधिमन्वतिष्ठत् ।
महात्मनां हि व्यसनातिभारः क्रियाविलोपे प्रभुतां न याति ॥ १५ ॥

दशां तवेमां विनिवेद्य भैमीमाश्वासयिष्यामि निकामखिन्नाम् ।
श्रुतोऽपि खेदं शिथिलीकरोति प्रियानुरागः प्रमदाजनस्य ॥ १६ ॥

तदेष गच्छामि नराधिनाथ मुहूर्तमात्रेण पुरीं विदर्भाम् ।
विलोकयिष्यामि दिनैः कियद्भिर्भैमीसनाथस्य मुखाम्बुजं ते ॥ १७ ॥

इति ब्रुवन्नेव नरेश्वरेण दोर्भ्यां परिष्वज्य खगो विमुक्तः ।
लिम्पन्नभः काञ्चनपक्षकान्त्या क्षिप्रं विदर्भाभिमुखो जगाम ॥ १८ ॥

अत्रान्तरे दूतमुखेन भीमः स्वयंवरार्थं स्वतनूभवायाः ।
प्राप्ते विदर्भामवनीन्द्रवृन्दे तं प्रीतिपूर्वं नलमाजुहाव ॥ १९ ॥

ततः समासाद्य शुभं मुहूर्तं पुरोधसा संभृतमङ्गलश्रीः ।
निमित्तसंसूचितकार्यसिद्धिर्नलः प्रतस्थे नगरीं विदर्भाम् ॥ २० ॥
अधश्चमूरेणुभरस्य रेजे श्वेतातपत्रं निषधेश्वरस्य ।
विलङ्घ्य मेघान्निजवंशकेतुं तं वीक्षितुं प्राप्त इवामृतांशुः ॥ २१ ॥
अमुष्य हस्ताम्बुजमभ्युपेत्य भैमी ध्रुवं मे भविता सपत्नी ।
इतीव तस्य ध्वजिनीभरेण विश्वंभरा वेपथुमुद्बभार ॥ २२ ॥
मद्वंशजातान्नृपतीनतीत्य गुणेन भैमीमुपलप्स्यतेऽसौ ।
इतीव लज्जाविधुरो विवस्वानन्तर्दधे तस्य चमूरजोभिः ॥ २३ ॥
मतङ्गजानां मदवारिसेकैः पराभवासादनशङ्कयेव ।
अमुष्य नासीरतटे तुरङ्गैः क्षुण्णं रजः खं सहसोत्पपात ॥ २४ ॥
आभोगलक्ष्म्या पदवीष्वभान्ती विसृत्वरैर्विश्वममुष्य सेना ।
वर्षाम्बुपूरेण विभिन्नसेतुः स्रोतस्वती वृद्धिमतीव रेजे ॥ २५ ॥
तस्य प्रयातुः पृतनाभरेण नीरन्ध्रतां वर्त्म तथा जगाम ।
यथा रजोऽप्यस्य खुरावकीर्णं न चक्षमे व्योमविलङ्घनाय ॥ २६ ॥
दृशः पुरा निन्दति नः क्षितीन्दुर्नेत्रश्रियं वीक्ष्य विदर्भजायाः ।
इतीव संचिन्त्य ययुर्विदूरं मृग्योऽध्वकुञ्जेषु सुखं निषण्णाः ॥ २७ ॥
उपायनान्यस्य तथोपनिन्ये पदे पदे जानपदो जनौघः ।
कृतोपयोगान्यपि तानि सैन्यैर्यथा न संख्याविषयत्वमीयुः ॥ २८ ॥
मार्गेष्वखिन्नोऽपि चमूचराणां विश्रामहेतोर्वसतीः स भेजे ।
तथाविधानां चरितं न जातु श्रमातिरेकाय समाश्रितानाम् ॥ २९
जवादविज्ञातविलङ्घिताध्वा संचिन्तयन्नेव गुणान्प्रियायाः ।
विदर्भराजस्य पुरोपकण्ठे बबन्ध सेनाशिबिरं नरेन्द्रः ॥ ३० ॥
अत्रान्तरे क्षोणितलादुपेत्य कलिप्रियः कामचरो महर्षिः ।
निवेदयामास विदर्भजायाः स्वयंवरस्यावसरं सुरेभ्यः ॥ ३१ ॥
प्रागेव तस्यामनुबद्धभावाः पुरंदराद्याः ककुभामधीशाः ।
पुरःसरीकृत्य मुनिं तमेव प्रतस्थिरे तां नगरीं विदर्भाम् ॥ ३२ ॥

लावण्यलक्ष्मीजितपञ्चबाणं विलोक्य ते वर्त्मनि वैरसेनिम् ।
विदर्भजायां शिथिलीकृताशाः परस्परं मन्त्रमिमं व्यतेनुः ॥ ३३ ॥

उज्जृम्भते चेतसि तावदेव यूनां मदः कान्तिविशेषजन्मा ।
न यावदक्ष्णोर्विषयत्वमेति विश्वंभरालंकृतिरेष वीरः ॥ ३४ ॥

अस्माभिरेतैरविमृष्य नूनमङ्गीकृतः साहसिकत्वदोषः ।
मोहादनादृत्य नरेन्द्रमेनं भैमीविलोलं यदकारि चेतः ॥ ३५ ॥

अभ्यर्थनाभङ्गपराभवेण नवावतारेण विलज्जमानान् ।
प्रतिप्रयातानवाप्य भैमीं वक्ष्यन्ति किं किं सुरसुभ्रुवो नः ॥ ३६ ॥

अस्माकमप्यत्र यदृच्छयैव निपत्य दृष्टिर्यदि नान्यमेति ।
गुणातिरेकोऽभिनिवेशवत्यास्तदा किमुच्येत विदर्भजायाः ॥ ३७ ॥

अस्माभिरभ्यर्थ्य तदेष एव दमस्वसुर्दूतपदे विधेयः ।
अस्मान्स्तुवन्नेनमपास्य नूनमन्यो हि लज्जाजडतामुपेयात् ॥ ३८ ॥

इत्थं विनिश्चित्य दिवौकसस्ते पृथक्पृथग्व्यञ्जितरूपचिह्नाः ।
आशीर्भिरानन्द्य मुहुः प्रणम्य बद्धाञ्जलिं नैषधमित्यवोचन् ॥ ३९ ॥

तथा प्रसन्नैरपि नांशुपूरैर्मालिन्यमिन्दुर्जगतां क्षिणोति ।
कुलावतंसत्वमुपेयुषस्ते यथा विशुद्धैर्यशसां वितानैः ॥ ४० ॥

आसाद्य पूर्वानपि पार्थिवांस्ते न कश्चिदर्थी विमुखः प्रयातः ।
यशस्त्वसामान्यमिदं त्वदीयं यदर्थिभावं वयमभ्युपेताः ॥ ४१ ॥

कुलानुसारी सुरकार्यसिद्धौ भवादृशानां भवति प्रयत्नः ।
तेनाद्य कुत्रापि समीहितेऽर्थे नियोक्तुमिच्छन्ति दिवौकसस्त्वाम् ॥४२॥

भीमात्मजायाः सविधे तथा त्वमस्मानुपश्लोकय लोकवीर ।
अलंकरोति त्रिदिवं यथेयमेकस्य नः कस्यचिदेत्य हस्तम् ॥ ४३ ॥

तदर्थमर्थी विदितोऽसि वत्स विस्रम्भभूमिस्तदपि त्वमेव ।
निजार्थसिद्धिष्वपि निर्व्यपेक्षाः श्रेयः परेषां घटयन्ति सन्तः ॥ ४४ ॥

प्रतिश्रुतं चेद्भवता तदेवमसंशयं सेत्स्यति वाञ्छितं नः ।
संपाद्यमानं हि महानुभावैः स्पृशन्ति न प्रार्थितमन्तरायाः ॥ ४५ ॥

Pañcanalīya also ... The poet does not want the hero to ... with the other suitors

विधेर्वशात्कार्यविपर्ययेऽपि न तेऽपराधः परिशङ्कनीयः ।
प्रभुर्नियोगापनये नियोक्तुराशास्यसिद्धेः प्रतिभूर्न दूतः ॥ ४६ ॥
नलः सखेदोऽपि गिरं सुराणां सत्त्वातिरेकाद्विदधे तथैव ।
अमुष्य यत्नेन विदर्भजा तु सा निश्चयाद्धारयितुं न शेके ॥ ४७ ॥
सुरास्तु तां निश्चितचित्तवृत्तिं विशुद्धवृत्तं निषधेश्वरं च ।
वरैरुभौ प्रत्यभिनन्द्य भूयो दिवं ययुर्म्लानमुखप्रकाशाः ॥ ४८ ॥
अथात्मजां नैषधसक्तचित्तां निशम्य शश्वन्मुदितोऽपि भीमः ।
दाक्षिण्यमात्रेण नरेश्वराणां स्वयंवरं वर्तयितुं शशास ॥ ४९ ॥
अतो नियुक्तैः प्रभुणा समन्ता(?)दलंकृता सा नगरी विदर्भा ।
मरुद्विलोलैर्निवहैर्ध्वजानां स्वयंवरायाह्वयतीव राज्ञः ॥ ५० ॥
अथानुकूलेऽहनि तत्र मञ्चानास्थाय तस्थुः शतशः क्षितीशाः ।
अनुद्रुता बन्धुवधूजनेन भैमी च तं देशमुपाजगाम ॥ ५१ ॥
अभ्याशभाजोऽपि नृपानपास्य सा नैषधे केवलमुत्सुकासीत् ।
ग्रहेषु सत्स्वप्यपरेषु नूनं विलोकते चन्द्रमसं चकोरी ॥ ५२ ॥
तामन्तिकाद्दूरतरं प्रयान्तीं न केवलं दृष्टिरनुप्रयाता ।
श्वासोष्मणा म्लानमुखप्रभाणां नैसर्गिकी श्रीरपि पार्थिवानाम् ॥ ५३ ॥
नेदीयसो यान्नृपतीनमुञ्चद्वसन्तलक्ष्मीरिव सा कुमारी ।
तेषां तरूणामिव कान्तिरुच्चैरन्तर्निदाघेन जगाम शोषम् ॥ ५४ ॥
आरोप्यमाणा रभसातिरेकाद्गुणेन कर्णान्तिकमागतेन ।
इषुः शरव्यं सुभटोज्झितेव जगाम दृष्टिर्नलमेव तस्याः ॥ ५५ ॥

धात्री कापि विदर्भराजदुहितुर्भ्रूलीलया व्यापृता
पौष्पं दाम विजृम्भमाणपुलके कण्ठे नलस्यार्पयत् ।
अन्येषां तु महीभृतां प्रति मुहुः श्वासोत्तरं ताम्यतां
तापोत्सेकमधत्त चेतसि शरश्रेणी मनोजन्मनः ॥ ५६ ॥

चूडाग्रे पुरविद्विषः समुचिते विन्यस्य लेखां विधो-
र्लब्धां कीर्तिमवृद्ध तां खलु विधिर्भैमीं नलायार्पयन् ।

एतस्याः समवाप्तये प्रणयितां संपाद्य भूमीभुजा-
मन्येषां विषमायुधस्त्वसदृशारम्भापवादं ययौ ॥ ५७ ॥
पौराणामिति वचनं निशम्य हृष्यन्प्रासादं निषधपतिः शनैर्जगाम ।
वैदर्भ्याः परिणयमङ्गलाय भीमः संभारं रचयितुमुत्सुको बभूव ॥५८॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते दमयन्तीस्वयंवरो नाम पञ्चमः सर्गः ।

---

षष्ठः सर्गः ।

अथावरोधेषु विदर्भभूपतेर्वृतं कुमार्या निषधेश्वरं पतिम् ।
निवेदयन्त्यः परिवारसुभ्रुवः समीहितादप्यधिकं प्रपेदिरे ॥ १ ॥
नलेन संबन्धमुपाश्रितं नृपः कुलं स मेने सविशेषमुज्ज्वलम् ।
महार्णवं क्षीरमयं घनात्यये करेण संस्पृष्टमिवामृतद्युतेः ॥ २ ॥
प्रकामगुर्वीमपि संपदं नृपस्तदा स मेने नितरामणीयसीम् ।
नवं हि जामातरमर्चयिष्यतां समृद्धिभाजामपि शङ्कते मनः ॥ ३ ॥
भविष्यतीयं महिषी महीपतेर्नलस्य लोकत्रयविश्रुतौजसः ।
विचिन्तयन्नित्थमपश्यदात्मजां स गौरवस्नेहकरम्बितं तदा ॥ ४ ॥
पुरोहितेनाथ समं द्विजातिभिर्विवाहलग्ने विनिवेदिते शुभे ।
दमस्वसुर्माङ्गलिकेषु कर्मसु न्ययोजयद्बन्धुवधूजनं नृपः ॥ ५ ॥
गृहे गृहे न्यस्तनवीनतोरणा पदे पदेऽलंकृतराजपद्धतिः ।
मुहुर्मुहुर्मूर्छिततूर्यनिःस्वना श्रियं ययौ कामपि सा पुरी तदा ॥ ६ ॥
ततः कुलाचारविदा पुरोधसा कृताधिवासां तनयां महीपतेः ।
विधाय संगीतकमङ्गलं स्त्रियः समेत्य तामस्नपयन्यथाविधि ॥ ७ ॥
निसर्गतः काञ्चनयष्टिसच्छविर्वितन्वती स्नानविधिं नृपात्मजा ।
नकेन काश्मीररसेन रञ्जिता न्यवेदि सौरभ्यभरैर्न तु श्रिया ॥ ८ ॥
ततोऽङ्गनाः क्षौमसमावृतैः करैर्यथायथाम्भःपृषतान्यमार्जयन् ।
तथातथास्याः परिणाहशालिनी बभूव लावण्यमयी तरङ्गिणी ॥ ९ ॥
विडम्बयन्ती कनकं तनुश्रिया सितेन मुक्तामधरेण विद्रुमम् ।
कराङ्गुलीभिः कुरुविन्दमञ्जरीं बभूव भूषान्तरनिःस्पृहेव सा ॥ १० ॥

अनन्तरं स्नानविधेर्नृपात्मजा पिनद्धबालार्कनिभांशुका बभौ ।
घनाम्बुवर्षेण कृताभिषेचना लतेव नीरन्ध्रमुदीर्णपल्लवा ॥ ११ ॥
रराज कालागुरुधूपलिप्सया विधुन्वती कुन्तलभारमायतम् ।
हिरण्मयी मन्मथकेतुयष्टिका मरुच्चलन्नीलनिचोलिकेव सा ॥ १२ ॥
विनिर्मिमाणा करयोर्युगेन सा मनोभिरामां कबरीं कृशोदरी ।
करम्ब्यमाणां करजांशुभिर्निजैरयत्नमेनां विदधे सगर्भकाम् ॥ १३ ॥
स्वभावतः कोकनदानुकारिणौ प्रसाधयन्त्यश्चरणौ दमस्वसुः ।
अलक्तकं वीक्ष्य जितं तयोः श्रिया क्षणं प्रपन्नाः करणीयमुग्धताम् १४
चकार कालाञ्जनलेखयाञ्चिते विलोचने यत्पृथिवीन्द्रनन्दिनी ।
ततस्तयोः श्रीरवतंसताजुषोर्निरास नीलाम्बुजयोस्तुलाकथाम् ॥ १५ ॥
चकार कस्तूरिकया सकौतुकं वधूमुखे यत्तिलकं प्रसाधिका ।
जिगाय तत्कान्तिविशेषसंपदा मधुव्रतं निश्चलमम्बुजे स्थितम् ॥ १६ ॥
ततः कुमारी मुकुरेऽनुबिम्बितं विलोकयामास सकृन्निजं मुखम् ।
मुहुर्मुहुः प्रैक्षत नैषधं तु सा निवेशितं चेतसि मन्मथेषुभिः ॥ १७ ॥
वधूः सदूर्वाङ्कुरमार्द्रकुङ्कुमं करेण यत्कौतुकसूत्रमग्रहीत् ।
हिरण्मयैः स्वैः किरणैर्विराजितं तुलां दधे काञ्चनकङ्कणेन तत् ॥ १८ ॥
वधूर्विवाहोचितवेषपेशलं प्रसाधिता कौतुकसूत्रधारिणी ।
अमन्यतान्तःपुरसुन्दरीजनैरुपस्थिता मङ्गलदेवतेव सा ॥ १९ ॥
अथ प्रयुक्तं निपुणैः प्रसाधकैर्नलोऽपि यं वेषविशेषमग्रहीत् ।
अवर्धयत्तस्य स कान्तिसंपदं तुषारभानोः शरदेव संगमः ॥ २० ॥
निसर्गतो यस्तनुरूपसंपदा बभूव लोकस्य विलोचनोत्सवः ।
दमस्वसुः पाणिपरिग्रहोचिता प्रसाधनश्रीः किमिवास्य वर्ण्यते ॥ २१ ॥
ततो विदर्भाधिपतेः प्रशासनादमात्यमुख्याः सदसि स्थितं नलम् ।
विभो प्रभुर्नः सहितः सुहृज्जनैः प्रतीक्षते त्वामिति संन्यवेदयन् ॥२२॥
अथायमासन्नसमीहितोदयः पुरोधसा संभृतमङ्गलक्रियः ।
समन्ततो बन्धुजनैः समावृतः प्रभुर्विदर्भाधिपतेर्गृहं ययौ ॥ २३ ॥

सलीलमारुह्य मतङ्गजं नलः स्वदेहलीमेव न यावदत्यगात् ।
अमुष्य तावत्पृतनाप्रसारणी विदर्भराजस्य गृहानपूरयत् ॥ २४ ॥
विलोकमानाः पथि नैषधं जनाः परस्परं पीडितदेहयष्टयः ।
अशक्नुवन्तश्चलितुं पदात्पदं हृदा च दृग्भ्यां च परं तमन्वयुः ॥ २५ ॥
स्तनैर्नितम्बैश्च नितान्तपीवरैर्निवार्यमाणेषु समीपवर्तिषु ।
न मध्यभागे तनुमध्यमाः परं निपीडिताः पौरजनावृते पथि ॥ २६ ॥
नरेश्वरे गच्छति राजवर्त्मना वपुःश्रियावर्जितविश्वलोचने ।
इति व्यचेष्टन्त मनोभवाज्ञया निरस्तनारीसुलभत्रपाः स्त्रियः ॥ २७ ॥
पथि प्रयान्तं निषधेन्द्रमीक्षितुं समुत्सुका दृष्टिमधःप्रसारिणीम् ।
तिरोदधत्तुङ्गमुरोजयोर्युगं निनिन्द काचिद्वलभीगता वधूः ॥ २८ ॥
सह स्थिता जीवितबन्धुना परा निरीक्षितुं निर्भरमक्षमा नलम् ।
तदीयदेहप्रतिमाङ्कितं निजं मुहुर्मुहुः प्रैक्षत रत्नकङ्कणम् ॥ २९ ॥
नलस्य कान्त्या हृतमानसापरा वधूर्विधित्सुर्मकरीं कपोलयोः ।
तमेव शश्वल्लिखती ससंभ्रमं सखीजनैः पार्श्वगतैर्न्यषिध्यत ॥ ३० ॥
कयापि मुग्धाङ्गनया नरेश्वरे प्रयाति वातायनसंमुखात्पथः ।
अपाङ्गयोरुत्पलपत्रदीर्घयोरशिक्षि तिर्यक्चलनेषु चातुरी ॥ ३१ ॥
मृगेक्षणा काचन भावनावशाद्विलोकयन्ती निषधेश्वरं पुरः ।
गतेऽपि तस्मिन्परिलङ्घ्य दृक्पथं चिराय नैव स्वगृहं न्यवर्तत ॥ ३२ ॥
वधूर्दृशौ रञ्जयितुं समुत्सका निवेश्य कालाञ्जनमङ्गुलीमुखे ।
त्वरावशान्तः परिलिप्य गण्डयोर्बहिर्गता कापि जनानहासयत् ॥ ३३ ॥
ततः सुधालेपसितं निवेशनं विवेश भीमस्य नलः सुहृद्वृतः ।
ग्रहैः समन्तादुदितैरनुद्रुतं तुषारधामेव शरद्वलाहकम् ॥ ३४ ॥
अथोपयन्तुः प्रणयाभिवृद्धये ननाम कन्या गिरिजां गुरोर्गिरा ।
प्रसाद्य तामेव भृशं समश्नुते वधूजनः श्लाघ्यगुणोऽपि काङ्क्षितम् ॥ ३५ ॥
कुलाङ्गनानामभजद्विधेयतां नलस्तदा माङ्गलिकेषु कर्मसु ।
सतां समाचारमवारितं श्रुतौ श्रुतं प्रपन्ना अपि नोज्झितुं क्षमाः ॥ ३६ ॥

ततो गतः कौतुकवेदिकान्तरं विदर्भराजेन नलः कृतार्चनः ।
समाहितान्तःकरणं समादधे हुताशनं तत्र विवाहसाक्षिणम् ॥ ३७ ॥
नलस्य पाणौ विधिवद्वधूकरं विधाय यावन्न ददौ जलं गुरुः ।
परस्परस्पर्शवशात्तदैव तौ बभूवतुः स्वेदजलैः परिप्लुतौ ॥ ३८ ॥
ततो नलस्य प्रतिपादितः करे विदर्भराजेन दमस्वसुः करः ।
निनिन्द कान्त्या नितरां मनोज्ञया नभस्वतावर्जितमम्बुजेऽम्बुजम् ॥३९॥
हुताशनस्तावुपशिक्षयन्निव प्रदक्षिणप्रक्रमणं वधूवरौ ।
भृशं तथैवाभ्रमयन्मुहुर्मुहुर्निजां शिखां लाजहविर्भिरर्चितः ॥ ४० ॥
वधूर्विवाहानलधूमविक्लवा निमीलयन्ती क्षणमीक्षणद्वयम् ।
चकार कर्णार्पितयोरयत्नतः सपत्नशून्यामसिताब्जयोः श्रियम् ॥ ४१ ॥
नरेश्वरे सप्तपदीविधित्सया करेण भैम्याश्चरणं जिघृक्षति ।
निरीक्ष्य साकूततरङ्गितेक्षणं सखीजनं नम्रमुखी बभूव सा ॥ ४२ ॥
ततः कुमारी गुरुणाभ्युदीरिता समुन्नताक्षी ध्रुवमैक्षताम्बरे ।
नलस्तु तस्या वदनं विभावयन्नमन्यताभ्याशगतं सुधानिधिम् ॥ ४३ ॥
ततो महार्हासनमेकमास्थितौ वितीर्णदायौ कृतमङ्गलाशिषौ ।
विलोक्य जामातरमात्मजां च तां मुदं विदर्भाधिपतिः परां ययौ॥४४॥
विदर्भराजात्मजयान्तिकस्थया नलः श्रियं सातिशयामधारयत् ।
विधुः स्वभावादपि नेत्रदोहदात्किमुच्यते पौर्णिमया समागतः ॥ ४५ ॥
जगुर्यदुच्चैः परिहासपेशलं विलोकयन्त्योऽपि गुरोः कुलाङ्गनाः ।
ततोऽभिशङ्के निषधेन्द्रमीक्षितुं ह्रियोऽपि तासां हृदयाद्बहिर्गताः ॥४६॥
ततः समादाय रविर्दिनश्रियं प्रवृद्धरागश्चरमाचलं ययौ ।
नलश्च पर्याप्तमनोरथोदयः प्रियासखः कौतुकमन्दिरोदरम् ॥ ४७ ॥
गिरां विशेषैः परिहासगर्भितैर्विचेष्टितैश्च स्मरदर्पदीपनैः ।
क्रमान्मृदूद्भावितलज्जया तया निशामनैषीत्प्रियया समं नलः ॥ ४८ ॥
पुरीं विदर्भामधिसंश्रितं जनं निजैश्चरित्रैरनिशं प्रमोदयन् ।
उवास तत्रैव दिनानि कानिचिद्दमस्वसुः प्रेमवशंवदो नलः ॥ ४९ ॥

अथायमामन्त्र्य विदर्भभूभुजं प्रियासहायः शिरसा प्रणम्य च ।
रथं समारुह्य समग्रसैनिकः पुरं प्रतस्थे पृथिवीपुरंदरः ॥ ५० ॥
पथि पथि स पुराण्यतीत्य गच्छन्व्यतनुत शून्यतराणि तानि पौरैः ।
स्वविषय....मपिदूरमन्तमेते नहि विदुस्तदनुप्रयाणलोलाः ॥ ५१ ॥

भैमीविलोकनमहोत्सवसंभ्रमेण
स्रस्तांशुकैः स्तनभरैर्मृगलोचनानाम् ।
रथ्यान्तरेषु पुनरुक्तसुवर्णकुम्भं
शीतांशुवंशतिलकः स्वपुरं विवेश ॥ ५२ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते दमयन्तीपरिणयो नाम षष्ठः सर्गः ।

सप्तमः सर्गः ।

तत्र नैषधमनादृतेन्द्रया भीमराजसुतया सहागतम् ।
मेनिरे गुणविशेषभाजनं नीतियुक्तमिव विक्रमं प्रजाः ॥ १ ॥
अन्वहं नवनवैर्गुणान्तरैस्तावुभौ जनितविस्मयौ मिथः ।
खेलती(?)कुसुमकार्मुकाविव प्रेमवृद्धिमधिकामवापतुः ॥ २ ॥
चापयष्टिरिव शुद्धवंशजा सा गुणेन युयुजे यथा यथा ।
प्रेयसी नरपतेर्दिने दिने नम्रतामुपययौ तथा तथा ॥ ३ ॥
तं कदाचिदुपगम्य भूभुजं भीमराजसुतया सह स्थितम् ।
आयतिं हृदि चिराय चिन्तयन्नित्युवाच वचनं सितच्छदः ॥ ४ ॥
त्वं बृहस्पतिरिवापरः सखे नीतितत्त्वविदुषां पुरःसरः ।
सौहृदं तु मुखरीकरोति मां तेन किंचिदनुशास्मि ते हितम् ॥ ५॥
वारवामनयनामिवावनीं रागिताः कति न भुञ्जते नृपाः ।
एक एव निपुणः स गीयते रागिणी भवति यत्र सा पुनः ॥ ६ ॥
स्वेषु शर्मसु समुज्झितस्पृहाः साधवः परहितानि तन्वते ।
मूर्ध्नि धारयति केन हेतुना मेदिनीमनुदिनं फणीश्वरः ॥ ७ ॥
संपदामधिगमाय कौशलं कस्यचिद्भवति भाग्यशालिनः ।
तादृशः प्रविरलोदयः कृती यस्तु भोक्तुमपि ताश्चिरं क्षमः ॥ ८ ॥

मा स्म गाः क्षणमपि प्रमादितां दुर्बलेष्वपि नरेन्द्र वैरिषु ।
ते हि मत्सरवशंवदीकृताः कैतवेन किल जेतुमीशते ॥ ९ ॥
संपदां समुदयाय भूयसे बीजतां व्रजति रञ्जनं विशाम् ।
तेन तत्र सततं कृतोद्यमः श्रेयसां भवति भाजनं नृपः ॥ १० ॥
देहिनां सुकृतिनां न दुर्लभाः स्वर्णदीपरिसरेषु केलयः ।
त्वादृशेन सुहृदा तु संगतिर्मद्विना जगति केन लभ्यते ॥ ११ ॥
यद्भवेन्न विषयस्तपस्विनां यज्वनां च यदतीव दूरतः ।
प्रीतये मम न तत्पदं विधेर्यत्र नास्ति भवता समागमः ॥ १२ ॥
किं तु भीरुदयतेऽनुजीविनां स्वं नियोगमधिगम्य तिष्ठताम् ।
तेन वोढुमहमम्बुजोद्भवं गन्तुमुत्सुक इवास्मि संप्रति ॥ १३ ॥
तत्र तत्र सुरसिद्धचारणैर्गीयमानममलं यशस्तव ।
मामकं किमपि नोदयिष्यति त्वद्वियोगजनितं मनोज्वरम् ॥ १४ ॥
इत्युदीर्य कृतमौनबन्धनं वाग्भिरेनमभिनन्द्य नैषधः ।
दोर्युगेण परिषस्वजे स खं निर्जगाम तदनुज्ञया खगः ॥ १५ ॥
निर्गते सुहृदि खिन्नमानसं तं विनोदयितुमुत्सुकादिव ।
व्यञ्जयन्निजगुणानृतुस्तदा प्रादुरास सुरभेरनन्तरः ॥ १६ ॥
वीक्ष्य चण्डकिरणस्य रश्मिभिः शुष्यतः क्षितिरुहो निजाश्रयान् ।
झंकृतेन बहुलेन झिल्लिका मुक्तकण्ठमरुदन्मुहुर्मुहुः ॥ १७ ॥
चञ्चरीकपरिसंनिवेशितैः स्वैः प्रसूननिकरैर्निरन्तरा ।
पाटली विगलितच्छदावलिर्नीललोहितमधारयद्वपुः ॥ १८ ॥
मद्भयाद्बहिरलब्धसंश्रयं शैत्यमत्र किल वासरे स्थितम् ।
इत्यवाप्य किमु रोषमूष्मणा गर्भवेश्म रजनीषु जग्रसे ॥ १९ ॥
शङ्कमान इव तिग्मदीधितेर्दुःसहेन महसा पराभवम् ।
नोद्बभार तरसा नवाङ्कुरं पाटलिश्च्युतपुरातनच्छदः ॥ २० ॥
वासरे विरतिभाजि मल्लिका किंचिदुच्छ्वसितकुड्मलानना ।
सुप्तमातपभयादिव स्मरं झंकृतैर्मधुलिहामबोधयत् ॥ २१ ॥

'परिषमिषेवितैः' इति पाठः समुचितः.

Mere poetic Skill

स्वेदबिन्दुनिवहैर्द्विधोदितैरूष्मणः प्रणयिनश्च संनिधेः ।
आर्द्रतां न विजहौ मृगीदृशामङ्गकेषु घनसारकर्दमः ॥ २२ ॥
अङ्गना इव वियोगविक्लवाः खिद्यमानकमलाननश्रियः ।
भेजिरे भवनदीर्घिकास्तदा तानवं नवनवं दिने दिने ॥ २३ ॥ ✓
वल्लभैः सह विहारयोग्यतां सुभ्रुवां समुपगन्तुमुत्सुकाः ।
दीर्घिकाश्चपलमीनराजयो जज्ञिरे तनुतराम्बुसंपदः ॥ २४ ॥
तत्र घर्मसमये विगाढतां याति दुःसहदिनेशरोचिषि ।
भीमराजसुतया सहाभवत्पार्थिवोऽम्भसि विहर्तुमुत्सुकः ॥ २५ ॥
नैषधोऽथ जलकेलिकौतुकाद्भूषणैस्तदुचितैः प्रसाधितः ।
निम्नगामनतिदूरवर्तिनीं कांचिदच्छसलिलां जगाम सः ॥ २६ ॥
दर्शयन्त्य इव नूतनोदयं सर्गमन्यमबलामयं विधेः ।
भीमराजतनयापुरोगमास्तं प्रयान्तमनुजग्मुरङ्गनाः ॥ २७ ॥
प्राप्तसैनिकवृतां विदूरतस्तीरयोरुपवनैर्मनोरमाम् ।
सैकतेषु मणिहर्म्यगर्भितामाससाद सरितं नरेश्वरः ॥ २८ ॥
अम्बुकेलिरकरोद्यथा यथा मन्दतां वपुषि तापसंपदः ।
वृद्धिरेव समभूत्तथा तथा सुभ्रुवां मनसि मन्मथोष्मणः ॥ २९ ॥ ✓
श्लिष्टसूक्ष्मवसनेषु निर्भरं वीचिभिर्विगलितांशुकेषु च ।
व्यक्तकान्तिषु न किंचिदन्तरं योषितां स्तनतटेष्वलक्ष्यत ॥ ३० ॥
अम्बुकेलिभिरपास्तभूषणाः क्षालिताञ्जनतयारुणेक्षणाः ।
रेजिरे विलुलितालकाः स्त्रियो मानवृद्धिविधुरीकृता इव ॥ ३१ ॥
कर्णधारतरुणीभिरास्थितं नौविशेषमधिरुह्य कौतुकात् ।
अन्यभू(अन्वभूत्)प्रणयिनीसखः प्रभुस्तत्र वारिणि विहारसंभ्रमम् ३२
वीक्ष्य वीक्ष्य परितस्तरङ्गिणीरामणीयकमनल्पकौतुकः ।
अन्तरम्बु मणिमण्डपे स्थितः प्रेयसीमिदमिदं जगाद सः ॥ ३३ ॥
भूयोभूयस्तिग्मभानोर्मयूखैस्तापोत्सेकं दुःसहं प्राप्य खिन्नाः ।
छायादम्भादम्बु नादेयमेतद्गाहन्तेऽमी तीरजाः क्ष्मारुहोऽपि ॥३४॥ ✓

Salini

एतासां तव परिवारसुन्दरीणां सौरभ्यं श्वसितसमुद्भवं पिबन्तः।
रोलम्बाः कमलवने नवावतारं वैरस्यं शशिमुखि निर्भरं भजन्ते ॥ ३५॥

आसां विहाररभसेन परिप्लवानां
वामभ्रुवां स्तनतटेषु विचूर्णितोर्मिः।
एषा सरित्तव विलोकनमङ्गलाय
लाजानिवोत्क्षिपति सुन्दरि वारिबिन्दून् ॥ ३६ ॥

आरादसत्रासनकूजत्पृथुकण्ठं
चक्रद्वन्द्वं चञ्चुपुटन्यस्तबिसाग्रम्।
लक्ष्म्या लेशेनानुसरत्यत्र तवेदं
गाढाश्लेषात्त्रोटितहारं स्तनयुग्मम् ॥ ३७ ॥

गतिं त्वदीयामवलोक्य मुग्धे विलज्जमाना इव राजहंसाः।
संबाधमम्भो मदिरेक्षणाभिर्विहाय दूरं तरसा प्रयान्ति ॥ ३८ ॥

मणितानुकारचतुराणि पत्त्रिणां विरुतानि तीरतरुनीडशायिनाम्।
समुदीरयंत्यविरलां कपोलयोः पुलकावलिं सुमुखि वारयोषिताम् ॥३९॥

तरङ्गवातेन विकीर्यमाणैरम्भःपृषद्भिर्मुषितार्कतापाः।
अध्यास्य वानीरनिकुञ्जगर्भे वैदर्भि कूजन्ति शकुन्तयोषाः ॥ ४० ॥

गगनैकदेशमयमास्थितश्चिरं स्थिरदृष्टिरम्भसि निमज्य सत्वरः।
तव सुभ्रु लोचनविलासतस्करं शफरं मुखेन दधदुत्थितः खगः ॥४१॥

इयमिह गलदङ्गरागदृश्यं करजपदं स्तनयोस्तिरोदधाना।
प्रविशति पयसि स्वकण्ठ(दघ्ने) प्रतरणनैपुणशालिनीव बाला ॥ ४२ ॥

वसुसंपदा नियतमत्र विक्रियां तमसः परोऽपि पुरुषः प्रपद्यते।
अरविन्दबन्धुरपि बन्धुराङ्गि यद्दहतीव गाढमरविन्दमंशुभिः ॥ ४३ ॥

आपिञ्जरोभयतटा मृगलोचनाना-
मङ्गच्युतेन घनकुङ्कुमकर्दमेन।
जम्बूरसेन कनकीकृतकूलभागां
जम्बूनदीमनुकरोति तरङ्गिणीनाम् ॥ ४४ ॥

मध्ये व्योम्नः क्रीडतश्चण्डभानोर्भासा विश्वं(विष्वङ्)मूर्छितेषु च्छदेषु ।
छायां दीर्घां मण्डलीकृत्य मूलं संरक्षन्ति क्ष्मारुहस्तीरजाताः ॥ ४५ ॥
प्रतिपदमुपदिश्यमानमार्गः क्षितितिलकः प्रतिहारपालिकाभिः ।
मणिमयमपहाय केलिहर्म्यं व्यहरत वारिणि भीमजासहायः ॥ ४६ ॥
अथ मण्डलबन्धनाभिरामं परिवव्रुः परितः प्रभुं मृगाक्ष्यः ।
स च मध्यगतो रराज तासां परिवेषान्तरमास्थितः शशीव ॥ ४७ ॥
श्लथांशुके वीचिविघट्टनेन वक्षोजयुग्मे परिणद्धरागम् ।
भैमी मुहुस्तोयलवाभिषेकैर्न्यमीलयन्नेत्रयुगं नलस्य ॥ ४८ ॥
परस्परं कुङ्कुमवारिसेचनैर्न केवलं तन्मिथुनं शरीरयोः ।
अमोघपातैः कुसुमेषुसायकैः पुपोष रोषं (तोषं) निबिडं हृदोरपि ॥ ४९ ॥
अथ भास्वति कुङ्कुमारुणाभे चरमक्ष्माधरचूडचुम्बिबिम्बे ।
अधिरुह्य नलः प्रतीरहर्म्यं कृतनेपथ्यविधिः पुरं प्रतस्थे ॥ ५० ॥
अतीत्य सर्वान्नृपतीनुपेतया दिने दिने प्रौढतरानुरागया ।
अरंस्त सोऽत्यर्थमनन्यपूर्वया भुवा विदर्भेन्द्रभुवा च नैषधः ॥ ५१ ॥

आज्ञामप्रतिघातिनीमनुदिनं द्वीपेषु सप्तस्वपि
प्राज्यं राज्यमनभ्रशीतकिरणज्योत्स्नावदातं यशः ।
वैदर्भ्या सह विभ्रमं त्रिजग[ती] यूनां मदोच्छेदिनं
पश्यन्नन्तरसूयया कलुषतां भेजे कलिर्नैषधे ॥ ५२ ॥

पुरंदरपुरःसरेष्वपि सुरेष्वपास्यादरं
स्वयंवरमहोत्सवे तमवृणोद्यदा भीमजा ।
ततः प्रभृति निर्भरं स हि बभार तस्मिन्रुषं
परोन्नतिषु मत्सरः सहज एव पापात्मनाम् ॥ ५३ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते निदाघवर्णनो नाम सप्तमः सर्गः ।

## अष्टमः सर्गः ।

सहस्राक्षमुखैर्देवैर्निषिद्धोऽपि सहस्रधा ।
पुपोष नैषधे रोषं कलिः कलुषिताशयः ॥ १ ॥

अथ तस्यापकाराय निकारं हृदि चिन्तयन् ।
समाधिव्याजमास्थाय किंचिन्मीलितलोचनः ॥ २ ॥
दग्धस्थाणुरिव श्यामः कृष्णाजिनपरिच्छदः ।
प्राप्तः शरीरसंबन्धं साक्षादिव तमोगुणः ॥ ३ ॥
ज्वालाः क्रोधानलस्येव हृदयान्निर्गता बहिः ।
पद्मकिंजल्कपिङ्गाभाः शिरसा धारयञ्जटाः ॥ ४ ॥
सहायं द्वापरं कृत्वा कलिस्तापसवेषधृक् ।
भ्रातरं निषधेन्द्रस्य प्रपेदे पुष्करं नृपम् ॥ ५ ॥ (कालापकम्)
इयेष सफलां कर्तुं स तेनैव निजां रुषम् ।
आमयो वैरबन्धश्च कुलजः किल दारुणः ॥ ६ ॥
यथाविधि तमभ्यर्च्य पुष्करश्छद्मतापसम् ।
निषण्णमासने वाक्यं विनयादिदमब्रवीत् ॥ ७ ॥
अवैमि पूतमात्मानं दर्शनानुग्रहात्तव ।
न खल्वक्षीणपापानां त्वादृशैः सह संगतिः ॥ ८ ॥
भगवन्कृतकृत्योऽस्मि त्वत्पादपरिचर्यया ।
तथापि श्रेयसे किंचिन्नियोगं प्रार्थयामि ते ॥ ९ ॥
भूयः प्रणम्य शिरसा रचिताञ्जलिबन्धनः ।
स मुनेः पुरतस्तस्थौ विनयो मूर्तिमानिव ॥ १० ॥
दन्तांशुच्छद्मनान्तःस्थं हर्षमुन्मीलयन्निव ।
पुनः प्रत्यभिनन्द्यैनमाशिषेदमुदाहरत् ॥ ११ ॥
इमां विश्वंभरां देवीं चतुरम्भोधिमेखलाम् ।
अनन्यशासनं शाधि मत्प्रसादेन मा चिरम् ॥ १२ ॥
तव सिंहासनस्थस्य पादपीठं दिने दिने ।
नीराजयन्तु राजानश्चूडामणिमरीचिभिः ॥ १३ ॥
अधमर्णमिवावर्णस्तावद्दूषयतीव माम् । deft and effective expr. force
त्वद्भक्तेः सदृशीं लक्ष्मीं यावन्नावर्जयामि ताम् ॥ १४ ॥

किं तु दोर्दण्डदर्पेण निर्जित्य पृथिवीभुजः ।
भुनक्ति पृथिवीं कृत्स्नामेक एवाद्य नैषधः ॥ १५ ॥
नक्षत्राणीव तिग्मांशोः क्षत्राण्येतस्य तेजसा ।
अन्तरेण रणारम्भं निश्चिनुप्वात्मवैभवम् ॥ १६ ॥
निर्जित्य मदुपायेन निरपायेन नैषधम् ।
दुरासदां समासाद्य श्रियं श्रेयान्कुले भव ॥ १७ ॥
पुरा पुरारिमाराध्य प्रसादाभिमुखं ततः ।
विद्याक्षहृदयं नाम मया लब्धा गृहाण ताम् ॥ १८ ॥
तदक्षहृदयं नाम विद्धि संपादनं श्रियः ।
विदित्वैतेन दीव्यन्तः संसेव्यन्ते स्वयं श्रिया ॥ १९ ॥
मादृशानां प्रसादस्य नास्ति पुष्कर दुस्तरम् ।
तथापि पौरुषं किंचिद्राजँल्लक्ष्मीरपेक्षते ॥ २० ॥
इत्युदीर्याभवन्मौनी मुनिवेषाश्रितः कलिः ।
पुष्करस्तु प्रणम्यैनमिदमूचे कृताञ्जलिः ॥ २१ ॥
भगवन्भागधेयानि फलबन्धोन्मुखानि मे ।
त्वादृशस्तपसां राशेः प्रसादो यदभून्मयि ॥ २२ ॥
यन्मे स्फुरति कार्येऽस्मिंस्तदार्येणावधार्यताम् ।
नापैति सहसा बुद्धिर्गहना नीतिवर्त्मनः ॥ २३ ॥
क्षेमं नाक्षविनोदेन निषधेन्द्रस्य वञ्चनम् ।
मृणालेन मदान्धस्य सिन्धुरस्येव बन्धनम् ॥ २४ ॥
धुरि च्छागो महोक्षस्य बालिशेन नियोजितः ।
नैव क्षमेत तां वोढुं केवलं क्षीयते स्वयम् ॥ २५ ॥
फणीन्द्रस्य फणारत्नं मांसमास्यस्थितं हरेः ।
साम्राज्यं निषधेन्द्रस्य को जिहीर्षति कैतवात् ॥ २६ ॥
मादृशः कैतवेनापि नैषधं यदि जेष्यति ।
तदात्येष्यति दर्पेण मृगेन्द्रं मृगवञ्चकः ॥ २७ ॥

माद्यन्तः पक्षलाभेन संप्राप्य पदमुन्नतम् ।
क्षुद्राः क्षिप्रं विनश्यन्ति प्रावृषीव पिपीलिकाः ॥ २८ ॥
साहसे वर्तमानस्य विपदः स्युः पदे पदे ।
सदृशं चेष्टमानस्य स्वयं लक्ष्मीः प्रसीदति ॥ २९ ॥
समारभेत यो वैरं वैरशून्ये बलीयसि ।
सुखसुप्तं स पारीन्द्रं पादाघातैः प्रबोधयेत् ॥ ३० ॥
सिद्धिर्दैववराधीना कर्मणां तत्र कः प्रभुः ।
पश्यन्नप्यसतां मार्गं पुरुषस्त्वेति वाच्यताम् ॥ ३१ ॥
इति निष्पौरुषोन्मेषं प्रेक्षमाणः स पुष्करम् ।
कलिः कलितसंरोधः प्रत्यवोचदिदं वचः ॥ ३२ ॥
नीत्याचक्षुष्मतां याति दृष्ट्यान्धः सरणिं सताम् ।
नीयमानोऽपि बुद्ध्यान्धः संमुह्यति पदे पदे ॥ ३३ ॥
साध्या श्रीः साधनं क्रीडा सिद्ध्यै च प्रतिभूरहम् ।
तथापि तव कातर्यमाश्चर्यं वितनोति मे ॥ ३४ ॥
राजन्यापसदाः केचिद्भवन्ति युधि भीरवः ।
स्वयं प्राप्तां श्रियं भोक्तुं भीरुरेको भवान्भुवि ॥ ३५ ॥
इत्थमुत्साहशून्येऽपि श्रीस्त्वयि प्रणयोन्मुखी ।
वधूर्बद्धानुरागेव क्लीबे यास्यति हास्यताम् ॥ ३६ ॥
अपि तेजस्विनां तेजो वर्धते नोद्यमं विना ।
आरूढस्योदयं शैलं रवेः प्रसरति प्रभा ॥ ३७ ॥
स्वीकारे मत्प्रसादस्य दुर्लभस्य जगत्त्रये ।
कुतर्कैर्मत्सरीभूय मौर्ख्यमाविष्कृतं त्वया ॥ ३८ ॥
मम तोषश्च रोषश्च संकल्पे कल्पभूरुहः ।
सद्य एव फलं धत्ते न कामं(कालं) क्षेप्तुमीश्वरः ॥ ३९ ॥
अदश्चराचरं विश्वं विनिवर्तयितुं क्षमाम् ।
विद्धि मां देवतां कांचिन्नाहं साधारणो मुनिः ॥ ४० ॥

रत्नानामिव पाथोधिं गुणानामाकरं परम् ।
अपथे नैषधं नेतुं मद्विना कस्य साहसम् ॥ ४१ ॥
धीराः कीरा इवाम्नायं शृण्वन्ति च पठन्ति च ।
संमुह्यन्ति मया क्लिष्टास्तदादिष्टानुवर्तने ॥ ४२ ॥
शृण्वन्तोऽपि न शृण्वन्ति हितमुक्तं हितैषिभिः ।
पश्यन्तोऽपि न पश्यन्ति मयाविष्टाः स्थितिं सताम् ॥ ४३ ॥
अहं हृदयमाविश्य निषधानामधीशितुः ।
तथा संमोहयिष्यामि यथा स्यात्त्वद्वशंवदः ॥ ४४ ॥
महान्तोऽपि पराधीनाः श्रेयसः स्युः पराङ्मुखाः ।
आलानं स्वस्य बन्धाय स्वयमर्पयति द्विपः ॥ ४५ ॥
तवाभिशरणौत्सुक्यात्प्रहिता विजयश्रिया ।
दूतिकेवाक्षशारीयं चरिष्यति गृहे गृहे ॥ ४६ ॥
निरुद्धा ताडिताप्येषा तावद्भवति न स्थिरा ।
सा त्वदीयं करं प्राप्य यावन्नायाति निर्वृतिम् ॥ ४७ ॥
सुहृन्मे द्वापरो नाम कृशानोरिव मारुतः ।
अक्षानेतानधिष्ठाय श्रेयस्ते साधयिष्यति ॥ ४८ ॥
इति व्याहृत्य सहसा रूपं कलिरदर्शयत् ।
असंस्पृष्टमहीपृष्ठो निरुन्मेषनिमेषदृक् ॥ ४९ ॥
तं प्रणम्य कलिं साक्षादक्षांश्चादाय पुष्करः ।
प्रतस्थे निषधेन्द्रस्य मन्दिरं देवनोत्सुकः ॥ ५० ॥
लुठतां पादयोर्मूले निर्जितानां महीभुजाम् ।
उपदाः प्रतिगृह्णन्तं दृगन्तक्षेपलीलया ॥ ५१ ॥
बन्दिभिर्गीयमानासु निजकीर्तिप्रशस्तिषु ।
किंचिन्मीलितपक्ष्मालिं नम्रीकृतमुखाम्बुजम् ॥ ५२ ॥
परस्परं जिगीषद्भिर्विद्वद्भिर्वादकेलिषु ।
संदेहग्रन्थिभेदाय प्रार्थितावसरं मुहुः ॥ ५३ ॥

युधि प्रत्यर्थिवीराणां प्रापितानां सुरालयम् ।
सचिवैरुपनीतेषु सुतेषु सदयेक्षणम् ॥ ५४ ॥
विध्वस्तविविधाबाधैः पौरैर्जानपदैरपि ।
उपश्लोकितचारित्रं त्रिदशैरिव वासवम् ॥ ५५ ॥
सेवावसरमासाद्य दौवारिकनिवेदितः ।
अध्यासीनं सभासद्म नलं प्रैक्षत पुष्करः ॥ ५६ ॥

(कुलकम्)

स्मरतोऽपि कलेराज्ञां प्रसादक्रोधगर्भिताम् ।
आतन्त्रतोऽपि निकृतिं पुष्करस्य समुद्यमः ॥ ५७ ॥
अपि प्राप्योन्नतिं दूरादभ्याशे निषधेशितुः ।
तरङ्ग इव पाथोधेर्बलोद्देशे व्यशीर्यत ॥ ५८ ॥
प्रणम्य चरणौ मूर्ध्ना निषधेन्द्रस्य पुष्करः ।
उपाहरत्तु पाणिभ्यां शारीं रत्नविनिर्मिताम् ॥ ५९ ॥
दृष्टिर्निषधराजस्य रत्नसारीमवाप्य ताम् ।
वागुरामिव सारङ्गी चलितुं नाभवत्प्रभुः ॥ ६० ॥
इदमन्तरमासाद्य कलिराविश्य नैषधम् ।
निन्ये विधेयतां सद्यः सादीवारुह्य वाजिनम् ॥ ६१ ॥
कलिनात्मनिविष्टेन निरस्तविनयाङ्कुशः ।
अपथे गन्तुमारेभे मदेनेव करी नलः ॥ ६२ ॥
वार्षिकेणाम्बुपूरेण कासार इव नैषधः ।
संदूषिताशयस्तेन प्रसादं सहजं जहौ ॥ ६३ ॥
प्रभामिव सहस्रांशोश्चरमः पृथिवीश्वरः ।
निश्चकर्ष कलिस्तस्य बुद्धिं नैसर्गिकीमपि ॥ ६४ ॥
अर्थेर्व्यापार्य कार्येषु सचिवानुचितान्नलः ।
देवनायोद्यमं चक्रे पुष्करेण समं रहः ॥ ६५ ॥
पारं यान्तीव नौरर्वाक्तीरं प्रति नभस्वता ।
कलिना पुष्करं निन्ये जयश्रीर्नैषधोन्मुखी ॥ ६६ ॥

भैमी च देहयष्टिश्च शून्या भूषणसंपदा ।
द्वे परं समशिष्येतां निषधेन्द्रस्य दीव्यतः ॥ ६७ ॥

करेणुरिव बद्धैव वारिगर्भे भृशाकुला ।
हृतो द्यूतेन राजर्षिर्निवासं पुष्करेऽकरोत् ॥ ६८ ॥

दोर्दण्डलीलया लक्ष्मीं प्रत्याहर्तुमपि क्षमः ।
नैषधः समयाकाङ्क्षी न चक्रे विक्रमोदयम् ॥ ६९ ॥

पुष्करेण जितामूर्वीं स्रजं मूर्ध्नश्च्युतामिव ।
पद्भ्यामपि न संस्प्रष्टुमुत्सेहे निषधेश्वरः ॥ ७० ॥

भुवं पुष्करसात्कृत्वा प्रतस्थे काननं नलः ।
न रज्यति मनः प्रायः सतां परपरिग्रहे ॥ ७१ ॥

अद्य निश्चीयतेऽस्माभिर्व्रीडाशून्यं विधेर्मनः ।
यदेष निषधेन्द्रस्य पदेऽर्पयति पुष्करम् ॥ ७२ ॥

गुणानां स्पृहणीयत्वं भजतेऽद्य विपर्ययम् ।
यदस्यैते समेत्यापि न स्थिरां कुर्वते श्रियम् ॥ ७३ ॥

योषित्प्रोषितनाथेव जीवनं वोज्झिता तनुः
तैस्तैरङ्गैः समग्रापि नगरी नाद्य शोभते ॥ ७४ ॥

नितरामपिद्धं नः कष्टं द्राघीयसायुषा ।
यदद्य निषधेन्द्रस्य विरहोऽपि सहिष्यते ॥ ७५ ॥

सुमभ्युन्नतदण्डेऽपि न्यस्यन्तीपुष्करे पदम् ।
धरित्री सह तेनैव भृशं भङ्गमुपैष्यति ॥ ७६ ॥

प्रत्यग्रा मालतीमाला शुनः कण्ठ इवार्पिता ।
श्रीरियं निषधेन्द्रस्य पुष्करे शोच्यतां गता ॥ ७७ ॥

नलस्य निर्जितारातेर्युधि द्यूते पराजयः ।
जनस्य लङ्घिताम्भोधेर्गोष्पदे मज्जनोद्यमः ॥ ७८ ॥

यस्य बाहुतरुच्छायां जगदाश्रित्य जीवति ।
स कथं श्रयतु च्छायां कानने कस्यचित्तरोः ॥ ७९ ॥

मृगत्वमपि मृग्यं नस्तत्र तत्र वनान्तरे ।
भ्रमणं यत्र यत्रास्य सुलभं स्यादुपासनम् ॥ ८० ॥

इत्थं वाचः सचिवनिवहैर्विक्लवैरुच्यमानाः
श्रावंश्रावं सह दयितया निर्गतः सौधमध्यात् ।
पौरस्त्रीणां नयनगलितैर्निर्भरं बाष्पवर्णं
धारासारैः शमितरजसं राजमार्गं स भेजे ॥ ८१ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते निषधेन्द्रवनगमनो नामाष्टमः सर्गः ।

नवमः सर्गः ।

ततः समृद्धश्रियमप्यपास्य वनं प्रयास्यन्न शुचं स लेभे ।
दैवादुपेतास्वविशेषवृत्ति सतां हि संपत्सु विपत्सु चेतः ॥ १ ॥
तथोन्नतां स्वां पदवीं विहाय वनप्रवेशाय निबद्धरागम् ।
दिनस्य लक्ष्मीरिव तिग्मभानुं विदर्भजा नैषधमन्वयासीत् ॥ २ ॥
अमुञ्चतां तौ मणिभूषणानि नैसर्गिकी श्रीस्तु न तौ मुमोच ।
नोपाधिमन्विच्छति यस्तु बाह्यं प्रेम्णां स एव प्रथिमा समग्रः ॥ ३ ॥
निवार्यमाणोऽप्यनुजीविलोकः सिषेविषुः[1] प्रागिव तं प्रपेदे ।
गुणातिरेकेण वशीकृतानां विपर्ययं याति न जातु चेतः ॥ ४ ॥
राजोचितं वेषमपास्य कृत्स्नमादित्समानौ वनवासयोग्यम् ।
तौ दंपती वीक्षितुमक्षमेव दृष्टिर्जनस्याश्रुभिरावृतासीत् ॥ ५ ॥
नीराज्यते यद्विकचांशुपूरैः किरीटरत्नैर्नमतां नृपाणाम् ।
रथ्यारजोभिः परुषीकृतं तत्तवाङ्घ्रियुग्मं तनुते शुचं नः ॥ ६ ॥
अद्य प्रसादः कुलदेवतानां विपर्ययं कस्य कृते प्रयाति ।
स्पृशन्ति मोघत्वमलब्धपूर्वमाशंसितान्यद्य कथं द्विजानाम् ॥ ७ ॥
मनीषिणां दैवविदां वचःसु विपद्यसे संप्रति संप्रतीतः ।
विलक्षतां बिभ्रति लक्षितानि शुभाशुभानामपि लक्षणानि ॥ ८ ॥

---

1. 'सिसेविषुः' इत्युचितम्, 'स्तौतिण्योरेव—' इति षत्वनियमात्.

washes the form and sentiment ... proper growth fulness, bloom, dignity & perfection. He smooths ruggedness, chastens out and removes unevenness



पुण्यक्रियाणां परिणामभाञ्जि फलानि नो काङ्क्षति कोऽद्य हर्तुम् ।
अनन्यभाजोऽपि जनानपास्य त्वं नाथ येनाद्य वनं प्रयासि ॥ ९ ॥
त्वत्पाणिना पालनलालनानामन्तः स्मरन्तः परिहीनदानाः ।
विषादमेते विनिवेदयन्ति विघूर्णमानैर्नयनैर्गजेन्द्राः ॥ १० ॥
उदीर्णकर्णाः परिमुक्तशष्पाः क्षितिं खुराग्रेण मुहुर्लिखन्तः ।
प्रत्याह्वयन्तीव वनं प्रयान्तं हेषास्वनैस्त्वां निषधेन्द्र वाहाः ॥ ११ ॥
प्रतिष्ठमानं वनवासहेतोस्त्वां वीक्षितुं पौरजनैः समेतैः ।
आकीर्यमाणाप्यभितः पुरीयं शून्येव नाथ प्रतिभासते नः ॥ १२ ॥
कथं त्वमप्यस्य निसर्गजातं वात्सल्यमस्मासु निराकरोषि ।
अस्मानिहोत्सृज्य वनं प्रयान्तमन्वेषि यन्निष्करुणं नरेन्द्रम् ॥ १३ ॥
तथा तथा कुण्ठय कण्टकानामग्राणि तीक्ष्णानि वनस्थलि त्वम् ।
त्वयि भ्रमन्तीं निषधेन्द्रपत्नीं यथा यथा न व्यथयन्ति तानि ॥ १४ ॥
नूनं पुनः पास्यसि नाथ नस्त्वं न दीयतेऽद्यापि हि तेऽनुभावः ।
प्रायोंऽशुमानस्तमुदेति भूयः क्षीणोऽपि वृद्धिं लभते सुधांशुः ॥ १५ ॥
इत्थं गिरः पौरजनैः समेतैर्बाष्पोद्गमव्याकुलमुच्यमानाः ।
यथाभितापाय तयोर्बभूवुरभूत्तथा नाध्वपरिश्रमोऽपि ॥ १६ ॥
आश्वास्य सम्यग्वचनैरुदारैरुदग्रशोकान्विनिवर्त्य पौरान् ।
स प्रान्तरं प्राप समं महिष्या रविश्च मध्यं नभसः प्रपेदे ॥ १७ ॥
रवेः करैस्तापजुषां जनानां तापापनोदाय न मेऽस्ति शक्तिः ।
इतीव लज्जाविधुरा तरूणां छाया भृशं संकुचिता बभूव ॥ १८ ॥
अन्तःपुरस्था निषधेन्द्रपत्नी न प्रागियं मां सकृदप्यपश्यत् ।
इतीव जातानुशयो विवस्वान्भैमीं बबाधेऽभ्यधिकं मयूखैः ॥ १९ ॥
यतो यतश्चण्डरुचिर्मयूखैस्ततापगात्राणि नरेश्वरस्य ।
ततस्ततः खेदवशंवदापि चकार भैमी करमातपत्रम् ॥ २० ॥
उन्मीलयन्तीषु निसर्गरागं विदर्भजायाश्चरणाङ्गुलीषु ।
पथि प्रमृष्टापि भृशं रजोभिरलक्तकश्रीः पुनराविरासीत ॥ २१ ॥

ततो रवेरातपसंभृतैस्तौ घर्मोदबिन्दुस्तबकैश्चिताङ्गौ ।
परस्परं वीक्ष्य निकामखिन्नौ निषेदतुः क्कापि निकुञ्जगर्भे ॥ २२ ॥
स तत्र भैमीमतिमात्रखिन्नां प्रकामदुर्गामटवीं च वीक्ष्य ।
तां प्रापयिष्यन्नगरीं विदर्भामिदं बभाषे वचनं नरेन्द्रः ॥ २३ ॥
शरीरयष्टिर्भवती च नूनमालम्बनं मे हतजीवितस्य ।
तयोस्तु दुःखानुभवाय योग्या पूर्वैव शातोदरि न द्वितीया ॥ २४ ॥
उपस्थिता दुःखपरम्परा मां चिरेण सेवावसरं निरूप्य । artificia
अद्यापि चेन्मामनुवर्तसे त्वं बाधिष्यते रोषवतीव सा त्वाम् ॥ २५ ॥
वैदर्भि दूर्वाङ्कुरदुर्गमासु पद्भ्यां भ्रमन्ती विपिनस्थलीषु ।
त्वं मा कृथाः काननदेवतानां बाष्पाम्बुमोक्षे प्रथमोपदेशम् ॥ २६ ॥
कृतं श्रिया साधु मयानुविष्टा यन्मां परित्यज्य तदैव याता ।
वने वने मामनुवर्तमाना त्वं खिद्यसे सुन्दरि कस्य हेतोः ॥ २७ ॥
जातासि वैदर्भि तदैव शोच्या यदावृणोर्मां त्रिदशानपास्य ।
कल्पद्रुमेभ्यो विमुखी लतेव समाश्रिता तीरतरूं स्रवन्त्याः ॥ २८ ॥
वपुस्तवेदं वनवासकष्टैः शिरीषपुष्पं च रवेर्मयूखैः ।
भृशं परिक्लेशयतोर्विधातुरलक्षि चेतः करुणादरिद्रम् ॥ २९ ॥
तनुस्तवेयं रुचिरा विधातुः स्त्रीसृष्टिशिल्पं सफलीकरोतु ।
इत्थं पुनः क्लेशविशेषयोगाच्चिरार्जितं तस्य यशः क्षिणोति ॥ ३० ॥
चित्रार्पितेभ्योऽपि बिभेषि पूर्वं वनेचरेभ्यो दमयन्ति येभ्यः ।
तैरेव सार्धं विहरिष्यसि त्वं कथं पुलिन्दीव वनस्थलीषु ॥ ३१ ॥
सोपानपङ्क्तिष्वपि खेदिनी या मदंसविन्यस्तभुजं प्रयासि ।
सा त्वं कथं मार्गरुधां गिरीणामुल्लङ्घनायोद्यममातनोषि ॥ ३२ ॥
कुतूहलादङ्गनमल्लिकानामुच्छिद्य पुष्पाण्यपि खिद्यते यः ।
फलं च मूलं च वनेषु हर्तुं स एव पाणिः क्षमतां कथं ते ॥ ३३ ॥
वनस्थलीयं मृगयाविहारे सहस्रकृत्वः परिशीलिता मे ।
निरूपितं यन्न मया पुरासीत्तदेकमप्यत्र पदं तदस्ति ॥ ३४ ॥

पुरश्चकोराक्षि विलोकय त्वं य एष दीर्घः सरलश्च पन्थाः ।
सिप्रातरङ्गैः परिरभ्यमाणां पुण्यामवन्तीमयमभ्युपैति ॥ ३५ ॥
तस्यां महाकालकृतास्पदस्य देहार्धतां शूलभृतः प्रपन्नाम् ।
आराध्य गौरीं व्रज दक्षिणाशां दिदृक्षसे चेद्गिरिमृक्षवन्तम् ॥ ३६ ॥
खर्वीकृतं कुम्भसमुद्भवेन विलङ्घ्य रेवाप्रभवं नगेन्द्रम् ।
विगाह्य वैदर्भि पयः पयोष्ण्यास्त्वमुष्णमध्वश्रमजं जहीहि ॥ ३७ ॥
ततः प्रिये नातिदवीयसीषु कचित्कचित्काननगर्भितासु ।
स्थलीषु नेत्रातिथितां नयस्व खुराग्रचिह्नानि तुरंगमाणाम् ॥ ३८ ॥
विषाणिनश्छिन्नविषाणकोणाः शिखण्डिनः खण्डितपुच्छभागाः ।
गोत्रे वराहाः कलितव्रणाश्च यास्यन्ति ते लोचनगोचरत्वम् ॥ ३९ ॥
भित्त्वापि सत्त्वान्यविमुच्य वेगं स्कन्धे निमग्नानवनीरुहाणाम् ।
शिलीमुखान्काञ्चनचित्रपुङ्खान्वीक्षस्व मुग्धे मुखमुन्नमय्य ॥ ४० ॥
पुङ्खेषु तेषां कनकद्रवेण न्यस्ताक्षरं नाम तवाग्रजस्य ।
निवर्तयन्ती वरवर्णिनि त्वं नेदीयसीं विद्धि पुरीं विदर्भाम् ॥ ४१ ॥
ततस्तनूकृत्य मनोभितापं पुरीं प्रयान्त्याः कतिचित्पदानि ।
अभ्यर्णमायास्यति कर्णयोस्ते मञ्जीरशिञ्जामधुरो निनादः ॥ ४२ ॥
जिज्ञासमाना प्रभवं तदीयं व्यापारयन्ती नयने समन्तात् ।
स्वच्छन्दकूजत्कलहंसमालां सरोवरां द्रक्ष्यसि सुभ्रु तापीम् ॥ ४३ ॥
तस्याश्च तीरादविदूर एव तपस्विनामाश्रमसंनिवेशः ।
संपर्कमासाद्य परस्परं ये स्वं पावनत्वं परिवर्धयन्ति ॥ ४४ ॥
तानभ्युपेत्य प्रयतान्प्रयत्नात्तपोधनानां प्रणिपत्य पादान् ।
प्रत्यर्चिता तैः कतिचिद्दिनानि चिरं पथः क्लान्तिमपाकुरुष्व ॥ ४५ ॥
त्वां वीक्ष्य वैदर्भि विशुद्धवृत्तां तपस्विनस्ते करुणोपपन्नाः ।
संप्रापयिष्यन्ति पुरीं विदर्भां दोर्भ्यां पितुस्ते परिरक्ष्यमाणाम् ॥ ४६ ॥
अहं तु तीर्थेषु विशुद्धदेहः प्रसाद्य दैवं विपरीतवृत्ति ।
कालान्तरे नातिविलम्बभाजि भूयः प्रपत्स्ये भवतीं श्रियं च ॥ ४७ ॥

तैस्तैर्गुणैः संवरणाधृतेन त्वत्प्रेमसूत्रेण विकृष्यमाणम् ।
दूरस्थितस्यापि विधेर्वशान्मे मनस्तु मुग्धाक्षि न मोक्ष्यति त्वाम् ॥४८॥
इत्थं नरेन्द्रस्य गिरो निशम्य निजाङ्घ्रिमूले विनिवेशिताक्षी ।
बाष्पाम्बुभिः क्लिन्नकपोलपाली विदर्भजा प्राञ्जलिरित्यवादीत् ॥ ४९ ॥
धिगस्तु मां वेत्सि नरेन्द्र यस्यास्त्वत्तोऽपि गाढं प्रणयं शरीरे ।
इत्थं न चेदिच्छसि कस्य हेतोर्गृहेषु भीमस्य निवासनं मे ॥ ५० ॥
अयि त्वदाज्ञापरिमोक्षजन्मा धुनोतु मामेष नवापवादः ।
एकाकिनः काननमाश्रितस्य नाराधनं ते परिमोक्तुमीशे ॥ ५१ ॥
पुरार्जितानां बत दुष्कृतानां सुदुष्करं नाम न किंचिदस्ति ।
वक्ता त्वमासीर्वचसां यदेषामाकर्णयन्ती हतजीविताहम् ॥ ५२ ॥
इति ब्रुवाणैव नरेन्द्रपत्नी विलुप्तसंज्ञा निपपात भूमौ ।
ततो गिरः शुश्रुविरे समन्तात्कृपावतीनां वनदेवतानाम् ॥ ५३ ॥
नूनं जनः स्वां मतिमुज्झहाति क्लेशातिभारैरपि पीड्यमानः ।
वैसद्वनान्तेषु यतस्त्वमीश भैमीवियोगे कृतमाहमोऽसि ॥ ५४ ॥
नव्यो नृपश्रीपरिभोगभङ्गस्ततोऽप्यसह्यो वनवासखेदः ।
तत्रापि चेद्वां भविता वियोगः सोऽयं क्षते क्षाररजोनिपातः ॥ ५५ ॥
त्वया विना नैषध भीमजेयं कथं प्रपद्येत पुरीं विदर्भाम् ।
न चन्द्रिका चन्द्रमसं विहाय विहायसि द्योतितुमुत्सहेत ॥ ५६ ॥
स्वदेहयष्टेरुपलालनार्थं कथं नु संत्यक्ष्यति भीमजा त्वाम् ।
को नाम शुक्तेः परिरक्षणाय चिन्तामणिं पादगतं जहाति ॥ ५७ ॥
विपद्गतं त्वामपहाय भैमी कथं विदर्भां पुरमभ्युपैतु ।
कैाश्मीरमुत्सृज्य निदाघतप्तं छायां तरोः किं शफरी प्रयाति ॥ ५८ ॥
त्वया नराधीश निराकृतापि न मुञ्चतीयं चरणान्तिकं ते ।
श्रीखण्डभूमीधरमन्तरेण क्व दृश्यतेऽन्यत्र पटीरवल्ली ॥ ५९ ॥

१. 'वसन्' इति स्यात्. २. 'काश्मीरं पुष्परमूलम्' इति तु व्यक्तम्.

तदेषु मास्मद्वचनेषु राजन्ननादरो भूत्सविधेऽस्त्वियं ते ।
विलोकनेनापि परस्परस्य शोकोर्मयो वां मसृणीभवन्तु ॥ ६० ॥
ततो नलः स्वांशुकपल्लवेन संवीज्य बाष्पाम्बुतरङ्गिताक्षः ।
क्रमेण संज्ञामुपजग्मुषीं तामारोपयन्नङ्क इदं बभाषे ॥ ६१ ॥
असह्यमप्यत्र मया यदुक्तं त्वं विद्धि वैदर्भि न मे तदागः ।
इयं तव क्लेशपरम्परैव व्यधत्त मौखर्यमिदं त्वदीयम्[1] ॥ ६२ ॥
जहासि चेन्नाभिनिवेशमित्थं प्रतिश्रुतं चण्डि तदीप्सितं ते ।
स्वप्नेऽपि नोवाभवितुं[2] प्रभुर्मे भीरु त्वदिच्छापरिपन्थिभावः ॥ ६३ ॥
कुलानुरागिण्यपि राजलक्ष्मीर्निष्कासिता निष्करुणेन येन ।
शठः कथं नाम विधिः स एव मदन्तकस्थां[3] विसहिष्यते त्वाम् ॥ ६४ ॥
तथापि निर्बन्धवती यदि त्वं मनोरथस्ते सफलस्तदास्तु ।
अकाण्डचण्डानलनिर्विशेषाः प्रत्यर्थिनः स्युर्यदि नान्तरायाः ॥ ६५ ॥
इत्थं नलस्तामनुशास्य बालामस्ताचलं याति दिनाधिनाथे ।
आसाद्य शीतं गिरिनिर्झराम्बु दिनान्तसंध्यां विधिवद्व्यधत्त ॥ ६६ ॥
गुञ्जास्रजः कण्ठतटीजुषोऽपि संगोपयन्ती शबराङ्गनानाम् ।
विजृम्भयन्ती पिशिताशनानामसंभ्रमं वारिषु निर्मलेषु ॥ ६७ ॥
निकृन्ततीवोन्मदसारसानां शिरांसि कासारतटाश्रितानाम् ।
विचूर्णयन्तीव शुकावलीनां चञ्चूः कुलायद्रुमसंमुखीनाम् ॥ ६८ ॥
शृङ्गारयन्तीव मतङ्गजानां मुखानि सिन्दूररजोभरेण ।
पाण्डुच्छदानामिव पल्लवौघमुल्लासयन्तीव महीरुहाणाम् ॥ ६९ ॥
प्रसूयमानेव जवाप्रसूनैः संवर्धमानेव मुखैः कपीनाम् ।
बालप्रवालप्रतिमल्लरोचिर्दिनान्तसंध्या जगतीमरुद्ध ॥ ७० ॥
(कालापकम्)

कुञ्जेभ्यः शतशो निपत्य पृषतैराच्छन्नमूर्वीतलं
संध्यासु प्रसृतारुणाभ्रमुडुभिः किर्मीरितं व्योम च ।

१. 'मदीयम्' इति स्यात्. २. पराभवं दातुम्. ३. 'मदन्तिकस्थाम्' इति तूचितम्.

Canto IX perhaps a fair [illegible] general average of the poem. — more of effort and less of inspiration



काले तत्र दिनक्षपाविरहिते तुल्यामवस्थां गतं
वैदर्भ्या सह नेत्रयोर्विषयतां निन्ये विशामीश्वरः ॥ ७१ ॥
अथ समजनि संध्या भिद्यमाना तमिस्रै-
र्दरपरिणतजम्बूराजिनीलारुणश्रीः।
अविरलमुदयद्भिस्तारकाचक्रवालैः
सपदि गगनलक्ष्मीश्चित्रितेवोल्ललास ॥ ७२ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते वनपरिभ्रमणो नाम नवमः सर्गः।

## दशमः सर्गः।

अत्रान्तरे घनतमालनिकुञ्जलीनै-
र्निष्पीड्यमानमवलोक्य नभस्तमोभिः।
प्राग्वासनावशतया वनवासखेदं
विस्मृत्य संभ्रमवतीदमुवाच भैमी ॥ १ ॥
सख्यः कथं कथमहो शशिदीर्घिकाभि-
र्निःसारयन्ति मम केलिनिकेतनानि।
एतानि कोकिलकदम्बमलीमसानि
लुम्पन्तु लोचनपथं परितस्तमांसि ॥ २ ॥
संपादयन्त्वगुरुधूपपरम्पराभिः
क्रीडागृहाण्यसितकाण्डपटावृतानि।
किं चाम्बरे मणिमयाभरणांशुजालै-
रुज्जृम्भितैर्विरचयन्तु वितानलक्ष्मीम् ॥ ३ ॥
आच्छादयन्तु रजसा घनसारजेन
केलीसरःपरिसरं रभसा वयस्याः।
अस्मिन्भविष्यति यथा शिशिरावदातै-
श्चन्द्रांशुभिः परिचयः पुनरुच्यमानः ॥ ४ ॥
सिञ्चन्तु चन्दनरसैरनुधूपवासं
रङ्गाङ्गनानि परितः परिचारयोषाः।

-the Contrast method to emphasise the pathos.



संगीतमङ्गलविधेरवतारणाय
　सज्जीभवन्तु तरसा निपुणास्तरुण्यः ॥ ५ ॥

इत्थं दिनान्तविधिषु त्वरितां विलोक्य
　प्रासादभाजमिव तत्र नरेन्द्रपत्नीम् ।
अर्चिर्मिषात्तत इतः स्फुरदोषधीनां
　शोकानलं वनभुवः प्रथयांबभूवुः ॥ ६ ॥

इन्दुस्ततोऽन्धतमसाम्बुनिधौ निमग्नं
　विष्वक्करैः प्रसृमरैर्जगदुज्जहार ।
भैम्यास्तथा श्रमसुदीर्णमपाचिकीर्षु-
　स्तां नैषधश्च गिरमित्थमुदाजहार ॥ ७ ॥

नैसर्गिकं मनसि भैमि निधेहि धैर्य-
　मित्थं प्रलापविधुरा पुनरेव मा भूः ।
आरोपितं श्रुतिपथे विपदाकुलानां
　मर्माणि कृन्तति सुखं हि पुरानुभूतम् ॥ ८ ॥

आमोदसंपदिव चन्दनपादपस्य
　शाखाकरैर्दिनकृतः परिपीतसारम् ।
त्वां देवि दुःखनिवहैरभितप्यमानां
　नाद्यापि मुञ्चति कथं ननु वासनेयम् ॥ ९ ॥

अन्तर्दधत्स्फुरदसारकुरङ्गलक्ष्म
　बिम्बं विधोः स्फुरति वारिणि निर्झरेऽस्मिन् ।
मध्ये निवेशितकुरङ्गमदाम्बु मुग्धे
　ज्योतीरसाश्म रचितं ननु भाजनं ते ॥ १० ॥

श्वेतीकृता सितरुचः किरणैरदूरे
　संदृश्यते शिखरिणः शिखरस्थलीयम् ।
सायंतनैर्विचकिलैः परितः प्रकीर्णा
　नैषा प्रिये नवसुधा तव चन्द्रशाला ॥ ११ ॥

एताः पुलिन्दवनिताः प्रतिजातिपल्ली-
राखेटकप्रणयिभिर्दयितैर्नियुक्ताः ।
वीक्ष्य क्षणं समुचितं परिकर्मणस्ते
प्राप्ताः ससंभ्रमपदं न पुनर्वयस्याः ॥ १२ ॥

King for opportunity to serve you

संगीतसद्मसु विभावितरागभेदं
नोद्गीयते सरभसं तव गीतिकाभिः ।
एष ध्वनिस्तु तलिनोदरि कीचकानां
संमूर्छितः श्रवणयोरुपकण्ठमेति ॥ १३ ॥

आकीर्यते सुमनसां विपिनोद्भवाना-
मामोद एष मदिराक्षि समीरणेन ।
आलीजनैस्तव निषिद्धमधुव्रतानां
क्रीडागृहाङ्गनभुवां न तु मल्लिकानाम् ॥ १४ ॥

इत्थं वचोभिरसकृत्प्रतिपाद्यमानै-
र्भैमी प्रबोधमुपलभ्य न किंचिदूचे ।
सा केवलं किसलयैर्मृदुलैस्तरूणा-
मातस्तरे वसुमतीं शयनाय राज्ञः ॥ १५ ॥

आपूर्य गर्जितभरेण निकुञ्जगर्भा-
नाविर्भवत्यभिमृगं क्षुधिते तरक्षौ ।
सत्त्वं किमेतदिति भीमजयाभिपृष्टः
प्रत्युत्तरार्पणविधौ नृपतिर्जडोऽभूत् ॥ १६ ॥

कुर्वत्सु भैरवरवानथ फेरवेषु
प्रादुर्भवत्सु च पुरः पिशिताशनेषु ।
कर्णौ च लोचनयुगं च विदर्भजायाः
सव्याजमाशु रुरुधे नृपतिः कराभ्याम् ॥ १७

निद्राविघूर्णितदृशः परिमण्डलानि
देहैर्विधाय परिपुञ्जितपश्चिमार्धे ।

सौहित्यसंभृतमुदः सुषुपुः स्थलीषु
रोमन्थमन्थरचलद्वदनाः कुरङ्गाः ॥ १८ ॥
आलोक्य तन्मिथुनमास्थितदौर्मनस्यं
निश्चित्य निष्फलमिव स्वगुणप्रकर्षम् ।
अर्धोपभुक्तमधुभिर्मधुपैः सहैव
शेफालिकाः सपदि भूमितले निपेतुः ॥ १९ ॥
वाचालिताः प्रति मुहुर्वयसां विरावैः
खद्योतराजरुचिभिः कलितप्रदीपाः ।
तस्मिन्वने प्रतिभये रजनीमशेषा-
मारक्षकत्वमनयोरभजन्निकुञ्जाः ॥ २० ॥
शून्यं वनोदरमिदं वनितासहायः
क्ष्मावल्लभोऽयमिह नाभ्युचितस्य सेवा ।
इत्थं विचिन्तनपरेव दृशोर्नलस्य
निद्रा निशि क्षणमपि प्रणयं न भेजे ॥ २१ ॥
क्लान्तासि काननभुवः परिलङ्घ्य भैमि
नेत्रे निमीलय मुहूर्तमुपैतु निद्रा ।
वेत्सि त्वमेव निषधेश्वर यत्किलैषा
त्वामेव पूर्वमुपसर्पति मां न जातु ॥ २२ ॥
इत्थं तयोः किसलयास्तरणेऽनुवेल-
मभ्यर्थनं विदधतोरितरेतरस्य ।
दीर्घं प्रजागरमुदीक्षितुमक्षमेव
द्रागेव सा परिणतिं रजनी जगाम ॥ २३ ॥
अत्रान्तरे किसलयास्तरणं विहाय
प्रत्यूषकृत्यमखिलं विधिवद्विधाय ।
क्षोणीपतिर्विमनसं वनवासखेदै-
र्भैमीं विनोदयितुमित्थमुदाजहार ॥ २४ ॥

आलोकमण्डलनिरस्तघनान्धकारं
दिक्चक्रवालमवलोक्य पतत्रिणोऽमी ।
स्वेच्छाविहारतरलाः परितः प्रयातुं
गच्छन्ति कूजितमिषेण कुलायवृक्षात् ॥ २५ ॥

खिन्नानि रात्रिमखिलां विरहज्वरेण
प्रातः परस्परविलोकनलालसानि ।
एतानि चक्रमिथुनानि बिसाङ्कुराग्रं
नास्वादयन्ति न पिबन्ति च निर्झराम्भः ॥ २६ ॥

एतानि सुन्दरि तुषारपृषन्ति भान्ति
भानोः करैरभिनवैररुणीकृतानि ।
गुञ्जाधियाङ्गुलिमुखं विनिवेश्य येषु
वैलक्ष्यमाशु कलयन्ति पुलिन्दयोषाः ॥ २७ ॥

एतेऽधिरुह्य शिखराणि महीरुहाणां
बालातपग्रहणलोलधियो मयूराः ।
प्रालेयबिन्दुजटिलान्परिवर्त्य कण्ठां-
श्चञ्चूपुटैर्विरलयन्ति कलापभारान् ॥ २८ ॥

बालातपे वलितपृष्ठमितः कपीनां
कण्डूयनं विदधतामितरेतरस्य ।
लाङ्गूलयष्टिभिरधः परिलम्बिताभि-
रेताः प्ररोहजटिला इव भान्ति शाखाः ॥ २९ ॥

पानाय निर्झरजलान्यशनाय काले
मूलानि कान्यपि फलानि च पादपानाम् ।
पत्राणि तल्पविषये दिवसावसाने
तौ दंपती जगृहतुर्विपिनोदरेषु ॥ ३० ॥

इत्थं तयोर्विदधतोरितरेतरस्य
संभावनैः शिथिलितादृशुचोः क्रमेण ।

जग्मुर्दिनानि कतिचित्कुपितः कलिस्तु
 नैतावतापि परिपूर्णमनोरथोऽभूत् ॥ ३१ ॥
शून्यं तडागमिव तोयसमुद्गमेन
 वन्ध्यं महिरुहमिव प्रसवोदयेन ।
स्वं मत्सरं कलिरनर्थकमेव मेने
 भैमीसखे चरति राजनि काननेऽपि ॥ ३२ ॥

स द्वापरेण सुहृदा सह मन्त्रयित्वा
 भेजे विहङ्गतनुमञ्चितहेमपक्षम् ।
तस्यानुरूपमपरोऽपि वपुः प्रपेदे
 सख्यं हि तुल्यचरितेषु चिरानुबन्धि ॥ ३३ ॥

तौ पत्रिणौ मरकतेन कृतोत्तमाङ्गौ
 काश्मीरजासुपरिकल्पितकण्ठभागौ ।
मुक्ताप्रवालमणिनिर्मितपृष्ठपक्षौ
 स्निग्धेन्द्रनीलशकलाङ्कितपुच्छगुच्छौ ॥ ३४ ॥

चञ्चूपुटं च कुरुविन्दमयं दधानौ
 शेषं वपुः कनककर्बुरितं वहन्तौ ।
संचेरतुस्तरुषु लोचनगोचरेषु
 विश्लेषणाय रसिकौ मिथुनस्य तस्य ॥ ३५ ॥

निष्पन्दलोचनमुदञ्चितकर्णशुक्ति
 स्तोकावलीढनवपल्लवगर्भितास्यम् ।
तस्थुर्निकुञ्जगहनेषु परिप्लवाङ्ग-
 माकर्ण्य केलिरसितानि तयोः कुरङ्गाः ॥ ३६ ॥

कौतूहलाद्विहरतोरनयोर्विधूय
 वेगातिरेकजनितं मरुतोऽपि दर्पम् ।
पक्षप्रभाभिरभितः परिजृम्भिताभि-
 राविर्बभूव गगने सुरकार्मुकश्रीः ॥ ३७ ॥

हो

cf Maricha Mr. 9

atmosphere built not very success-ful

atmosphere amounts to imaginative sym-pathy - grace-ful, not striking

उत्पत्य दूरमसकृत्परितो दिनेशं
लक्ष्यं विधाय मणिचित्रपतत्रकान्त्या ।
यद्बिम्बमाविरभवत्तदुदीक्ष्य मेने
व्योमाङ्गनं सपरिवेषमिव क्षितीशः ॥ ३८ ॥

आलोक्य रत्नखचितौ सविधे शकुन्तौ
कौतूहलोत्तरलिता महिषी नलस्य ।
नीवारमुष्टिमवकीर्य तयोः पुरस्ता-
दासीदपास्तहृदया विषयान्तरेभ्यः ॥ ३९ ॥

आपातमात्ररुचिरं परिणामभीमं
पत्त्रिच्छलाद्विरचितं बडिशद्वयं तत् ।
धाता प्रसार्य करुणाविमुखः क्षणेन
क्षोणीपतेर्नयनमीनयुगं जहार ॥ ४० ॥

उत्पश्यतः खगयुगं पृथिवीश्वरस्य
वामं विलोचनमधः स्फुरितं व्यधत्त ।
उत्पत्स्यमानमशुभं च शुभं च नूनं
दैवं निवेदयति पुण्यविशेषभाजाम् ॥ ४१ ॥

आप्तेन काञ्चनमयेन विहंगमेन
संपादिताभिलषितार्थविशेषकेण ।
मायामये मणिविहंगयुगे च तस्मिं-
श्चेतस्तयोरजनि सान्द्रतरानुरागम् ॥ ४२ ॥

आदर्शयोर्विधुतयोः प्रतिबिम्बितस्य
भानोः प्रभाव्यतिकराविव चञ्चलाङ्गौ ।
व्योम्नि द्रुमेषु सविधेषु मुहुश्चरन्तौ
तौ न ग्रहीतुमवनीतिलकः शशाक ॥ ४३ ॥

कुत्रापि हस्तविषयत्वमिव प्रपन्ना-
वन्यत्र किंचिदिव दूरमुपेयिवांसौ ।

The incident changed Ramayana Dr. K remembered

तौ निन्यतुर्वसुमतीतिलकं सदारं
वन्यान्तराण्यपरिभावितसंचराणि ॥ ४४ ॥
इत्थं प्रतार्य नृपतिं च विदर्भजां च
संपन्नकल्पमवधारयतोः स्वमर्थम् ।
एकस्तयोर्बलभिदः ककुभं प्रपेदे
प्राचेतसीं दिशमगादपरः पतत्री ॥ ४५ ॥
अथ मणिमयपत्रे पक्षिणि न्यस्तनेत्रा
कियदपि दमयन्ती दूरमुल्लङ्घ्य खिन्ना ।
क्वचिदपि तरुमूले विश्रमार्थं निषण्णा
दयितमनवलोक्य प्राप संभ्रान्तिमन्तः ॥ ४६ ॥
तस्मिन्मायाविहंगे नयनविषयतः क्षिप्रमन्तर्दधाने
वैदर्भीजीवितेशस्तदनुगमनजं खेदमाशङ्क्य मोघम् ।
विष्वग्व्यापार्य नेत्रद्वयमथ सविधे प्रेयसीं तामपश्य-
न्मेने चिन्तानिमग्नः सपदि निजवपुर्जीवितेनैव शून्यम् ॥ ४७ ॥

इति श्रीमांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये
नलचरिते दमयन्तीविप्रलम्भो नाम दशमः सर्गः ।

---

एकादशः सर्गः ।

अथ सा पथि खेदनिःसहा दमयन्ती चलितुं न चक्षमे ।
प्रियमीक्षितुमिच्छती परं प्रजिघायाशु दृशं दिशो दश ॥ १ ॥
अधुनैव समेष्यति प्रभो(भुः) मणिचित्रं परिगृह्य पत्रिणम् ।
स हि मद्विरहेण दुःसहं क्षणमात्रं मनुते समाशतम् ॥ २ ॥
इति तत्र नरेन्द्रनन्दिनी हृदि निश्चित्य भृशं न विव्यथे ।
न विवेद तथातिनिष्ठुरं परिणामं हतधातुरात्मनि ॥ ३ ॥
निषधाधिपतिस्तु सत्वरं परितः प्रेरितदृष्टिराकुलः ।
परिमार्गयितुं प्रचक्रमे वनराजीषु नरेन्द्रनन्दिनीम् ॥ ४ ॥
किमियं पुरतः प्रयाति मे शकुनेस्तस्य विलोकनेच्छया ।
अथवा स्तनभारपीडिता नितरां पृष्ठत एव तिष्ठति ॥ ५ ॥

यदि वा परिगृह्य तं खगं क्वचन क्रीडति मत्प्रतीक्षया ।
इति चेतसि चिन्तयंश्चिरं न विनिश्चेतुमभूदलं नलः ॥ ६ ॥
गगने चरतः पतत्रिणः स्पृहया यद्दयितामहारयम् ।
किमतोऽप्यधिकं प्रथिष्यते हतभाग्यस्य नलस्य दुर्यशः ॥ ७ ॥
क्व नु तां विचिनोमि शाखिनां विटपैर्दृष्टिपथोऽपि मे हृतः ।
पदपङ्क्तिरपीह नेक्ष्यते तृणगूढासु वनान्तभूमिषु ॥ ८ ॥
इह केन पथाहमागतः क्व पुनः संप्रति गन्तुमुत्सुकः ।
इति वेदितुमप्यकोविदः कथमेनां मृगये मृगेक्षणाम् ॥ ९ ॥
मृगयापरिशीलिनोऽप्यलं यदि संमोहवतीह मे मतिः ।
वनवर्त्मनि तत्कथं नु सा विनिवृत्योटजमागमिष्यति ॥ १० ॥
पशवः प्रतिवक्तुमक्षमास्तरवोऽमी सुतरामचेतनाः ।
कथयिष्यति हन्त कोऽत्र मे पदवीं तां दयिता यया ययौ ॥ ११ ॥
इह चेत्परिपालयामि तामपथज्ञा कथमेष्यति स्वयम् । प्रति
यदि यामि यदृच्छया क्वचित्कथमेषा नयनातिथिर्भवेत् ॥ १२ ॥
इति तत्र वनोदरे नलः प्रबलश्वासविधूसराधरः ।
सुचिरं परिचिन्तयन्नपि प्रतिपेदे न विधेयनिश्चयम् ॥ १३ ॥
अथ निर्झरशीकरस्पृशा पवमानेन मृदूकृतश्रमा ।
अवलम्ब्य लतां शनैः शनैर्विचरन्तीदमुवाच भीमजा ॥ १४ ॥
परिगृह्य पतत्रिणावुभौ त्वमसीति प्रतिपन्नमेव मे ।
अनयोः कथमेकमप्यहो दमयन्त्यै ननु न प्रयच्छसि ॥ १५ ॥
पुर एव नरेन्द्र दृश्यसे विनिगूढार्धवपुर्लतान्तरे ।
इह दृग्विषये स्थितोऽपि मे प्रतिवाचं न कथं प्रयच्छसि ॥ १६
अलमेभिरकाण्डकौतुकैस्तरुमूलेऽत्र निषीद नैषध ।
चरणौ पथि खेदनिःसहौ तव संवाहयितुं समुत्सहे ॥ १७ ॥
रजसा परिधूसरीकृतं तुहिनेनेव वपुः सुधानिधेः । मूर्खं
परिमार्ष्टुमनाः शनैः प्रभो वदनं तावकमेष मे करः ॥ १८

रविरम्बरमध्यमाश्रितः क्रमशस्ते वलितक्लमं वपुः ।
इदमम्बु गृहाण शीतलं नलिनीपत्रपुटे मया हृतम् ॥ १९ ॥
अधिकुञ्जमिदं शिलातलं शिशिरं निर्झरवारिशीकरैः ।
इह ते श्रमशान्तये मया शयनीयं नवपल्लवैः कृतम् ॥ २० ॥
परिहासकुतूहलेन मां यतसे त्रासयितुं कियच्चिरम् ।
ननु वञ्चनयानया कथं दयिता सा सभया भविष्यति ॥ २१ ॥
यदि वान्यवधूचितं भयं नृपते त्वन्महिषीमपि स्पृशेत् ।
अवधार्य लोकवीर तद्भविता तेन विलज्जसेऽत्र कः ॥ २२ ॥
इति तत्र गिरः पदेपदे निगदन्ती विपिनं विगाह्य तत् ।
क्वचिदप्यविलोक्य वल्लभं दमयन्ती विललाप विक्लवा ॥ २३ ॥
विपिने चरतोः पतत्रिणोरपराधः कतमः कृतो मया ।
यदिमौ नितरां प्रतार्य मां दयितं मे तिरयांबभूवतुः ॥ २४ ॥
अपि सप्तसमुद्रमुद्रिता वसुधा यस्य भुजेन रक्षिता ।
वनवाससखीमपि प्रियां स कथं रक्षितुमक्षमायते ॥ २५ ॥ मोऽभवः
कृतवानसि नाथ सांप्रतं हतभाग्यामिह मां यदत्यजः ।
असवस्तु नितान्तनिष्कृपाः प्रतिमुञ्चन्ति न मामकं वपुः ॥ २६ ॥
महतीह विपन्मयेऽम्बुधौ तरिरासीत्त्वदुपासनैव मे ।
विधिनाद्य वियोजिता तया विनिमग्नास्मि वने निराश्रया ॥ २७ ॥
इह मां त्वदधीनजीवितां कथमुत्सृज्य गतोऽसि नैषध ।
करुणापि पणीकृता ध्रुवं नृपलक्ष्मीरिव दीव्यता त्वया ॥ २८ ॥
अपि वीक्षितुमक्षमा परैस्त्वदभिन्नैव पुरा विदर्भजा । Vision - Deep realization
फणिना त्वगिव त्वयोज्झिता शिशुनाप्यद्य पराभविष्यते ॥ २९ ॥ ✓
इह धन्यतमा परं मही क्वचिदास्ते सहितैव या त्वया ।
भवता रहिता दमस्वसा नृपलक्ष्मीश्च गताद्य शोच्यताम् ॥ ३० ॥
वसुधे विदधामि तेऽञ्जलिं न सपत्नीति रुषं कुरुष्व मे ।
कथय प्रभुरङ्घ्रिमुद्रया भवतीं यत्र तनोत्यलंकृताम् ॥ ३१ ॥

अविषह्यविपाककजृम्भितं दमयन्त्या किल दुष्कृतं कृतम् ।
अपि काननवासविक्लवं दयितं सा परिहाय जीवति ॥ ३२ ॥
अयि पाणिग्रहणेन मां प्रियां गमयित्वा सुखिनीषु मुख्यताम् ।
कथमाशु तपस्विनीष्वपि प्रथमोदाहरणत्वमानयः ॥ ३३ ॥
सुकृतं दुरितं च भूपते मम लोकोत्तरमेव दृश्यते ।
यदहं दयिता तवाभवं परिमुक्ता च वने यतस्त्वया ॥ ३४ ॥
हृदयं मम निर्ममे विधिः कुलिशेनेति मया विनिश्चितम् ।
यदिदं शतधा न भिद्यते दयित त्वद्विरहाग्नितापितम् ॥ ३५ ॥
परलोकजुषोऽपि वल्लभाननुगच्छन्ति कुलोद्भवाः स्त्रियः ।
हृदयेश्वरमन्तिके स्थितं मदृतेऽन्या कतमा विहास्यति ॥ ३६ ॥
मम पाणिपरिग्रहः परं समभूत्ते विपदां निबन्धनम् ।
ग्रसते खलु सिंहिकासुतस्तपनं दर्शतिथेः समागमे ॥ ३७ ॥
..................तेजसा...........खलु तिग्मदीधितिः ।
चरमाद्रिदरीमिवाद्य मां कथमासाद्य गतोऽस्यदृश्यताम् ॥ ३८ ॥
अथ सा नयनाम्बुवीचिभिः प्रसृताभिर्विनिगूढसंचरा ।
पुनरेव नरेन्द्रनन्दिनी परितस्तद्विचचार काननम् ॥ ३९ ॥
इतरेतरयुद्धसंभ्रमैर्महिषैः क्वापि विकर्दितक्षितिः ।
विटपैरवनीरुहां क्वचिद्गजभग्नैः प्रतिरुद्धपद्धतिः ॥ ४० ॥
असमग्रविशीर्णफेरवं जठरेणाजगरेण कुत्रचित् ।
क्षुधितेन तरक्षुणा क्वचित्प्रसभं क्रान्तकुरङ्गशावकम् ॥ ४१ ॥
क्षुभितर्क्षमुखोज्झितैरपां पृषतैः क्वापि विकीर्णकुज्झटिः ।
दवपावकधूममण्डलैः क्वचिदाविष्कृतमेघडम्बरम् ॥ ४२ ॥
मृगराजचपेटताडितैः करिभिः क्वापि विमुक्तचीत्कृतिः ।
धरणीविवरार्धनिर्गतैः फणिनिर्मोकचयैश्चितं पदम् ॥ ४३ ॥
इति तत्र भयंकरे वने न भयं प्राप भृशं विदर्भजा ।
हृदये नवशोकविक्लवे नहि भावान्तरमर्पयेत्पदम् ॥ ४४ ॥

अनिशं प्रियदर्शनेच्छया विचरन्तीं परिखेदिनीमपि ।
सदया इव विश्रमाय तां रुरुधुः काननवीरुधः क्वचित् ॥ ४५ ॥
कृतकेशचयग्रहा क्वचित्क्वचिदाकृष्टनिचोलपल्लवा ।
क्व च दुर्ललितस्तनान्तरा कुटिलैः काननकुञ्जकण्टकैः ॥ ४६ ॥
पृषतीभिरिवोपशिक्षिता वनराजीश्चरितुं निरन्तराः ।
भ्रमितुं धरणीभृतां दरीर्भुजगानामिव शिष्यतां गता ॥ ४७ ॥
अवगाहितुमद्रिनिम्नगाः शफरीणामिव सख्यमाश्रिता ।
जलदाम्बुहिमातपग्रहे प्रतिपन्नेव लतासु बन्धुताम् ॥ ४८ ॥
फणिभिश्चरणाग्रपीडनादधिगुल्फं वलयत्वमागतैः ।
प्रतिमुक्तपदाङ्गदेव सा विलपन्ती व्यचरत्क्वचित्क्वचित् ॥ ४९ ॥
अथ भीमसुतां शठो विधिर्विचरन्तीं विपिने यदृच्छया ।
महताजगरेण कुत्रचित्प्रतिरुद्धे पथि संन्ययोजयत् ॥ ५० ॥
द्रवतामपसार्य वेधसा कठिनत्वं यमुनेव लम्भिता ।
नभसः स्खलितेव कालिका तनुरेतस्य तया व्यलोक्यत ॥ ५१ ॥
अतिदीर्घतया वनेचरैरसमप्रेक्षितभोगवैभवम् ।
महिषौघविषाणतामितैः सुदृढैरप्यकृतव्रता क्वचित् ॥ ५२ ॥
.....रधिपृष्ठमाचितं रचितं सेतुमिवासितोपलैः ।
समुपाश्रितपार्श्वभित्तिकं शयनागारधिया करेणुभिः ॥ ५३ ॥
उदरे दरभिन्नकञ्चुके परितश्छिद्रसितैर्निरन्तरे ।
वृकशल्लकिजम्बुकैश्चिरं सकुटुम्बैर्गमितं निवासताम् ॥ ५४ ॥
अवलोकयति स्म केवलं पृथुदीर्घाङ्गमुखं विदर्भजा ।
भुजगत्वममुष्य सा पुनर्न विवेदान्तिकमप्युपागता ॥ ५५ ॥
विधिना निधनाय देहिनां विहितं यन्त्रमिवातिदारुणम् ।
सहसा यमसद्मयायिनां विवृतं द्वारमिवार्गलोज्झितम् ॥ ५६ ॥
विगलद्गरलान्धकारितं पवमानग्रहणाय जृम्भितम् ।
अवनीधरकंदरभ्रमा दमयन्ती प्रविवेश तन्मुखम् ॥ ५७ ॥

अथ मृगयुभिरेकः काल्यमानः कुरङ्गः
प्रतिपदमनुयद्भिस्त्रासितः सारमेयैः ।
इषुविहतविशीर्णैः शोणितैः कीर्णवर्त्मा
पृथुनि वदनरन्ध्रे प्राविशत्पन्नगस्य ॥ ५८ ॥

तदनु शोणितबिन्दुभिरङ्कितामनुसृताः सरणिं हरिणस्य ते ।
कलितकर्णशराः सशरासनाः सरभसं शबराः शतशोऽभ्ययुः ॥ ५९ ॥

हा नाथ कुत्र गतवानसि मां विहाय
भूयः करिष्यसि कदा नयनोत्सवं मे ।
इत्थं गिरः प्रतिपदं प्रतिपादयन्ती
भैमी चचार भुजगस्य मुखान्तरेऽपि ॥ ६० ॥

समन्ताद्भ्राम्यन्ती पृथुलमुरगस्यास्यविवरं
न यावद्वैदर्भी समभजत कण्ठान्तिकमपि ।
किराताः पीनत्वादविचलतनुं तावदपि तं
द्विधा मध्ये चक्रुस्तरुमिव निशातैः परशुभिः ॥ ६१ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते दमयन्तीविलापो नामैकादशः सर्गः ।

## द्वादशः सर्गः ।

तदनु ते भुजगस्य मुखे स्थितां किमपि लक्ष्यतनुं सहजश्रिया ।
प्रतनुनीलघनान्तरचारिणीं ददृशुरिन्दुकलामिव सुन्दरीम् ॥ १ ॥

समपकृष्य ततस्तलिनोदरीं गरलदाहवशाद्गतचेतनाम् ।
व्यपगतासुमिव प्रतिपद्य तां मृगयवोऽपि विषादमुपाययुः ॥ २ ॥

शिशिरनिर्झरशीकरसेचनैः प्रतिमुहुर्विहितैरपि संभ्रमात् ।
चिरतरं रचितैरपि यत्नतः शिखिशिखण्डकदम्बकवीजनैः ॥ ३ ॥

अपि च मन्त्रपदैर्विषहारिभिः शशिमुखीमनुपागतचेतनाम् ।
समपहाय यथागतमेव ते प्रतिययुर्मृगबन्धनलालसाः ॥ ४ ॥

तदनु कोऽपि तपोनिधिराययौ स्थलमिदं समिदाहरणोत्सुकः ।
अयमलोकत तां पृथिवीपतेः प्रणयिनीं पतितामवनीतले ॥ ५ ॥

यदि परासुरियं वपुषः श्रिया रुचिरया न कथं परिहीयते ।
श्वसिति वा न कथं यदि निद्रया निबिडया परिमुद्रितलोचना ॥ ६ ॥
वपुरिदं भुवनत्रयमोहनं सुहृदिदं मदनस्य नवं वयः ।
किमुत घोरतरे विपिनान्तरे निपतितेयमितस्तलिनोदरी ॥ ७ ॥
यदि तु मोहयितुं यमिनां मनः सुरवधूः प्रहिता हरिणा दिवः ।
विरहिता ललितैः स्मरविभ्रमैरियमुपैति दशां कथमीदृशीम् ॥ ८ ॥
अपहृता कुटिलैः क्षणदाचरैस्त्रिदिवतो यदि कापि सुराङ्गना ।
न खलु तैर्मिलिताकृतिरीदृशी व्यपगतासुरपीह विमुच्यते ॥ ९ ॥
पुररिपोर्नयनार्चिषि भस्मतां गतवतो दयितस्य शुचाकुला ।
त्रिषु जगत्सु परिभ्रमणश्रमाद्भुवमियं पतिता स्मरवल्लभा ॥ १० ॥
नहि नहि द्युसदा करुणावशात्पुनरवाप्तवता रुचिरं वपुः ।
प्रणयिना सह सा भुवनत्रये विहरतीति वदन्ति पुराविदः ॥ ११ ॥
इति वितर्कशतं परिवर्तयन्नपि न तां स मुनिर्निरधारयत् ।
क्रमवशाद्विशदैरथ लक्षणैः किमपि निश्वसितं समभावयत् ॥ १२ ॥
कृतरुषा कलिना हृतसंपदा तत इतश्चरता विपिनोदरे ।
विरहितां दयितेन नलेन तां विषधरस्य विषेण विचेतनाम् ॥ १३ ॥
समधिगम्य समाधिबलान्मुनिर्मनसि खेदमवाप मुहुर्मुहुः ।
परगतामपि दुःखपरम्परां कृतधियो हि निजामिव मन्वते ॥ १४ ॥
पुनरवेक्ष्य तथा पतितां भुवि प्रियतमां महिषीं निषधेशितुः ।
विधिमपास्तकृपं परिभर्त्सयन्मुनिरिदं मनसा समचिन्तयत् ॥ १५ ॥
विपदि मग्नमवेक्ष्य जनं जनः प्रभुरपि प्रतिकर्तुमनुद्यतः ।
कुमतिराशु करोति मलीमसं निजकुलं यशसापि समुज्ज्वलम् ॥ १६ ॥
तपसि राज्यसुखेऽपि समाहिते विविधविघ्नकृतां विनिवारणैः ।
नृपतयो मुनयश्च परस्परं विनिमयेन भजन्त्युपकारिताम् ॥ १७ ॥
इति विचिन्त्य मुनिर्नृपतेः प्रियामभिषिषेच जलैरभिमन्त्रितैः ।
तदनु चेतनया च शुचा च सा युगपदेव बभूव समन्विता ॥ १८ ॥

चरणयोः प्रणतां स विदर्भजां समभिनन्द्य तपोनिधिराशिषा।
विगलदस्रुतरङ्गितलोचनामिदमुवाच सुधामधुरं वचः॥ १९॥
अयि कुरुष्व कृशोदरि मा शुचं विधिरभूत्करुणासुमुखस्त्वयि।
विचरतोऽपि वने हि यदृच्छया त्वमसि यन्मम दृक्पथमागता॥ २०॥
त्वमसि यस्य तनूदरि वल्लभा वनमिदं च यथागतवत्यसि।
समधिगम्य समाधिबलादिदं मम मनः सुतरां परिदूयते॥ २१॥
तदिह मेऽस्ति तपश्चिरसंचितं किमपि तेन नलः सुलभोऽस्तु ते।
क्षितिमिमां च समुद्धृतकण्टकां समनुशास्तु चिरं मुदितस्त्वया॥ २२॥
अनुपलब्धपदं विविधैर्भयैः सुलभमूलफलं विमलोदकम्।
क्लमभृतां क्लमभेदनमाश्रमं समवलोकय मामकमग्रतः॥ २३॥
इह दिनानि कियन्त्यपि विश्रमं विदधतीं भवतीमवनीन्द्रजे।
सकरुणैर्मुनिभिः कृतशासनाः परिचरन्तु तपोनिधिकन्यकाः॥ २४॥
इति मुनेर्वचसापि नृपात्मजा न हृदयं विदधे किल विश्रमे।
सुखिनि दुःखिनि वा दयिते दशां तदुचितामनुयान्ति पतिव्रताः॥२५॥
अवितथं परिचिन्त्य वचो मुनेर्निजमवेक्ष्य च भाग्यविपर्ययम्।
किमपि कन्दलितां दलितां पुनर्निजमनोरथसिद्धिममंस्त सा॥ २६॥
अथ मुनिं प्रणिपत्य विदर्भजा विदधती विपिनेषु विगाहनम्।
पथिषु यद्यदवैक्षत विक्लवा सपदि तत्तदुपेत्य जगाद सा॥ २७॥
स्थगयति त्रिदिवं शिखरोन्नतिर्धरणिमावृणुते परिणाहिता।
स्पृशति मूलमधोभुवनं ततः किमपि नाविदितं त्रिजगत्सु ते॥ २८॥
स्थिरतया स्थितिहेतुतया भुवः प्रथितवंशतयोन्नतिमत्तया।
अमितसत्त्वतयाप्यनुयासि यं क्षितिधरेन्द्र वद क्व स नैषधः॥ २९॥
अपि मनःशिलया घटितं गिरे तव वपुर्विषमं कठिनं च यत्।
विफलमेव करिष्यसि तन्मम प्रियतमस्य निवेदनमीप्सितम्॥ ३०॥
यदपि मामवलोक्य गिरेस्तटादिह समागमवत्यसि निम्नगे।
तदपि सेत्स्यति मे त्वयि नेप्सितं न खलु वाक्पटुतास्ति जडात्मनाम्॥३१॥

गिरितटादिह संप्रति निम्नगे ध्रुवमुपागतवत्यसि मत्कृते ।
तदपि मे प्रथयिष्यसि न प्रियं प्रकृतिवक्रगते करुणा कुतः ॥ ३२ ॥
अयि मृगेन्द्र निवेदय मे प्रभु.................................................।
सपदि वा यदि वा जननान्तरे परिचरामि पुनर्निषधेश्वरम् ॥ ३३ ॥
हरिण मां दयितं परिपृच्छतीमपि कथं प्रतिवक्षि न किंचन ।
ध्रुवमिमं मृगयत्सु कृतागसं स्मरसि तेन मनः कलुषं तव ॥ ३४ ॥
जनपदेषु विहृत्य विहंगमानुपगतान्निशि पृच्छत मे पतिम् ।
यदि न ते कथयन्ति तदाशु तान्विटपतो विनिपातयत द्रुमाः ॥ ३५॥ ✓
त्वमनुरागसमृद्धिमिमां परं वहसि कीर मुखे न तु चेतसि ।
परुषवागपि नोत्सहसे यतः स्फुटमुदन्तमुदीरयितुं प्रभोः ॥ ३६ ॥ ✓
इति प्रलापानसकृद्वितन्वती विगाह्य शैलांश्च वनोदराणि च ।
दिनावसाने कृतविश्रमं क्वचिद्ददर्श सार्थं वणिजां विदर्भजा ॥ ३७ ॥
जनतां विलोक्य सुचिरेण तत्र सा नयने निवेश्य दयितेक्षणाशया ।
अविदूर एकतरुभित्तिरोहिता निषसाद भीमतनयावनीतले ॥ ३८ ॥
अथास्तसंस्थे मृदुधाम्नि भानौ निरन्तरे तत्र वने निकुञ्जे ।
अदृष्टपारस्तिमिराम्बुराशिर्वेलामतिक्राम्य समुज्जजृम्भे ॥ ३९ ॥ ✓
आलोकसंपत्तिरुवास तुङ्गे चकार निम्ने पदमन्धकारः ।
परस्परस्पर्धितया तदानीमकारि ताभ्यां जगतो विभागः ॥ ४० ॥ ✓
दरीषु येषामवनीधराणां लब्धोदयस्तानपि जग्रसे यत् ।
तेनैव कृत्स्नं चरितं खलानां गाढोऽन्धकारस्तुलयांबभूव ॥ ४१ ॥ ✓
रन्ध्रेषु प्रथमं प्रविश्य तदनु प्राप्य स्थलीषु स्थितिं
छिद्राण्याशु तिरोदधत्क्वलयत्तुङ्गांस्ततः क्ष्माभृतः ।
विष्वक्प्रौढतमं तमो जगदिदं सर्तव्यतां प्रापय-
न्व्याचक्रे चरितं युगान्तसमयोद्वेलस्य वारांनिधेः ॥ ४२ ॥
विधिरतनुत सृष्टिं दृष्टिशून्यां किमन्यां
व्यरचयदथवैनां रूपसंपत्तिहीनाम् ।

इति जगति विवेक्तुं कोविदः कोऽपि नासी-
दलिकुलमलिनाभैरुन्मिषद्भिस्तमोभिः ॥ ४३ ॥
भूयोभूयो वर्त्मसंबाधखेदाद्भेजे निद्रां दुःसहः पान्थसार्थः ।
शोकोर्मीभिर्बोध्यमानानुवेलं निर्निद्रासीत्केवलं राजपत्नी ॥ ४४ ॥
नीलाम्भोरुहिणीकलिन्दतनयातोयप्रसूनैरिव
स्वैरङ्गैर्मलिनैस्तदन्धतमसं संम्लापयन्ती भृशम् ।
उत्क्षिप्तैः क्षितिरेणुभिः कलुषतां संप्रापयन्ती नभः
स्पर्शेनारुजती तरूञ्करिघटा वात्येव तत्रायये ॥ ४५ ॥
अभ्यर्णे कुलमवलोक्य कुञ्जराणां क्रोशन्त्यामसकृदपि क्षितीन्द्रपत्न्याम् ।
अध्वन्याः कतिपय एव बोधमापुर्दुर्वारं विधिविहितं हि देहभाजाम् ॥४६॥
असंयमितमूर्धजानविशदस्वरान्निद्रया
स्खलच्चरणपल्लवान्विकृतवेषमुत्तिष्ठतः ।
विलोक्य पथिकानिभाः सभयरोषमुज्जृम्भितै-
र्व्यधुः सपदि चीत्कृतैः क्षुभितसत्त्वमाराद्वनम् ॥ ४७ ॥
अध्वक्लान्त्या निःसहाङ्गं प्रसुप्तास्ते वैदर्भ्या सत्वरं बोध्यमानाः ।
धात्रा यत्नेनाशु संप्रेर्यमाणैर्निद्रां दीर्घां प्रापिताः केऽपि नागैः ॥ ४८ ॥
रोषोत्सेकवशादुरांसि चरणैराक्रम्य केषामपि
प्रोच्छिद्याग्रकरे शिरांसि करिणो दूरं समुच्चिक्षिपुः ।
शाखासंधिषु लग्नकेशनिचयैरस्रच्छटाभिप्लुतै-
र्यैरासन्परिणामिभिः फलभरैः पूर्णा इवोर्वीरुहः ॥ ४९ ॥
पान्थाः केचिद्दलितवपुषः कुञ्जराणां विषाणै-
रस्रोद्गारं सपदि मुमुचुर्जीवितैः सार्धमेव ।
भूयो भूयः सरभसपदाक्रान्तिभिश्चूर्णपेषं
निष्पिष्टाङ्गाः कतिचिदपरे भेजिरे पेचकत्वम् ॥ ५० ॥
निद्रयाथ तमसा च विक्लवाः केचिदन्धितदृशः पदेपदे ।
क्वापि विश्रमपदं न भेजिरे कुञ्जकुञ्जरविचेतनाक्षमाः ॥ ५१ ॥

छिन्नार्धाङ्गान्पल्लवैः पादपानामुत्तुङ्गानामग्रशाखासु लीनान् ।
त्रासान्मौनं संश्रितानध्यगच्छन्निश्चित्यान्ये वानरा वा नरा वा ॥ ५२ ॥
इत्थं तत्पथिककुलं प्रमथ्य यूथे नागानां गतवति ये हतावशिष्टाः ।
प्रातस्ते विपदि तथा कृतोपकारां वैदर्भीं प्रणतिभिरर्चयांबभूवुः ॥५३॥
अथ सुचिरमसौ परिभ्रमन्ती वनभुवि कान्तमवीक्ष्य खिद्यमाना ।
पथि पथि पथिकाननुप्रयान्ती पुरमविशत्पृथिवीपतेः सुबाहोः ॥ ५४ ॥
अथ तत्र पुरे परिभ्रमन्तीं जननी प्राप्तदया नृपस्य तस्य ।
शुभलक्षणलक्षितानुभावां तनयां स्वामिव पालयांबभूव ॥ ५५ ॥
अथ चरैर्विनिवेदितलक्षणां विरहवेदनया विधुरां सुताम् ।
द्रुतमुपेत्य विदर्भमहीपतिर्गमयति स्म निकेतनमात्मनः ॥ ५६ ॥
लावण्यमात्रपरिशिष्टवपुः प्रयत्नादृष्टापि सा विरहिता निषधेश्वरेण ।
अन्त्या कलेव शशिनस्तिमिरं समग्रं शोकं पितुः शमयितुं क्षमतां न भेजे॥५७॥

अन्वेषणाय निषधाधिपतेः समन्ता-
दूतान्प्रतीतवचसः प्रजिघाय भीमः ।
भैमी तु तस्य भवने स्वजनैर्वृतापि
बन्दीव बाष्पकलुषा दिवसाननैषीत् ॥ ५८ ॥

चिरं चरन्नपि विपिने न विव्यथे विदर्भजां सविधगतां विलोकयन् ।
तया पुनर्विरहमवाप्य जीवितं क्षणार्धमप्यमनुत निष्फलं नलः ॥ ५९ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते वैदर्भीविदर्भानुप्रवेशो नाम द्वादशः सर्गः समाप्तः ।

---

## त्रयोदशः सर्गः ।

अथ चेतसि शोकवेगभाजि स्थगिते दृष्टियुगे च बाष्पपूरैः ।
श्रुतवानपि नैषधश्चिराय प्रतिपेदे करणीयमूढभावम् ॥ १ ॥
बहु तत्र विलप्य बाष्पवारां पृषतैर्निष्पतितैर्वनस्थलीषु ।
नवमेघजलाभिषेकतः प्रागपि सौरभ्यमुदैरयन्नरेन्द्रः ॥ २ ॥
अथ तत्र कदापि वाति वाते रविरश्मिप्रकरैः प्रकामतप्ते ।
उदभूद्विपिने मिथस्तरूणां विटपाघट्टनसंभवः कृशानुः ॥ ३ ॥

अनतिप्रसृतेऽभितः कृशानौ गगनाग्रस्पृशि धूमचक्रवाले ।
ननृतुः क्षणमुन्मदाः सकेकं नवमेघोदयशङ्किनो मयूराः ॥ ४ ॥
विटपानवनीरुहां कृशानोः स्पृशतीष्वग्रशिखासु लोहितासु ।
सुरभेरुदयं विनापि वन्या परितः पुष्पितकिंशुकेव रेजे ॥ ५ ॥
कुसुमान्यपहाय पादपानां भ्रमरैर्धूमसमाकुलैः पतद्भिः ।
तरसैव शिखाङ्कुराः कृशानोरसकृन्निर्गलदञ्जना इवासन् ॥ ६ ॥
लिलिहुर्विरला मुखैश्चकोराः पततोऽङ्गेषु समन्ततः स्फुलिङ्गान् ।
अपरे त्वभिपत्य संहतास्तान्कृतरोषा इव भस्मसाद्वितेनुः ॥ ७ ॥
रुरुधुर्गगनं शिखाः कृशानोरुपरि व्याततसान्द्रधूमसंघाः ।
अवलीढघनानि काञ्चनाद्रेः शिखराणि द्युतिभिर्विडम्बयन्त्यः ॥ ८ ॥
अपहाय कुलायकुञ्जगर्भान्पततामुत्पततां दिधक्षयेव ।
सह धूमचरैर्विजृम्भमाणाः सपदि व्योम ललङ्घिरे दवोल्काः ॥ ९ ॥
भृशमाकुलतामुपेत्य धूमैर्विविशुः क्ष्माधरकंदरेषु सिंहाः ।
अपि तेषु हविर्भुजि प्रविष्टे पुटपाकं झटिति प्रपेदिरे ते ॥ १० ॥
विवरैरुपसृत्य कंदरायां ज्वलति ज्वालिनि तत्र चित्रभानौ ।
घनधूममये महान्धकारे गिरिरुल्कामुखवद्व्यलोकि कैश्चित् ॥ ११ ॥
चमरान्परिधावतः समन्ताद्वनवीथीषु नितान्तमार्तिभाजः ।
सरलायतचामरप्रसङ्गाननुधावन्निव पावकश्चकाशे ॥ १२ ॥
अपि तीर्णवतां रयातिरेकाद्वनराजिं परितः प्रदह्यमानां ।
परिणाहिषु चामरेषु लग्नश्चमराणामनलः सुदुस्तरोऽभूत् ॥ १३ ॥
परितः पवनेन कीर्यमाणान्क्षपयन्तः करशीकरैः स्फुलिङ्गान् ।
अभितापभृतोऽपि वारणेन्द्राः क्षणमासन्वनचारिणां शरण्याः ॥ १४ ॥
सहसा द्रवणाक्षमांस्तनूजांश्चरणैः स्वैः परिवार्य गोपयन्त्यः ।
पृषतीः परिमन्थरं व्रजन्तीः सह तैरेव ददाह कृष्णवर्त्मा ॥ १५ ॥
अधिभूधरसानु विद्रुतानां परितः शल्लकिनां शरीरलग्नः ।
प्रतिशल्लकशेखरं प्रसर्पन्नपि सप्तार्चिरसंख्यकार्चिरासीत् ॥ १६ ॥

निजपल्लवभक्षणापराधं परिचिन्त्येव महीरुहः सरोषाः ।
प्रतिरुध्य लताभिरग्रशृङ्गे पृषतानुत्पति(त)तोऽग्नये वितेरुः ॥ १७ ॥
न शरीरभृतां परं कृशानुः प्रसरन्नाशु जहार जीवनानि ।
सरसां सरितां च तीरकक्षे परिसर्पन्क्रमशस्तथैव चक्रे ॥ १८ ॥
सरितामविभावनीयरूपं सहसाविश्य जहार जीवनं यत् ।
अतएव बभार काननाग्निः समदाभूतपदाभिधां यथार्थाम् ॥ १९ ॥
अपि पल्वलमुल्बणं सषौघं परितापातिशयं तथा जगाम ।
इह कोलकुलं विविग्नमग्नैर्बिलमग्नं न प(य)थोज्जगाम जीवत् ॥ २० ॥
दरदग्धवराहदेहजातैः परिदिग्धानि भृशं वसाप्रवाहैः ।
विपिनानि समश्नु(श्न)तः कृशानोरुपदंशत्वमगुः पुलिन्दपल्ल्यः ॥ २१ ॥
सविधे परिधावतः कुरङ्गान्न किराताः शरलक्ष्मतामनैषुः ।
दवपावकजातसंभ्रमाणां शबरीणां परिरक्षणैकतानाम् ॥ २२ ॥
धवलीकृतमूर्तयः समन्तादवकीर्णैः पवनेन भस्मजालैः ।
गिरयोऽस्थिचया इवावशिष्टाः समभूवन्परिदग्धकानना[नां]म् ॥ २३ ॥
इति तत्र चिराय दह्यमाने विपिने भूमिपतिर्विगाढशोकः ।
विललाप विदर्भसंभवायामपराद्धं ज्वलनस्य शङ्कमानः ॥ २४ ॥
अवलोक्य शिखाशतैः करालं प्रसरन्तं परितः कृशानुराशिम् ।
दमयन्ति मया शठेन मुक्ता कमरण्येषु करिष्यसे शरण्यम् ॥ २५ ॥
ज्वलनस्य विवाहसाक्षिणोऽपि श्रमणेनासि पुरा नितान्तखिन्ना ।
मृदुलाङ्गि कथं नु संप्रति त्वं वनवह्नेर्विषहिष्यसेऽभितापम् ॥ २६ ॥
दयिते तव विप्रयोगजन्मा ज्वलनो मां प्रबलश्चिरादधाक्षीत् ।
अधुनाभ्यधिकं करिष्यतेऽसौ किमिवा[यं] वनपादपप्रसूतः ॥ २७ ॥
तव सुन्दरि विप्रयोगजन्मा हृदि योऽयं मम जृम्भतेऽनुवेलम् ।
उपगन्तुमपि स्फुलिङ्गभावं शिखिनस्तस्य शिखी न कल्पतेऽसौ ॥ २८ ॥
विपिनानल धन्यतामुपैषि क्षणमात्रेण दहद्वनान्यमूनि ।
धिगिमं विरहानलं वपुर्मे ग्लपयत्येव निनीषते न निष्ठाम् ॥ २९ ॥

इति मात्रमुपेयुषा समीपं विधिदोषान्नितरान्दवीयसोऽपि ।
अनलेन नलेन वाद्य बाले नियतं जीवितसंशयं गतासि ॥ ३० ॥
दमयन्ति मया विचुम्बनादि स्मरलीलावसरेषु यान्यकार्षीः ।
प्रथयिष्यसि तानि सीत्कृतानि त्वमिदानीं बत पीडिता स्फुलिङ्गैः॥३१॥
मुकुलीकृतदीर्घपक्ष्मलाक्षं स्मरसंदर्भभुवा परिश्रमेण ।
श्रमवारिलवाभिषिक्तभालं स्मरणीयं बत तन्मुखं तवासीत् ॥ ३२ ॥
अभिरूषितहेमकुम्भकान्त्योः परिणाहिस्तनयोः परिस्फुरन्तीः ।
अवलोक्य हुताशनस्य हेतीर्ध्रुवमायास्यसि संभ्रमातिरेकम् ॥ ३३ ॥
विपुलस्तनभारपीडितापि क्षणमुत्सृज्य गतिं निसर्गमन्दाम् ।
व्रज सुन्दरि सत्वराङ्घ्रिपातं प्रसरत्येष समन्ततः कृशानुः ॥ ३४ ॥
स्खलदङ्घ्रि विशीर्णकेशबन्धं परितः प्रेरितदृष्टि विद्रवन्ती ।
वनराजिषु वीक्ष्य वीक्ष्य वह्निं दयिते यास्यसि कीदृशीमवस्थाम् ॥३५॥
यदि सत्यगिरो दिवौकसः स्युर्यदि चेतो मम तेषु निर्विकारम् ।
स्वमनोरथलङ्घनापराधं दमयन्त्याः स्मरतात्तदेष नाग्निः ॥ ३६ ॥
इति तत्र वनोदरे नरेन्द्रं विलपन्तं मुनिशापबद्धदेहः ।
मनुजोचितया गिरा बभाषे भुजगः कोऽपि दवाग्नितापखिन्नः ॥ ३७ ॥
अविषह्यतमेन दह्यमानं मुनिशापेन दवाग्नितेजसैव ।
अभिरक्षतु मां महीसुधांशो तव कारुण्यमयः सुधाभिषेकः ॥ ३८ ॥
अकृतोपकृतावपि क्षितीन्दो त्वयि दृष्टे मम कोऽप्यभूत्प्रमोदः ।
अविसृष्टजलेऽपि वारिवाहे जगदाश्वासमुपैति घर्मतप्तम् ॥ ३९ ॥
इति वाचमनुव्रजन्नरेन्द्रः फणिनं मण्डलितं क्षितौ ददर्श ।
करविच्युतकङ्कणोपमानं वनलक्ष्म्याः शिखिशङ्कया द्रवन्त्याः ॥ ४० ॥
अथ दंशभयादिवापमुक्तः सविधेऽपि ज्वलता हुताशनेन ।
सदयं परिपृष्टशापहेतुं पृथिवीन्द्रं पुनराह पन्नगेन्द्रः ॥ ४१ ॥
चतुराननसंभवो महर्षिर्मयि रोषं कृतवान्कुतोऽपि हेतोः ।
इह मामरुजद्गिरा स तावत्तव राजन्करान्स्पृशामि यावत् ॥ ४२ ॥

क्रमशः परिहीयमाणकान्तेः स्फुटतीवैशम[णि ] फणागतो मे ।
अभितापमवाप्य दाववह्नेरसवः कण्ठतटान्तरे लुठन्ति ॥ ४३ ॥
प्रतिसंगरसीम्नि वैरलक्ष्म्याः प्रसभाकर्षणकर्मकर्मठेन ।
नय मां गणयन्पदानि गजन्तरुणाम्भोरुहचारुणा करेण ॥ ४४ ॥
अहमस्मि पतिर्महोरगाणामिह कर्कोटक इत्युदीर्यते यः ।
दशमे तु पदे नरेन्द्र नूनं भवतः श्रेयसि निर्भरं यतिष्ये ॥ ४५ ॥
गणनां विदधन्नलः पदानां स्फुटवर्णं यदसौ दशेत्यवादीत् ।
अवलम्ब्य तदेव दन्दशूकः करमेतस्य ददंश दक्षिणं सः ॥ ४६ ॥
नृपतिर्भुजगेन दष्टमात्रः कमनीयां सहजामपास्य कान्तिम् ।
उपरक्त इवामृतांशुरासीत्तरसैव प्रतिपन्नवर्णभेदः ॥ ४७ ॥
अथ वीक्ष्य तनोस्तथा विकारं परिदंशं च विचिन्त्य निर्निमित्तम् ।
नलमास्थितवैमनस्यमूचे वपुरासाद्य स दिव्यमाशु नागः ॥ ४८ ॥
इदमप्रियवन्मया कृतं यन्नृपते यास्यति तत्तव प्रियत्वम् ।
प्रथमं कटु भेषजं निपीतं परिणामे हि सुधारसत्वमेति ॥ ४९ ॥ ✓
नगरे नगरे क्षितीश्वराणां निषधाधीश चिरं चरिष्यसि त्वम् ।
तदमी युधि निर्जिताः कथं त्वां विषहेरन्नवलोक्य निःसहायम् ॥५०॥
अवलम्ब्य नयं गुरुप्रणीतं सततं रन्ध्रनिरूपणप्रवीणाः ।
प्रभवन्ति परे पराभवाय प्रबलानामपि दुर्बलाः क्षितीन्द्राः ॥ ५१ ॥
अधुना तु रिपूंस्त्वमेक एवं युधि जेतुं सहितानपि क्षमोऽसि ।
न भजेः परिपन्थितां यदा ते दमयन्तीविरहानलो बलीयान् ॥ ५२ ॥
इति चिन्तयता मया विमुक्तं विषमेतत्त्वचमेव संस्पृशंस्ते ।
असितागुरुलेपनिर्विशेषां वपुषः श्यामलतामिमां व्यधत्त ॥ ५३ ॥
अपि नीतिविदं नरेश्वर त्वां कितवं यस्त्रिदशाधमश्चकार ।
अधुनापि शरीरमाविशन्तं गरलं धक्ष्यति मामकं तमेव ॥ ५४ ॥
अधुना त्वचि भाव्यपूर्वरूपः सविधस्थैः स्वजनैरपि त्वमासीः ।
व्रज निष्प्रतिबन्धमाशु राजन्नृतुपर्णस्य नृपस्य संनिकर्षम् ॥ ५५ ॥

भुवनत्रयलुण्ठनापराधाद्दशकण्ठं रणलीलया जिघांसुः ।
जगतः प्रभवोऽपि यस्य वंशे प्रभवं स्वस्य हरिः पुरा व्यधत्त ॥ ५६
कृतमस्य गुणान्तराविधानैस्तव सख्योचित एष राजचन्द्रः ।
उपगन्तुममुष्य सारथित्वं सहसा याहि विभो पुरीमयोध्याम् ॥ ५७
अवलोक्य कलासु कौशलं ते निजदेहादधिकं स मंस्यते त्वाम् ।
निवसन्निह मेदिनीसुधांशो दमयन्तीमचिरेण लप्स्यसे त्वम् ॥ ५८ ।
उपयास्यति लोचनातिथित्वं पृथिवीनाथ विदर्भजा यदा ते ।
अपहातुमिमं वपुर्विकारं परिधेहि त्रिदशांशुके तदैते ॥ ५९ ॥
इति वाचमुदीर्य नागराजः सुरयोग्यं वसनद्वयं वितीर्य ।
अनुभाववशान्निजं शरीरं तिरयामास नलस्य पश्यतोऽपि ॥ ६० ॥
इति दर्शितशोकसागरान्तः फणिराजेन पतिर्विदर्भजायाः ।
स च तेन विमुक्तशापबन्धः प्रतिनन्द्योपकृतिं मिथः प्रयातौ ॥ ६१

सूते यद्विषमेव जीवितहरं कर्कोटकस्याननं
तस्मादेव वचश्छलाद्विगलितः पीयूषपूरो नवः ।
प्रत्यङ्गं कवलीकृतस्य दयिताविश्लेषजेनाग्निना
जीवातुर्जगतीपतेर्यदभवत्तच्चित्रतामाययौ ॥ ६२ ॥

नरपतिरथ स्मारं स्मारं वचांसि फणीशितुः
किमपि किमपि प्राप्ताश्वासः समीहितसिद्धये ।
दिनकरकुलोत्तंसेनाधिष्ठितां नगरीं व्रज-
न्नपि गिरिसरिद्दुर्गान्मार्गानमंस्त न दुर्गमान् ॥ ६३ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये
नलचरिते कर्कोटकदर्शनो नाम त्रयोदशः सर्गः समाप्तः ।

## चतुर्दशः सर्गः ।

अथाश्रितां कुम्भसमुद्भवेन क्रमेण कृत्स्नां ककुभं विहाय ।
..........मप्यतिवाह्य किंचिन्नलः प्रपेदे नगरीमयोध्याम् ॥ १
प्रदातुमर्घ्यं सरयूजलानां पृषद्भिरम्भोरुहगन्धगर्भैः ।
क्रमादयोध्योपवनं व्रजन्तं प्रत्युद्ययौ तं शिशिरः समीरः ॥ २ ॥

एकैकशो निर्जितनामधेयैर्यूपच्छलाद्रोधसि संनिविष्टैः ।
इक्ष्वाकुवंशप्रभवैः क्षितीन्द्रैराराध्यमानां सरयूं स भेजे ॥ ३ ॥
अतीत्य कृत्स्नं वनवासखेदं समागतं वीक्ष्य नलं नदी सा ।
सितच्छदानां ध्वनिकैतवेन मुहुर्मुहुः स्वागतमन्वयुङ्क्त ॥ ४ ॥
तस्यां मिथः प्रेमवशंवदानि रथाङ्गनाम्नो मिथुनानि वीक्ष्य ।
विहाय भैमीमभितश्चरन्तमात्मानमन्तर्नृपतिर्निनिन्द ॥ ५ ॥
[1]अनीतियुक्तानपि नीतिभाजः [2]संख्यावतोऽपि स्वगुणैरसंख्यान् ।
[3]विलासिनोऽप्युन्नतसौधसंस्थान्गोष्ठीषु पौरानभिनन्दयन्ति(न्तीम्) ॥ ६ ॥
प्रकामदुर्गां सुखसंचरां च [4]निष्काममकान्तामपि कामकान्ताम् ।
राजन्वतीं वीक्ष्य पुरीमयोध्यां चिरोज्झितां स्वां नगरीं स दध्यौ ॥ ७ ॥
नलेति नाम प्रथितं विहाय स बाहुकेति प्रथयांबभूव ।
दशानुरूपां रचयन्ति चेष्टामासाद्य सिद्धिं त्वभियोगभाजः ॥ ८ ॥
कलिस्तु देहे निवसन्नलस्य लेभे भुजङ्गस्य विषेण दाहम् ।
अनागसि द्रोहकृतः सुजिह्मान्कियच्चिरं न ग्रसते विपत्तिः ॥ ९ ॥
अवापतुस्तापमतुल्यहेतुं समास्थितौ तौ वपुरेकमेव ।
भैमीवियोगेन नलः कलिस्तु विषेण तीव्रेण भुजङ्गभर्तुः ॥ १० ॥
रूपान्तरेणैव तिरोहितोऽपि गुणेन लोकोत्तर इत्यशंसि ।
आमोदपूरेण निवेद्यते हि कुञ्जेन गूढापि पटीरशाखा ॥ ११ ॥
[5]भार्ङ्गसरेः कर्णपुटोपकण्ठं निन्ये चरैस्तस्य गुणप्रकर्षः ।
क्रमेण निम्नैः पथिभिः समुद्रं प्रविश्यते प्रावृषि वारिपूरः ॥ १२ ॥
वृत्तं च विद्यां च दवीयसोऽपि विवेद भार्ङ्गसरिरस्य सर्वम् ।
चक्षुर्नृपाणां हि चराभिधानं गृह्णन्ति भावानपि विप्रकृष्टान् ॥ १३ ॥
स मन्त्रितां मन्त्रविनिश्चयेषु क्रीडारहस्येषु वयस्यभावम् ।
गजाश्वशास्त्रेषु विनेतृतां च जगाम तिग्मांशुकुलध्वजस्य ॥ १४ ॥

---

१. नीतिरहितान्, ईतिरहितांश्च. २. गणनायोग्यान्, पण्डितानपि. ३. विवरस्थायिनः, विलासयुक्तानपि. ४. न कामवन्मनोहराम्, निकामं कान्ताम्. 'नि स्यात्क्षेपे भृशार्थे च नित्यार्थे दानकर्मणि' इति हैमः. ५. भार्ङ्गसरिर्ऋतुपर्णो राजा.

यथा पुरा दोर्द्रविणप्रभावादभूदयोध्यापतिरस्य वश्यः ।
रूपान्तरेणापि तिरोहितस्य गुणप्रकर्षादभवत्तथैव ॥ १५ ॥

शीलेन वृत्तेन च सख्यभाजोः प्रीतिस्तयोः प्राप तथाभिवृद्धिम् ।
अमात्यलोकोऽपि यथोपभेजे शरीरमात्रेण पृथक्कृतौ तौ ॥ १६ ॥

ततो निदाघेन नितान्तखिन्नं विलोक्य लोकं करुणावतीव ।
तिरोदधाना किरणान्खरांशोराविर्बभूवाम्बुधरागमश्रीः ॥ १७ ॥

स्वमौलिरत्नद्युतिचित्रभासः सुरायुधाख्यस्य भुजंगमस्य ।
वल्मीकरन्ध्राद्बहिरुद्गतस्य भेजे फणत्वं तनुमेव चक्रम् ॥ १८ ॥

अमुक्ततोयं प्रतिरुद्धभानु परस्पर¹श्लेषयुतचित्रदण्डम् ।
अभून्नवाम्भोधरचक्रवालं लोकस्य साधारणमातपत्रम् ॥ १९ ॥

समाश्रितैः सानुषु वारिवाहैः समीरणान्दोलनया विलोलैः ।
प्रसार्यमाणैर्गगने विहर्तुं पक्षैरिव क्षोणिभृतो विरेजुः ॥ २० ॥

मया विसृष्टानि पयांसि नूनं विशोषयत्येष मयूखजालैः ।
इतीव गर्भाश्रितदीर्घरोषा कादम्बिनी चण्डरुचं रुरोध ॥ २१ ॥

लोकस्य संतापनिरासजन्यां संपद्यते कीर्तिमसौ मदीयाम् ।
इतीव रोषेण सुधाकरस्य ज्योत्स्नां समग्रामपिबत्पयोदः ॥ २२ ॥

यस्यां न सूर्यो न च चन्द्रतारं विभाति यत्रास्ति न कोऽपि भेदः ।
तां प्राप सिद्धिं पवमानयोगादम्भोदसंघः स्तिमितो बभूव ॥ २३ ॥

जम्बूवने पक्वफलापदेशाद्बोलम्बदम्भान्नवमालतीषु ।
रुद्धे घनैर्वैरिणि तिग्मभानौ स्वैरं तमः प्रादुरभूद्दिनेऽपि ॥ २४ ॥

विनातपत्रं पदवी न सेव्या दिनेषु संनद्धबलाहकेषु ।
इतीव नृत्यावसरे मयूराः कलापचक्रं व्यधुरातपत्रम् ॥ २५ ॥

मुदं प्रपन्नेषु विषादवन्तः केकाविलासैर्मुखरेषु मूकाः ।
लास्यैर्विलोलेषु जडत्वभाजः पान्था बभूवुः शिखिनां गणेषु ॥ २६ ॥

१. शक्रधनुषः.

KAVYAMÂLÂ. 76.

# THE GANGAVATARANA

OF

NÎLAKANṬHA DÎKSHIT

EDITED BY

PANḌIT KEDÂRANÂTHA S'ÂSTRÎ,

SON OF

MAHÂMAHOPÂDHYÂYA PANḌIT DURGÂPRASÂDA

OF

JAIPUR

AND

VÂSUDEVA LAXMAN S'ÂSTRÎ PANAS'IKAR.

PUBLISHED BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS.

Bombay:

1916.

*Price 8 Annas.*

काव्यमाला. ७६. 



श्रीनीलकण्ठदीक्षितविरचितं

# गङ्गावतरणम् ।



जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादतनयपण्डित-
केदारनाथशास्त्रिणा, मुम्बापुरवासिपणशीकरोपाह्वविद्वद्वरलक्ष्मण
शर्मात्मजवासुदेवशर्मणा च संशोधितः ।



द्वितीय संस्करणम् ।



तच्च

मुम्बय्यां

तुकाराम जावजी श्रेष्ठिभिः

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये स्वायसाक्षरैर्मुद्रयित्वा प्रकाशितः ।

शाकः १८३७, ख्रिस्ताब्दः १९१६.



मूल्यं ८ आणकाः ।

# श्रीनीलकण्ठदीक्षितः ।

## तत्समकालिका द्रविडदेशीया अन्यकवयश्च ।



जानन्ति खलु सर्वेऽपि पण्डिता दक्षिणदेशेषु श्रीमति भरद्वाजान्वये कृतावताराः श्रीमदप्पयदीक्षितेन्द्रा इति । तेषामेव दीक्षितमणीनां 'अप्पयदीक्षिताः', 'अप्पय्यदीक्षिताः', 'अप्पदीक्षिताः', इत्यपि नामान्तरद्वयं संदृश्यते ग्रन्थेषु । श्रीकण्ठमतप्रतिष्ठापनाचार्य–चतुरधिकशतप्रबन्धनिर्वाहक–महाव्रतयाजिन इति तेषां बिरुदावलिः । ते हि गतेषु ४६५४ कल्यब्देषु, तथातीतेषु १५५४ खिस्ताब्देषु, काञ्चीपुरपरिसरवर्तिनि अडयप्पलनाम्न्यग्रहारे भरद्वाजकुलोत्पन्नस्य छन्दोगस्य श्रीमदाचार्यदीक्षितस्य सूनोः श्रीविश्वजियाजिरङ्गराजमखिनो लब्धजन्मानो द्वासप्तति संवत्सरान्प्राप्य परःशतान्ग्रन्थान्निर्ममुः । सर्वतन्त्रस्वतन्त्राः श्रीमन्तो दीक्षितेन्द्राः । तत्रापि तेषामनितरसाधारणी नैपुणी पूर्वोत्तरयोर्मीमांसयोः । भक्तिश्च भगवति चन्द्रचूडे । द्राविडी (Tamil) तेषां जन्मभाषा । तेषां जन्मवत्सरादिकं सर्वमपि वृत्तान्तं विशदं व्याहरति दीक्षितचरिते शिवानन्दयोगीन्द्रः—

'वीणातत्त्व(४६५४)ज्ञसंख्यालसितकलिसमाभाक्प्रमाथीचवर्षे
कन्यामासे तु कृष्णप्रथमतिथियुतेऽप्युत्तरप्रोष्ठपाद्के ।
कन्यालग्नेऽद्रिकन्यापतिरमितदयाशेवधिर्वैदिकेषु
श्रीगौर्यै प्राग्यथाह स्म समजनि विरिञ्चीशपुर्यां कलेशः ॥' इति ।

एकादश रुद्रा इव तेषां समजनिषत तावन्तः पुत्राः । सर्वेऽपि कृतविद्या विनयोज्ज्वलाश्चासिषत समीप एव तेषां निर्याणसमये । निर्याणं च श्रीमति चिदम्बरक्षेत्रे समभूत् । इयं हि तेषां चरमा सूक्तिरिति श्लोकममुं पठन्ति विद्वांसः—

'चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं
सुताश्च विनयोज्ज्वलाः सुकृतयश्च काश्चित्कृताः ।

'मुनिरस्ति भरद्वाजः ख्यातस्त्रिभुवनेष्वपि ।
अत्रेर्यस्य जहौ रामोऽप्यरण्यभ्रमणश्रमम् ॥
तस्यान्वये महत्यासीत्क्षीरोद इव चन्द्रमाः ।
श्रीकण्ठचरणासक्तः श्रीमानप्पयदीक्षितः ॥

इति गङ्गावतरणकाव्ये प्रथमे सर्गे ।

'अप्पय्यदीक्षितेन्द्रानशेषविद्यागुरूनहं वन्दे ।
यत्कृतिबोधाबोधौ विद्वदविद्वद्विभाजकोपाधी ॥'

इति तन्त्रसिद्धान्तदीपिकायाम् ।

'विद्वद्गुरोर्विहितविश्वजिदध्वरस्य श्रीसर्वतोमुखमहाव्रतयाजिसूनोः ।
श्रीरङ्गराजमखिनः श्रितचन्द्रमौलिरस्त्यप्पदीक्षित इति प्रथितस्तनूजः ॥'

इति सिद्धान्तलेशसंग्रहे ।

वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा
न किंचिदहमर्थये शिवपदं दिदृक्षे परम् ॥' इति ।

उच्यते च शिवलीलार्णवमहाकाव्ये नीलकण्ठमखीन्द्रेण—

'कालेन शंभुः किल तावतापि कलाश्चतुःषष्टिमिताः प्रणिन्ये ।
द्वासप्ततिं प्राप्य समाः प्रबन्धाञ्छतं व्यधादप्पयदीक्षितेन्द्रः ॥'

इति १ सर्गे ६ श्लोकः

तैः कृताः कृतयश्चतुरधिकं शतमिति परिगण्यन्ते विज्ञैः । त इमे दीक्षितेन्द्रा वेलूर् (Velur)आख्यनगराधीश्वरेण चिन्नवीरप्पनायकपुत्रेण लिङ्गमनायकस्य पित्रा चिन्नबो म्मभूपालेन सादरं नितरां संभाविताः संमाननाभिः । वसन्तमस्य समीप एव तत्र नग बहुशोऽत्यवाहयन्स्वजीवितकालम् । उच्यते च ग्रन्थेषु—

'हेमाभिषेकसमये परितो निषण्णसौवर्णसंहतिमिषाच्चिनबोम्मभूपः ।
अप्पय्यदीक्षितमणेरनवद्यविद्याकल्पद्रुमस्य कुरुते कनकालवालम् ॥

कर्णश्रीचिन्नबोम्मक्षितिपतिरभितो लम्भयञ्जातकुम्भ-
स्तोमं हेमाभिषेकप्रणयनसमये यस्य मूर्तिं प्रशस्याम् ।
रेजे श्रीरङ्गराजाध्वरिवरकलशाम्भोधिलब्धप्रसूते-
र्विद्याकल्पद्रुमस्य स्वयमिव कलयञ्जातरूपालवालम् ॥'

इति समरपुंगवदीक्षितकृत-यात्राप्रबंधचम्पूकाव्ये

'नानादेशनरेन्द्रमण्डलमहायत्नातिदूरीभव-
त्कादाचित्कपदारविन्दविनतेरप्पय्ययज्वप्रभोः ।
शैवोत्कर्षपरिष्कृतैरहरहः सूक्तैः सुधालालितैः
फुल्लत्कर्णपुटस्य बोम्मनृपतेः पुण्यानि गण्यानि किम् ॥

इत्यन्यत्र च

अनन्तरं चाराधिता दीक्षितेन्द्राः पेन्नुगोण्डाधीशेन श्रीरङ्गरायसोदरेण तिरुमलरायनृ

१. असौ चिन्नबोम्मभूपालो विजयनगराधीशस्य नरसिंहवंशीयस्य सदाशिवमहारायस्य पेन्नुगोण्डाधीशस्य कर्णाटराजस्य श्रीरङ्गमहारायस्य च, सामन्तोऽभूत् । चिन्नबोम्मभूपालस्यास्य प्रार्थनया सदाशिवमहारायेण श्रीरङ्गमहारायेण च दत्तानि सप्त दानशासनपत्राणि वेलूर्(Velur)ज्वरखण्डेश्वरदेवायतने शिलायामुत्कीर्णानि सन्ति । तानि च १४८८ (A. D. 1566) शकाब्दे, १४९७ (A. D. 1575) शकाब्दे च उत्कीर्णानि । (Vide pp. 69–75, Vol. I., South Indian Inscriptions, by Dr. E. Hultzsch.)

जेन वेङ्कटदेवेन । नियोगेन चास्याकुर्वन्कुवलयानन्दं नामार्थालंकारप्रबन्धम्—

'अमुं कुवलयानन्दमकरोदप्पदीक्षितः ।
नियोगाद्वेङ्कटपतेर्निरुपाधिकृपानिधेः ॥'

इति कुवलयानन्दे ।

अनन्तरं च दीक्षितेन्द्रा अतीतेषु १५४८ शालिवाहनशकाब्देषु, यातेषु च १६२६ ख्रिस्ताब्देषु, 'अक्षय'नाम्नि संवत्सरे शैववैष्णवानां विवादं कमपि निर्णेतुं पाण्ड्यदेशाधिपतिना तिरुमलैनायकमहाराजेन बहु प्रार्थितास्तत्रागमन् । प्रतीयते चायमंशः 'ओरिएण्टल हिस्टॉरिकल म्यान्युस्क्रिप्टस'आख्यग्रन्थतोऽपि । अथ स्वदेशमागत्य कियता

१. वेङ्कटदेवराज्यसमयश्च १५०८ (A. D. 1586) शकाब्दादारभ्य १५३५ (A. D. 1613) शकाब्दावधीति निर्णीतम् । (Vide p. xiii, Second Report on Sanskrit Manuscripts, by Dr. E. Hultzsch.)

२. 'Oriental Historical Manuscripts' translated by W. Taylor, Vol. II, p. 149—

"In the year S. S 1544, in Dundubhi year, the 17th of Masi month, Muthu-Tirumalai Naicker came to Madura in order to be anointed (or installed) to receive the sceptre and other ensigns of royal authority.

"Having thus arranged the plan, the whole was thus begun to be carried into execution at once on the 10th of Vaiyasi month, of Akshaya year during the increase of the moon. From that time forward as the master came duly to inspect the work, it was carried on with great care. As they were proceeding first in excavating the Teppakkulam they dug up from the middle a Ganapati (or image of Ganesa) and caused the same to condescend to dwell in a temple built for the purpose. As they were placing the sculptured pillar of the Vasanta-mandapam and were about to fix the one which bore the representation of Yekapada-murti they were opposed by the Vaishnavas. Hence a dispute arose between them and the Saivas, which lasted during six months and was carried on in the presence of the Sovereign. Two arbitrators were appointed, Appa Dikshitar on the part of

mistakes N for Ap. D.

कालेन कालधर्मं गता दीक्षिताः । अतः सर्वथा निर्णीयते १६२६ तमाब्दात्पूर्वं न तेषां निर्याणसमय इति । शाब्दिकसार्वभौमः श्रीमान्भट्टोजिदीक्षितोऽपि तानेव गुरून्प्रार्थयमानस्तेभ्य एवाध्यैष्ट श्रीमद्भाष्यं ब्रह्मसूत्राणां श्रीमच्छंकरभगवत्पादप्रणीतम् । एवं व्याहरन्ति दाक्षिणात्या ऐतिहासिकाः—'श्रीमान्भट्टोजिदीक्षितः स्वयं विरचितान्ग्रन्थान्बहूंल्लेखकैर्लेखयित्वा प्राहिणोद्वहुभ्यः पण्डितेभ्यः । ते च दृष्ट्वा तां सरणिमतिमञ्जुलां नूत्नां चापाठयंस्तामेव शिष्यान् । अथ बहुना कालेन स एव दक्षिणां दिशं प्रपेदे सह शिष्यैः । तदा किल ददर्श क्वचिन्निकटे चिदम्बरस्य[1] वसतः श्रीमदप्पयदीक्षितेन्द्रान् तत्र च सति प्रसङ्गे तानसावधिजगिमवानखिलशास्त्रवेदनचणानधिगतवेदान्तरहस्यान् । तेषामेव मुखात्प्रयतः शुश्राव कौमारिलं तन्त्रम्, श्रीमद्भगवत्पादशंकरमुनिप्रणीतं ब्रह्मसूत्रभाष्यं च ततः कुर्वन्गुरवे दक्षिणां ग्रन्थान्ते चोदितः स्वयं गुरुणा पूर्वोत्तरमीमांसयोः कर्तुमेकैकं ग्रन्थम् । प्राणैषीदसौ 'तन्त्रसिद्धान्तदीपिकाम्', 'श्रीमत्तत्वकौस्तुभं' च । तन्त्रसिद्धान्तदीपिकायां श्रीमदप्पयदीक्षितेन्द्रानात्मनो गुरून्व्याहरति श्रीभट्टोजिदीक्षितः । यथा—

'अप्पय्यदीक्षितेन्द्रानशेषविद्यागुरूनहं वन्दे ।
यत्कृतिबोधाबोधौ विद्वदविद्वद्विभाजकोपाधी ॥' इति ।

तत्त्वकौस्तुभे च द्वितीयपरिच्छेदोपक्रमे 'प्रायशो विदुषां मुदे' इति चायमंशः सूचित इति । तथा ततः परं श्रीमति व्याकरणेऽपि ग्रन्थकरणं प्रार्थितदीक्षितचरणैर्विरचिता श्रीमति नक्षत्रवादावली । यत्र च प्रतिद्वन्द्वितया 'अधुना पाणिनितन्त्रे विदुषां प्रीत्यै विरच्यन्ते' इति स्पष्टं तस्य ग्रन्थस्य विद्वत्प्रीतिहेतुत्वं विशिष्योक्तमिति च । आहुराहास्तु—गङ्गायात्रार्थमुदीचीं गतैः श्रीमदप्पयदीक्षितैःसह समागमः श्रीभट्टोजिदीक्षितस्येत्यामनन्ति। सत्यं गङ्गायात्रामकुर्वञ्छ्रीमदप्पययज्वानः । उच्यते च 'गङ्गावतरण'काव्ये श्रीनीलकण्ठमखीन्द्रेण—'गङ्गायां यः पुरा स्नातो देवश्चन्द्रार्धशेखरः । गाङ्गेयेन पुनः सस्नौ गोऽवतीर्य यदात्मना ॥' इति प्रथमसर्गे श्रीमदप्पयदीक्षितप्रशंसायाम । सर्वथा श्रीमदप्पदीक्षितानां न्यूनवयाः समकालिकश्च श्रीमान्भट्टोजिदीक्षित इति सिद्धम् ।

---

the Saivas, and Ayya Dikshitar Ayyan on the part of the Vaishnavas: these then consulted Sanskrit authorities and made the Shastras agree; after which the pillar of Yekapada-murti was fixed in its place".

१. लघुसिद्धान्तकौमुद्या मध्यसिद्धान्तकौमुद्याश्च प्रणेता वरदराजोऽस्यैव भट्टोजिदीक्षितस्य शिष्यः—

'नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम् ।
पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम् ॥

श्रीमदप्पयदीक्षितस्य समानकालिकाः कवयः पण्डिताश्च—

(१) सुप्रसिद्धः श्रीमान्रत्नखेटदीक्षितः, (२) आलंकारिकचूडामणिर्महाकविर्जगन्नाथपण्डितः,(३) वैयाकरणसार्वभौमः श्रीमान्भट्टोजिदीक्षितः,(४)अद्वैतविद्याचार्यश्चोलभूवल्लभस्याच्युतनायकस्य तत्तनयस्य रघुनाथभूपालस्य च मन्त्री विश्वविश्रुतौदार्यो गोविन्ददीक्षितश्च।

रत्नखेटदीक्षितस्य श्रीनिवासदीक्षित इत्येव स्वपित्रा कृतं नाम । तस्य रत्नखेटश्रीनिवासदीक्षित इत्यपि भूयान्व्यवहारः । तस्य संध्यावर्णनचातुर्यात्प्रमुदितेन राज्ञा कृतं नाम रत्नखेटाध्वरीति । उच्यते चैवं तस्य पुत्रेण राजचूडामणिदीक्षितेन प्रणीतस्य रुक्मिणीपरिणयमहाकाव्यस्य व्याख्यानारम्भे व्याख्यात्रा बालयज्ञवेदेश्वरेण—

'संध्यासंधुक्षिताम्भोधरनलिकगणादुद्गतान्सीसखण्डां-
स्ताराकारान्निरोद्धुं शशिरविकपटाद्बिभ्रतो रत्नखेटौ
अन्योन्यं युध्यमानावुदयचरमभूभृत्प्रवीराविति द्रा-
गुक्त्या ख्यातापराख्यः क्षितिपतिवचसा रत्नखेटाध्वरीति ॥'

श्रीमतो रत्नखेटदीक्षितस्य कृतयः—(१) शितिकण्ठविजयकाव्यम्, (२) भावनापुरुषोत्तमनाटकम्,(३)अद्वैतास्तवकौस्तुभम्,(४) वादतारावली,(५) मध्वध्वंसनम्,(६)बौद्धतन्त्रमथनम्, (७)वेदान्तवादावली, (८) मणिदर्पणम्,(९) समयसर्वस्वम्, (१०)विधिनिर्णयम, (११) रत्नप्रदीपम् । अन्ये च सन्ति बहवस्तत्प्रणीताः प्रबन्धाः । उच्यन्ते च तत्कृतप्रबन्धानां नामानि पूर्वोक्तव्याख्याने । यथा—

'अद्वैतास्तवकौस्तुभं व्यरचयद्यो वादतारावलीं
मध्वध्वंसनबौद्धतन्त्रमथने वेदान्तवादावलीम् ।
प्रख्यातं मणिदर्पणं समयसर्वस्वं विधेर्निर्णयं
तत्त्वानां परिशुद्धिबोधविमलं रत्नप्रदीपं स्मृतेः ॥ १४ ॥

विद्याविशेषमणिजालखनेर्गुरुर्श्रीभट्टोजिदीक्षितमुखाम्बुनिधेर्गृहीत्वा ।
सिद्धान्तमध्यमवनौ प्रकटीकरोति कश्चिद्धनी वरदराज इति प्रसिद्धः ॥'

इति तञ्जोर्राजकीयपुस्तकालयस्थ-लघुसिद्धान्तकौमुदीप्रारम्भे ।

'नत्वा वरदराजः श्रीगुरून्भट्टोजिदीक्षितान् ।
करोति पाणिनीयानां मध्यसिद्धान्तकौमुदीम् ॥'

अन्ते च—

'एषा वरदराजेन बालानामुपकारिका ।
अकारि पाणिनीयानां मध्यसिद्धान्तकौमुदी ॥
कृतिर्वरदराजस्य मध्यसिद्धान्तकौमुदी ।
तस्याः संख्या तु विज्ञेया खर्बाणकरवह्निभिः ॥

इति श्रीरविटिकंटिकंटिवरदराजभट्टकृत-मध्यसिद्धान्तकौमुदी ॥'

इति तञ्जोर्राजकीयपुस्तकालयस्थ-मध्यसिद्धान्तकौमुद्याम् ।

यो भावनापुरुषवर्यमुखान्यकार्षीदष्टादशापि च दशाद्भुतरूपकाणि ।
भावोत्तराणि शतकण्ठजयादिमानि काव्यानि षष्टिमतनोदमृतायितानि ॥ १५ ॥
ध्वन्यध्वन्यमनोविनोदनिपुणाः साहित्यसंजीविनी-
भावोद्भेदरसास्रवादिकृतयः पारेशतं यत्कृताः ।
अन्ये क्षौद्ररसार्द्रसुन्दरगिरः क्षुद्रप्रबन्धाः शतं
छन्दोज्यौतिषमन्त्रतन्त्रविषया भाषाप्रबन्धास्तथा ॥ १६ ॥
अन्याश्च यस्य कृतयो निखिलागमान्तसिद्धान्तितान्तरनिरन्तरसूक्तिगुम्फाः ।
षड्दर्शनीसकलमर्मविवेककर्मकर्मक्षमाः सुकृतिनां मुदमावहन्ति ॥ १७ ॥'

रत्नखेटदीक्षितस्य परम्परा यथा—

श्रीभवस्वामी (भाष्यकारः)
|
श्रीकृष्णार्यः (आह्निकप्रणेता)
|
कुमारभवस्वामी (अद्वैतचिन्तामणिकारः)
|
श्रीकृष्णार्यः
|
श्रीभवस्वामिभट्टः
|
श्रीरत्नखेटश्रीनिवासाध्वरी

तथा चोच्यते रुक्मिणीपरिणयकाव्यस्य व्याख्यानारम्भे—

'यः षष्ठो भाष्यकर्तुः क्रतुवरमहितश्रीभवस्वामियष्टुः
श्रीकृष्णार्यस्य दैनंदिनकृतिकृतिनः सोमपः पञ्चमो यः ।
नप्ता योऽद्वैतचिन्तामणिविरचयितुः पौण्डरीकादियष्टुः
सर्वज्ञातुः कुमाराह्वयमिलितभवस्वामियज्वाभिधस्य ॥ ५ ॥
श्रीकृष्णार्यस्य पौत्रः प्रतिदिवसमविश्रान्तमन्नप्रदातु-
र्ज्योतिष्टोमादियष्टुर्विविधकृतिकृतः सर्वविद्याधिकस्य ।
यः श्रीवैकुण्ठघण्टामणिरिति महितश्रीभवस्वामिभट्ट-
स्याद्वैतज्ञानधूताखिलकलुषगणस्यात्मजः स्वात्मवेत्तुः ॥ ६ ॥'

यदुच्यते श्रीमदप्पयदीक्षितकृत'सिद्धान्तलेशसंग्रह'ग्रन्थस्य प्रारम्भे दीक्षितवृत्तान्तलेखनप्रवृत्तैर्भट्टश्रीनारायणशास्त्रिभिः 'अस्य (अप्पयदीक्षितस्य) समकालिकाः कवयः पण्डिताश्च विलिख्यन्ते' इत्यारभ्य 'आनन्दरायमखी विद्यापरिणय–जीवानन्दादिप्रणेतास्य मान्यतमो वृद्धः' इति, तत्प्रमादकृतम् । अयमानन्दरायमखी भोसलवंशभूपतिकुलामात्यस्य

१. 'श्रीमद्भोसलवंशभूपतिकुलामात्येषु विख्यातिमा-
न्भारद्वाजकुलार्णवेन्दुरुदभूद्बावाजिरग्न्याहितः ।

बावाजिनाम्नो नप्ता, तञ्जनगराधीशस्यैकोजिमहाराजस्य मन्त्रिणो गङ्गाधराध्वरिणःपौत्रः, तस्यैव राज्ञो मन्त्रिणस्त्रिपुरविजयचम्पूप्रबन्धस्य निर्मातुर्नृसिंहरायमखिनस्तनूजः, श्रीधर्मादिग्रन्थकृतस्त्र्यम्बकरायमखिनस्तद्वैमात्रेयस्य मुकुन्दविलासकाव्य-राघवाभ्युदयनाटकादीनां प्रणेतुर्भगवन्तरायस्य च भ्रातृव्यः, शहजि-शरभोजि-तुक्कोजिमहीपालानां मन्त्री च। स्वयं विद्यापरिणय-जीवानन्दादिनाटकप्रणेता, आश्वलायनगृह्यसूत्रव्याख्याता च। तेषां राज्ञां राज्यारम्भकालोऽधस्तात्संदर्श्यते—

| | | |
|---|---|---|
| एकोजिराजस्य | १६७६ | खिस्ताब्दाः। |
| शहजिराजस्य | १६८४ | ,, |
| शरभोजिराजस्य | १७११ | ,, |
| तुक्कोजिराजस्य | १७२९ | ,, |

तुक्कोजिमहाराज. १७३६ वत्सरावधि सप्तसंवत्सरान्राज्यमकरोत्। असावानन्दरायमखी स्वपितृव्यकृतमखानुष्ठानसमये धातृवर्षे (१६९८ खिस्ताब्दे) अनतीतकौमारोऽभूत्—

पुत्रस्य किलैकभूपतिमणेर्मन्त्री सदैवादृत-
स्तेनासीद्गुरुवत्प्रगल्भधिषणो गङ्गाधराख्योऽध्वरी ॥
तस्य द्वौ तनयावुदारचरितौ कृष्णाम्बिकागर्भजा-
वेकक्ष्मापतिलालितौ गुरुपदे चारोप्य संमानितौ।
तत्पुत्रेण च शाहजिक्षितिभृता ज्येष्ठानुवृत्त्यादृतौ
तत्तादृग्विविधाग्रहारकरणाद्द्विद्वत्प्रतिष्ठापकौ ॥
ज्येष्ठस्तत्र सदावदातचरितः श्रीमान्नृसिंहाध्वरी
गायत्रीमनुपासनादिभिरपि श्रौतैश्च सत्कर्मभिः।
आत्मानं परिपूर्य तं सुचरितैः पुत्रैः प्रतिष्ठाप्य च
त्रेधा ब्रह्महिताय सत्कृतिचितान्स ब्रह्मलोकानगात् ॥
तस्यात्मत्रितयेऽग्रजस्तु धृतिमानानन्दरायाध्वरी
कौमारात्प्रभृति प्रगल्भधिषणः श्रीशाहराजादृतः।
इष्टापूर्तसदन्नदानमुहितत्रैविद्यवृद्धैः सह
श्रुत्युक्तार्थपरिष्क्रियापटुमतिः सत्कर्मनिष्णातधीः ॥

* * * * *

ज्येष्ठे तत्र नृसिंहयज्वनि दिवं यातेऽनुजस्तत्सुता-
न्पश्यन्पुत्रवदग्रजापचितिमप्यानन्दराये दधत्।
वैतानानि च कारयन्सुचरितान्येतैः स्वपुत्रेण च
श्रीमानत्र महाग्निचिद्विजयते श्रीत्र्यम्बकार्योऽध्वरी ॥'

इति ढुण्डिव्यासरायज्वकृते मुद्राराक्षसव्याख्याने।

'धातृवर्षे यदा यज्ञसेवार्थमहमागतः ।
श्रीमहाराजराजस्य मन्त्रिणस्त्र्यम्बकप्रभोः ॥
महाराजस्तु मां प्रीत्या स्वसभायामवासयत् ।
भारतश्रवणार्थाय रात्रिंदिवमुदारधीः ॥
यदा मासत्रयादूर्ध्वं प्राप्यानुज्ञां महीपतेः ।
गन्तुमिच्छामि च तदा धर्मशास्त्रनिबन्धने ॥
महाराजेन चाज्ञातो गौरीमायूरमागतः ।
तस्मिन्वर्षे वृश्चिकार्के धर्मशास्त्रसुधानिधेः ॥
एकेनैव मया पुत्रयुक्तेन शनकैः कृते ।
बुद्धिदण्डेन मथने रात्रिंदिवमनेकधा ॥
अष्टभिर्लब्धवानस्मि वत्सरैस्तत्फलं महत् ।
आचारनवनीतं तन्मृदु सर्वमनोहरम् ॥
महाराजस्य दयया तत्संग्राह्यमभूद्भुवि ।
समाप्तं पञ्चदशभिः सहस्रैर्ग्रन्थसंख्यया ॥
प्रचारोऽस्य महाराजाधीन एव हि सर्वथा ।
अहमप्पाध्वरी नाम्ना महाराजेन स दरम् ॥
दत्तां महीं समादाय.........दिसंभृतेः ।
धान्यैः परम्परासिद्धे ग्रामे कृष्या समार्जितैः ॥
कुर्वन्कुटुम्बभरणं पुत्रपौत्रैः समावृतः ।
श्रेयः प्रार्थयमानः सन्महाराजस्य संततम् ॥
आयुःशेषं सुखं वस्तुमिच्छाम्यभिक्रियान्तिके ।
मनोरथो महानेष महाराजेन पूर्यताम् ॥
एकक्ष्मापतिपूर्वपुण्यसुकृतोत्कर्षेण लब्धोदयो
दीपाम्बोदरवासभाग्यमहिमप्रख्यातपुण्योच्चयः ।
श्रीशाहक्षितिराट् प्रशास्तु वसुधामाचन्द्रमप्पाध्वरी
यद्दत्तान्नबलेन धर्मविषयं शास्त्रं समग्रन्थयत् ॥'

इत्यप्पादीक्षितविरचित आचारनवनीते ।

**सूत्रधारः**—अद्य भारद्वाजकुलजलधिकौस्तुभेन त्र्यम्बकरायमखिना समारब्धस्य क्रतोर्दिदृक्षयागतेन नानादिगन्तवासिना विद्वज्जनसभाजनेन सबहुमानमाहूय समादिष्टोऽस्मि ।

**पारिपार्श्विकः**—वैदेशिकोऽस्मीति पृच्छामि कः पुनरयं त्र्यम्बकमखी नाम ।

**सूत्रधारः**—किं न जानासि निजगुणगणकुसुमसुरभीकृतदिगन्तमेतमपि । तथा हि ।

कुर्वाणः सकलान्यदीयधिषणामालम्ब्य राज्यक्रमा-
नालोक्यानुदिनं निजामुपचितामामोदमानः श्रियम्
नित्यं भोसलवंशवारिधिविधुः शाहावनीवासवो
यस्मिन्नेव गुणोज्ज्वले कलयते वाचस्पतेर्गौरवम् ॥

अपि च ।

यस्यैवाचारगाम्भीर्यशौर्यौदार्यादिभिर्गुणैः ।
वसिष्ठवार्धिविजयकर्णाद्याः पुनरुक्तयः ॥

अन्यच्च ।

नियन्त्रितात्मा निगमान्तविद्यामधीत्य धीमानमलप्रसूतिः ।
ध्यायन्नसौ ब्रह्म निजात्मरूपं तदात्मना भावयति प्रपञ्चम् ॥

**पारिपार्श्विकः**—(सप्रत्यभिज्ञम् ।)

एकक्ष्माधिपतेर्निर्विधगुणः साचिव्यधुर्यः श्रुतः
प्राज्ञः कश्चिदजातशत्रुसदृशो गङ्गाधरार्याभिधः ।
नैस्तैर्येन निजैरनन्यसुलभैराविर्ज्यमानो गुणै-
राचार्यप्रतिपत्तिमेव कलयन्नासीदमुष्मिन्नृपः ॥

**सूत्रधारः**—दिष्ट्या जानासि तं महाभागम् । तर्हि तस्यात्मसंभवं नृसिंहरायमखीति सुगृहीतनामधेयं महानुभावमपि भवाञ्जानीयात् ।

**पारिपार्श्विकः**—बाढं जाने । यस्य किल

कृतः पित्रा बाल्ये निरुपमगुणाढ्यो निजपदे
निजैरेकक्षोणीपतिहृदयमाराध्य चरितैः ।
तदेवायं भूत्वा चरति नियतं मूर्तिमदिति
प्रपञ्चे विख्यातिस्तदिनरदुरापा विजयते ॥

**सूत्रधारः**—तस्यैवायमनुजन्मा ।

**पारिपार्श्विकः**—ननु तदनुजत्वमेव पर्याप्तं प्रख्यात्यै ।

**सूत्रधारः**—सत्यमुक्तं भवता ।

**पारिपार्श्विकः**—संप्रति यज्ञवाटं प्रविष्टोऽहं शालान्तरप्रविष्टमनतीतकौमारमन्यं कमपि यजमानमद्राक्षम् । तं पुनर्न जानामि ।

**सूत्रधारः**—कथं न जानासि ।

साचिव्यधुर्यो विहितः पितृव्येणाहत्य शाहक्षितिपालमौलेः ।
आनन्दनामा विमलप्रसूतिः पुत्रो नृसिंहाध्वरिणः स एषः ॥

**पारिपार्श्विकः**—भाव, कीदृशः परिषदादेशः ।

**सूत्रधारः**—तस्यैव त्र्यम्बकरायमखिनः समनन्तरानुजेन भगवन्तरायनामधेयेन सत्कविसार्वभौमेन संप्रति प्रणीतं राघवाभ्युदयं नाम नाटकमभिनेतव्यमिति ।'

इति राघवाभ्युदयनाटके ।

अतोऽयमानन्दरायमखी श्रीमदप्पयदीक्षितानां स्वर्गारोहणकाले १६२६ क्रिस्ताब्दे जातमात्रोऽपि नाभूदिति स्पष्टम्। एवं स्थिते कथमस्य संभाव्यते दीक्षितैः सह समकालिकता, कथमस्य प्रसज्येत दीक्षितैरपि माननीयता वा ।

अपरं च । तस्मिन्नेव दीक्षितवृत्तान्तप्रकरणे 'दीक्षितानां समानकालिको न्यूनवया राजचूडामणिदीक्षितो भावनापुरुषोत्तमनाटककृत्' इति भट्टश्रीनारायणशास्त्रिणो वदन्ति । प्रसज्येत दीक्षितैः सह समकालिकत्वं तदपेक्षया न्यूनवयस्त्वं च श्रीमतो राजचूडामणिदीक्षितस्य । परं तु न्यूनवयसा राजचूडामणिदीक्षितेन कृतं भावनापुरुषोत्तमं स्वमते दीक्षितानामपि मान्यतमो वृद्ध आनन्दरायमखी विद्यापरिणयनाटके कथं चिरादेव निर्वर्तितं व्याहरतीति शास्त्रिणां चिन्तालवोऽपि चेतःपदवीं नारूढ इव । एवमस्ति किल प्रस्तावनायां विद्यापरिणयनाटकस्य—

'**पारिपार्श्विकः**—भाव, कृष्णमिश्रप्रभृतिभिरत्र प्रबोधचन्द्रोदय इति, संकल्पसूर्योदय इति, भावनापुरुषोत्तम इति च न्यबन्धि नाम बहुधा प्राचीनैः । किमनेनाभिनवमंरम्भेण ।' इति ।

अत्रोपरितनवाक्यादानन्दरायमखिनः प्राचीनो भावनापुरुषोत्तमकृदिति सिद्धम् वस्तुतो भावनापुरुषोत्तमनाटकस्य प्रबन्द्धा न राजचूडामणिदीक्षितः, किंतु तस्य पिता तोण्डीरमण्डलान्तर्वर्तिशृङ्गसमुद्राग्रहारवास्तव्यः कृष्णभट्टारकपौत्रः भवस्वामिनो लक्ष्म्याः पुत्रः, रत्नखेटश्रीनिवासदीक्षित इति सुप्रसिद्धः कविरिति तस्मादेव ग्रन्थात् स्पष्टं भवति । तथा च भावनापुरुषोत्तमनाटके—

'**नटी**—ईरिसप्पबन्धणिव्वाहदत्तओ को वा कइ भवे ।

**सूत्रधारः**—अये, किमेतमपि न जानासि । अस्ति खलु कश्चित्तोण्डीरेषु श्रीशृङ्गसमुद्राभिधानो महानग्रहारः ।

तत्रास्ति कश्चित्तरुणाग्निहोत्री षड्दर्शनीसागरपारदृश्वा ।
शतावधानीत्यपराभिधानः श्रीश्रीनिवासाध्वरिसार्वभौमः ॥

**नटी**—केण वा ण जाणीअदि सो ।

**सूत्रधारः**—स एव विश्वामित्रवंशमुक्तामणिः श्रीकृष्णभट्टारकपौत्रः श्रीभवस्वामिनः सूनुर्लक्ष्मीगर्भसंभवः श्रीकविवादिगजकेसरी भट्टाचार्यः प्रतिदिनप्रबन्धकर्ता तत्तादृशसकलविद्याचमत्कृतवादव्याख्यानोपन्यासकौशलेन चोलभूवल्लभेनास्थानीरचितपत्रावलम्बः षड्भाषासार्वभौमः सर्वतन्त्रस्वतन्त्रः श्रीमदभिनवभवभूतिः श्रीरत्नखेटश्रीनिवासाध्वरीन्द्रोऽत्र प्रबन्द्धा ।' इति ।

एवं यदुच्यते भट्टश्रीनारायणशास्त्रिभिश्चिन्नबोम्मनायको विजयनगराधीश इति, तस्य पिता कृष्णराज इति, ज्येष्ठो भ्राता नरसिंह इति. तत्सर्वं भ्रमप्रयुक्तमश्रद्धेयमविचारणीयं च ।

तत्तादृशनिरतिशयमहिम्नां श्रीमदप्पयदीक्षितानां यवीयसो भ्रातुराच्चादीक्षितस्य पौत्र

सुप्रसिद्धः श्रीमान्नीलकण्ठमखीन्द्रः। अस्य नारायणाध्वरी पिता। माता चास्य भूमिदेवी। अयं तयोर्द्वितीयो नन्दनः। भ्रातरश्चास्य चत्वारः समभूवन्। सर्वेऽपि ते सुशिक्षिताः सर्वास्वपि विद्यासु कवयश्च। परमेक एव तेषु नाम्ना ज्ञायते कुशकुमुद्वतीयनाटकस्य प्रबन्द्धा अतिरात्रयज्वा। श्रीनीलकण्ठमखीन्द्रस्य जीवनकालः सप्तदशशतकपूर्वभाग इति स्पष्टमुपलभ्यते तदीयनीलकण्ठविजयचम्पूकाव्यतः। यतः प्राबध्नात्कविस्तं प्रबन्धमतीतेषु ४७३८ कल्यब्देषु। उच्यते च कविना स्वेनैव तत्र ग्रन्थे—

'अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु।
कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम्॥' इति।

शिवलीलार्णवमहाकाव्यस्य नवमसर्गे गङ्गारोधसि हिमवत्प्रान्ते देव्यास्तटातकायाः सेनानिवेशमुक्त्वा तत्प्रदेशवर्णनप्रवृत्तस्यास्य मुखात् 'अस्मादृशाः क्षितिसुराः पुनराहरन्त भागीरथीतटरुहाणि कुशाङ्कुराणि।' इत्ययत्नपूर्वकं निःसरन्त्या वाण्या प्रथमवर्णजत्वं शिष्टाचारसंपन्नत्वं चास्य सम्यङ्निरूप्यते। श्रीकण्ठमतसर्वस्ववेदी चायम्। अस्य दृढोऽभिनिवेशः श्रीमति शैवसिद्धान्त इति प्रतिभासते। स्वयमाह च—'शैवा वयमा चतुर्वेदनात्'इति वैराग्यशतके, 'आ गर्भादा कुलपरिवृढादा चतुर्वक्त्रतोऽपि त्वत्पादाब्जप्रपदनपरान्वेत्सि नश्चन्द्रमौले' इत्यदसीयशान्तिविलासे च। एवमन्यत्रापि। यथा नीलकण्ठदीक्षितस्य महती प्रथा, न तथा श्रीमदप्पयदीक्षितेन्द्रतनुभुवामपि। नान्यः कोऽपि तदानींतनेषु तदधिकस्तन्मदृशो वा दर्शनेषु साहित्ये वा। अयमेव श्रेष्ठः कवीनामस्य समकालिकानाम्। मञ्जुलपदसंनिवेशा विचित्रोल्लेखा रसनिर्भरा विशङ्कटप्रवाहा चास्य साहित्यसरणिः। नैव क्लिश्नाति स्वचेतः परचेतांसि वा केवलशब्दचित्रेषु यमकेषु वा। 'नीलकण्ठमखिनां सदसि सकृत्प्रविष्टस्यापि समुज्जृम्भते सरसपदसंदर्भवैदग्धी' इत्युद्घोषयति 'प्रत्यग्रपतञ्जलिरभिनवप्राचेतसः' श्रीरामभद्रमखीन्द्रः शृङ्गारतिलकभाणे। अस्य साहित्यवैदग्धी सर्वत्र प्रद्योततेऽस्य लघुकाव्येषु महाकाव्येषु च। अस्य लघुकाव्यानि—(१) कलिविडम्बनम्, (२) सभारञ्जनम्, (३) अन्यापदेशशतकम्, (४) शान्तिविलासः, (५) वैराग्यशतकम्, (६) आनन्दसागरस्तवः। एते नीलकण्ठदीक्षितस्य षड् ग्रन्था इति व्यपदिश्यन्ते। अस्य महाकाव्येषु श्रेष्ठं शिवलीलार्णवमहाकाव्यं द्वाविंशतिसर्गपरिमितम्। द्वितीयं च गङ्गावतरणकाव्यमष्टसर्गपरिमितम्। श्रीमदप्पयदीक्षितानां स्वर्गारोहणतः परं द्वादशसंवत्सरेभ्यो(?)ऽधिकेषु गतेषु श्रीनीलकण्ठविजयाभिधश्चम्पूप्रबन्धो निरमायि। नीलकण्ठविजय इव नान्यत्र तस्य ग्रन्थेषु ग्रन्थनिर्माणकालः प्रोच्यते। ग्रन्थानां पौर्वापर्यं केनापि प्रकारेण स्फुटं न परिस्फुरति। परंतु सुगमं श्रीमदप्पयदीक्षितानां स्वर्गारोहणानन्तरमेव सर्वेषामपि करणमिति। केचिद्द्वादशहायनेन कविना नीलकण्ठविजयो निर्वर्तित इत्याचक्षते। तन्न श्रद्धेयं प्रमाणाभावात्। श्रूयते अन्या अपि सन्ति बह्व्यस्तदीयाः कृतयः काव्येषु दर्शनेष्वपीति। तासु च (१) नलचरितनाटकम्, (२) कैय्यटव्याख्यानम्, (३) शिवतत्त्वरहस्यम्, इत्येता एवाद्य नामतो ज्ञायन्ते। गृह्यन्ते च तासां नामानि कुशकुमुद्वतीयनाटके,

तस्य तृतीयनन्दनेन गीर्वाणेन्द्रेण कृते शृङ्गारकोशभाणे च । यथा—'एष खलु द्वितीयशंकररूपाणामप्पय्यदीक्षितानां नप्ता नलचरित्रनाटकप्रबन्द्धा' इति कुशकुमुद्वतीयनाटके, 'कैय्यटव्याख्यानशिवतत्त्वरहस्याद्यनेकप्रबन्धनिर्मातुः * * पवित्रकीर्तेर्नीलकण्ठमखिनः' इति पूर्वोक्ते च भाणे समुपलभ्यते । श्रीनीलकण्ठमखीन्द्रो मधुरानगर्यां तिरुमलैनायकमहाराजस्य सदसि पण्डितसार्वभौमोऽमात्यप्रवरश्चाभूत् । तत्पुत्रा अपि तामेव पश्चादध्यवात्सुरित्ययमंशः सूच्यते गीर्वाणेन्द्रेणापि 'शृङ्गारकोशो नाम भाण इत्यधुनैव खलु निवेदितं मधुरापुरादागतेन रङ्गकेतुना' इति वाक्येन । श्रीनीलकण्ठदीक्षितस्य अय्यादीक्षित इति चाभून्नामान्तरम् । तथा च तमद्यापि व्यवहरन्ति विज्ञाः । अत्र च तञ्जनगरे वेदमूर्तिजम्बुनाथभट्टानां सरस्वतीभाण्डागारे समधिगम्यते नीलकण्ठविजयचम्पूप्रबन्धस्य प्राचीनं कोशद्वयम् । तत्र कोशद्वयेऽप्यवसानयोर्लिखितं संदृश्यते—'समाप्तं चेदमय्यादीक्षितविरचितं चम्पूकाव्यम् ॥' इति नीलकण्ठमखीन्द्रस्य तथा नामान्तरेणाख्याकारणं न विनाकारणम् । विदितमेव हि सर्वेषामस्माकमस्मद्देशीयाः प्रायशो बिभ्रति पितामहानां नाम । तच्च किंचिद्विकृतमेव कीर्तयन्ति मातरः श्वशुराणां साक्षान्नामग्रहणमनुचितमिति । अत एवं नामपरम्परा आसन् श्रीमदप्पयदीक्षितानां वंशे । यथा—आचार्यदीक्षितः, आचार्यदीक्षितपौत्र आचादीक्षितः (आचार्यदीक्षितः), तत्पौत्र अय्यादीक्षितः (आचादीक्षित) इति । श्रीनीलकण्ठमखीन्द्रस्याशयमनुरुन्धान एव सर्वमपि हालास्यनाथस्योत्सवं निरवर्तयत्तिरुमलैनायकमहाराजः । नीलकण्ठमखीन्द्रोऽपि निर्लोड्य शास्त्राणि यथादृष्टं तेषु कारयामास सर्वमप्युत्सवादिकम् । ततः सर्वा अपि लीला भगवतो हालास्यनाथस्य काव्यात्मना निर्ममे कविः । तदेव प्रथते शिवलीलार्णवमहाकाव्यनाम्ना—

'यः संरम्भः कृतिविरचने दुष्कवीनाममेयो
यच्चकाम्यं तदुचितपदान्वेषणे चित्तवृत्तेः ।
लभ्यं तच्चेदपि कवयतामन्ततर्स्त्राण्यहानि
स्यादेवं किं सरसकविताराज्यदुर्भिक्षयोगः ॥'

१. W. Taylor's Oriental Historical Manuscripts, Vol. II., p. 153:—

"In Tai Month of Srimuga year (~~i. e. S. S. 1548~~) a mandapam in the Teppa-Kulam * * was completed. Besides agreeably to the declaration of Ayyâ Dikshitar, a brahmin versed in ancient language the King commanded that the celebration of all the sacred amusements of the God should be conductd by the temple attendants according to the ordinances of the ancient books."

अनेन नीलकण्ठविजयस्थेन श्लोकेन स्वस्य सदापि कार्यबाहुल्यमासञ्जितमिति व्यञ्जयति कविः। तच्च कार्यं राज्यनिर्वहरूपमित्यनुमीयते।

श्रीनीलकण्ठमखीन्द्र आत्मानं वार्तिकाभरणस्य प्रणेतुर्वेङ्कटेश्वरमखिनः शिष्यं व्याहरति गङ्गावतरणकाव्ये कथावतारसर्गे। यथा—'वार्तिकाभरणग्रन्थनिर्माणव्यक्तनैपुणः। श्रीवेङ्कटेश्वरमखी शिष्ये मय्यनुकम्पते॥' इति। अयं साग्निचित्याप्तवाजपेययाजी वासिष्ठवंशोद्भवः श्रीवेङ्कटेश्वरमखी। श्रीवेङ्कटेश्वरमखिनः पिता श्रीमानद्वैतविद्याचार्यः साग्निचित्सर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजी गोविन्ददीक्षितः। यः कौमारिलदर्शनस्य विश्रुतां व्याख्यां रचयामास। यं तञ्जपुराधिनाथो रघुनाथः स्वार्धासनदानेन सभाजयति स्म। येन स्वकृतसर्वतोमुखमहासत्रे निखानिताश्चिरावस्थितेर्युक्तरूपाः शिलायूपाः कावेरीतीरेषु। यस्य वाजपेयेन यजतः स्वयं जग्राह श्वेतच्छत्रं स्वपित्रा नियुक्तो युवराजो रघुनाथभूपालः। प्रतीयतेऽमुना गोविन्दमखीन्द्रेण कृतमासीत्षड्दर्शनीसारभूतं प्रशस्यं किमपि ग्रन्थान्तरमिति वक्ष्यमाणपद्याभ्याम्—

'अद्वैतविद्याविभवावलम्बान्गोविन्दयज्वेन्द्रगुरूनुपासे।
निर्मथ्य षड्दर्शननीरधीन्ये धियैव सारं ददते बुधेभ्यः॥'

इति यज्ञनारायणदीक्षितविरचिते साहित्यरत्नाकरे।

१. (१) राघवानन्द–नीलापरिणय–सभापतिविलासादिनाटकानां प्रबन्द्धा वेङ्कटेश्वरोऽन्य एव। स निध्रुवकाश्यपान्ववायजो धर्मराजमनीषिणस्तनूजो वैद्यनाथसूरिणः पौत्रः, 'मणलूर्'पुरवास्तव्यश्च।

(२) चित्रबन्धरामायणाख्यकाव्यस्य कर्ता वेङ्कटेश्वरस्त्वपरस्तृतीयः। तस्य परम्परा यथा—



'षड्दर्शनाभिनवदुग्धसरित्पूरिण्यो निर्मथ्य यत्नरहितं निजया धियैव ।
विश्राणयन्ननुदिनं विबुधावलीनामेतद्रसं मुररिपुं भुवि योऽतिशेते ॥'
इति रघुनाथविलासनाटके ।

उच्यते च—असौ गोविन्दमखीन्द्रो रघुनाथभूमिपालस्य पित्राच्युतभूपालेनापि नितरां मानितस्तस्य मन्त्री च बभूवेति । तत्र पुरातनं श्लोकममुं पठन्ति पुराविदः पण्डितजनाः—

'त्रिनामाद्यन्तनामानौ महीक्षिद्दीक्षितावुभौ ।
शस्त्रे शास्त्रे च निपुणावाहवेषु हवेषु च ॥'

श्लोकस्यास्य पूर्वार्धेनाच्युतभूमिपालगोविन्ददीक्षितावुच्येते । अच्युतानन्तगोविन्देति त्रिनामानि । अच्युतानन्तगोविन्देति नामसमुदायस्यैव त्रिनामसंज्ञा सुप्रसिद्धा । अयं गोविन्ददीक्षितो महाराजतः स्वयं प्रतिगृह्य बहूनग्रहारान्ब्राह्मणेभ्यो ददौ । मध्यार्जुने मायूरे कुम्भघोणे पञ्चनदेऽन्यत्र च स्थलेषु कावेर्याः पारेषु स्नानघट्टान्पुण्यमण्डपानि च रचयामास यान्यद्यापि संदृश्यन्ते सुदृढानि किं तु क्वचित्क्वचिज्जीर्णानि, न पुनरिदानींतनेन केनापि धर्मबुद्धिना समुद्धृतानि । कदाचिदयं गोविन्ददीक्षितः शिष्यान्कल्पतरुमध्याप-यन्मध्यार्जुनक्षेत्र उवास, ददर्श तत्र गतान्श्रीमतोऽप्पय्यदीक्षितेन्द्रान् । इयेष च तान्का-निचित्स्वसंशयस्थानानि कल्पतरौ विवरीतुम् । विवरणे तदीयां पटुतां संवीक्ष्य प्रार्थया-मास तान्कल्पतरोर्व्याख्यानं कर्तुम् । श्लोकोऽयं गोविन्ददीक्षितस्येत्युदाहरन्ति जनाः—

'अप्पदीक्षित किमित्यतिस्तुतिं वर्णयामि भवतो वदान्यताम् ।
सोऽपि कल्पतरुरर्थसिद्धये त्वद्गिरामवसरं प्रतीक्षते ॥' इति ।

श्लोकममुं बालकविनोक्तं व्याहरन्त्यन्ये । सर्वथा संभाव्यते श्रीमतो गोविन्ददीक्षितस्य समकालिकत्वं श्रीमदप्पय्यदीक्षितेन्द्रैः । यदुच्यते 'तञ्जोर् म्यान्युअल्'(Tanjore Manual) आख्यग्रन्थे विजयराघवभूपालस्य मन्त्री गोविन्ददीक्षित इति, तत्प्रमाणान्तर-सापेक्षं स्वतो न प्रमाणम्, असंभावितं च । अस्ति हरिवंशसारचरितं नाम त्रयोविंशतिम-र्गपरिमितं महाकाव्यं गोविन्दमन्त्रिकृतम् । अस्ति च तस्य व्याख्या श्रीमदप्पय्यदीक्षित-कृता । परमिदमद्य न निश्चिनुमः स एवायं गोविन्दमन्त्री योऽध्यासितार्धासनः समं रघु-नाथभूपेन इति । यतो हरिवंशसारचरितस्य प्रबन्द्धा गोविन्दमन्त्री शाण्डिल्यवंशोत्पन्नः कोण्डमनायकमन्त्री च इत्येवं तद्ग्रन्थव्याख्यानतः प्रतीयते । यतो हरिवंशसारचरितस्य मूलकोशस्त्वद्य मया नोपलभ्यते । अतः श्लोकोऽयमुद्धृतो व्याख्यानतः—

'शाण्डिल्यान्वयहारमौक्तिकमणिः श्रीधल्लिमन्त्री पिता
माता यस्य पतिव्रतैकमहिमाकल्पा च कुप्पाम्बिका ।
तस्य श्रीहरिवंशसारचरिते गोविन्दमन्त्रिप्रभोः
सर्गः पूर्तिमगान्निसर्गलसितः काव्ये महत्यादिमः ॥' इति ।

श्रीवेङ्कटेश्वरमखिनो ज्येष्ठसोदरो विद्यागुरुः साग्निचित्यसर्वप्रष्ठाप्तोर्यामयाजी श्रीयज्ञना-रायणदीक्षितः । अखण्डितमस्य पाण्डित्यं सर्वेष्वपि व्याहारेषु । सुशिक्षितोऽयं काव्य

गीतौ। अयं रघुनाथभूपालाल्लब्धजीवनो रघुनाथभूपविजय-रघुनाथविलासनाटक-साहित्य-रत्नाकरकाव्यादिकांस्तमेव राजानमधिकृत्य निर्ममे ग्रन्थान्। ददावस्मै यज्ञनारायणदीक्षिताय कर्णाभरणं निजं पतकं पादाङ्गदं कङ्कणं च रघुनाथभूपालः। अयं स्वयमाध्वर्यं चकार स्वपितृकृते आप्तवाजपेयनाम्नि सप्ततन्तुवरे। अस्य समकालिकाः पण्डितमणयः—(१) विश्रुतालंकारिकविबुधाहंकारः कृष्णयज्वा, (२) डिण्डिमकुलमण्डनः पण्डितशिखामणिः सोमनाथः, (३) पारिजातनाटकस्य प्रबन्द्धा रघुनाथभूपालाश्रितः कुमारताताचार्यश्च।

श्रीविङ्कटेश्वरमखिनः कृतिषु—(१) टुप्टीकाव्याख्यानं वार्तिकाभरणम्, (२) कर्मान्तमीमांसाया व्याख्या कर्मान्तनिबन्धदीपिका इत्युभे एव केवलमिदानीं नामतः परिज्ञायेते। चोदितोऽनेनैव रचयामास तन्त्रशिखामणिं श्रीमान्राजचूडामणिदीक्षितः प्रख्यातः कर्ता काव्यदर्पणस्य। 4 २ ध्रुना मं भूमा र्थे. आन.

श्रीनीलकण्ठमखीन्द्रस्य समकालिका विद्वन्मणयः—

(१) श्रौतधर्म इव मूर्तिमान मान्यश्रोकनाथमखीन्द्रः। अयं कौशिकगोत्रोद्भवः। द्वादशाहादियज्वनो नारायणदीक्षितस्य गणपत्यभिधायां सहधर्मिण्यां समुत्पन्नः। प्रख्यातनाम्नो रामभद्रमखीन्द्रस्य श्वशुरः पदविद्यागुरुश्च। अद्याप्यस्य वंशीयेषु तत्संबन्धिनां च संदृश्यते कन्यकास्वपि गणपतीति नामकरणम्। शब्दकौमुदी-धातुरत्नावली-भाष्यरत्नावल्य इदानीमस्य समुपलभ्यमानाः कृतयः। त्रिशिरःपुरस्य प्रान्ते मुत्तरशनल्लूराख्यग्रामे पुदुक्कोट्टराज्ये पिन्नङ्गुडिनाम्नि च ग्रामेऽन्यत्र च नदीतीरेषु वृत्त्यर्थमस्य कल्पयामासुरुत्तमक्षेत्राणि तत्र तत्र तदानींतना राजान इति पुराविदः पण्डिताः। भाष्यरत्नावल्याम्—

'धातारं सूत्रकारं शिवनुतिमहितं पाणिनिं वाक्यकारं
विष्णुं कात्यायनं तं गिरिशमहिवराधीश्वरं भाष्यकारम्।
तातं नारायणं श्रीगणपतिमपि तां मातरं सादरं ता-
नाचार्यान्सर्वतन्त्रप्रणयननिपुणानानमेः कर्म कुर्मः॥

* * *

धीमद्वाक्यपदप्रमाणगहनप्रच्छादितोच्चावच-
स्फीतार्थप्रतिपादनातिनिपुणः श्रीनीलकण्ठाध्वरी।
यं भाष्यप्रकटीकृतौ पटयते द्वेधार्थदानात्कृती
तस्यान्ये सुधियः कथं न विमलाः पुष्णीयुरर्थप्रदाः॥' इति।

(२) श्रीरामचन्द्रोदयमहाकाव्यस्य कर्ता स्वयमेव तद्व्याख्याता च महाकविः श्रीवैष्णवः श्रीविङ्कटेश्वरः। अयं गतेषु १५१८ संख्याकेषु शालिवाहनशकाब्देषु, तथा १५९५-९६ खिस्ताब्देषु काञ्चीनगरसमीपे श्रीनिवासार्यतो जनिमुपगतः। अयमतीतेषु४७३६कल्यब्देषु तथा गतेषु १५५७ शालिवाहनशकाब्देषु स्वस्य चत्वारिंशे वयसि काशीं गत्वा तत्रैव काव्यमिदं समग्रन्थयत्। तथा च रामचन्द्रोदयमहाकाव्ये—

The author a Vira Gunadarsa was the son of Ragha

'अभ्रपूर्णगुणपावनपद्यं व्योमवह्निसमसर्गमुदारम् ।
काव्यमङ्गगुणशैलयुगाब्दे वेङ्कटोऽकृत कलौ कविवर्यः ॥'

[व्याख्या—अभ्रपूर्णगुणपावनपद्यं आकाशवत पूर्णगुणानि पावनानि पद्यानि यस्य, त्रिशताधिकत्रिसहस्रपद्यमित्यर्थः । ३०३० । व्योमवह्निसमसर्ग व्योमवत निर्मला वह्निवदुज्ज्वलाः सर्गाः यस्मिन् तत । त्रिंशत्सर्गमित्यर्थः । तत काव्यम । कलौ अङ्गगुणशैलयुगाब्दे सति षट्त्रिंशदधिकसप्तशताधिकचतुःसहस्रवर्षे सति । वेङ्कट कवि । अकृत प्रणीतवान

'षट्त्रिंशदत्र वृत्तानि छन्दांसि तु चतुर्दश ।
खार्कप्राणा इह श्लोका अनुष्टुप्संख्यया मता ॥
आत्रेयश्रीनिवासाह्वयगुरुतनय काव्यरत्नं व्यतानी-
त्सीतानाथप्रसादप्रकटितधिषणो रामचन्द्रोदयाख्यम ।
आ सीतेशाभिषेकादुदितशुभकथं त्रिंशता यत्तु सर्ग
स्तस्मिन्रामाभिषेकाभ्युदयशुभकथस्त्रिंश आभाति सर्ग ॥
धृतितिथि(१५१८)मिते शकाब्दे संजातेनोपकाशि मयकेन ।
काशी गतेन क्लृप्तं काव्यं मुनिबाणतिथि(१५५७)मिते हि शके ॥

ग्रन्थस्यास्य व्याख्याने च—

'नृसिंहार्यपौत्रस्य पौत्रः कवीन्द्रस्तथा वेङ्कटेशार्यपौत्रः प्रसिद्धः ।
स्वयं श्रीनिवासार्यसूनुः स्वकाव्यं लघु व्याख्यदास्ते .... वेङ्कटेशः ॥
धृतितिथिमिते शकाब्दे जनिमानुपकाशि वेङ्कटेशकविः ।
काव्यमिदं व्याचष्ट स्वयमेव सतां नियोगमासाद्य ॥'

ग्रन्थान्ते च—

'यतीन्द्रकरुणापात्रं तन्महानसकिंकरम् ।
आत्रेयप्रवरं नौमि प्रणतार्तिहरं गुरुम् ॥ १ ॥

१. रामचन्द्रोदयकाव्यस्य कर्तुर्वेङ्कटेशस्य परम्परा—

१. यतिराज
२. (तत्सुत ) पद्मनाभः
३. (तत्सुतः) रामानुजार्यः
४. (तत्सुतः) पद्मनाभः
५. (तत्सुतः) पुरुषोत्तमः
६. (तत्सुतः) नरसिंहार्यः
७. (तत्सुतः) शठकोपः
८. (तत्सुतः) नृसिंहः
९. (तत्सुतः) पुरुषोत्तमः

तातकारुण्यसंप्राप्तज्ञानभक्तिरसामृतम् ।
यतिराजाह्वयं वन्दे देशिकं दिव्यदर्शनम् ॥ २ ॥
यतिराजगुरोः सूनुं पाषण्डमतखण्डनम् ।
आचार्यपद्मनाभाख्यं भवसंतारकं भजे ॥ ३ ॥
नमो रामानुजार्याय वेदान्तार्थप्रदायिने ।
आत्रेयपद्मनाभार्यसुताय गुणशालिने ॥ ४ ॥
रामानुजार्यसंप्राप्तसर्वविद्यासमृद्धये ।
पद्मनाभाय महते तत्सुताय नमो नमः ॥ ५ ॥
पद्मनाभगुरोः सूनुं तत्कृपावाप्तवैभवम् ।
पुरुषोत्तममाचार्यं गुणसिन्धुमुपास्महे ॥ ६ ॥
तातपाददयापात्रं मायावादतमोरविम् ।
व्याख्यातन्यायकुलिशं नरसिंहार्यमाश्रये ॥ ७ ॥
नृसिंहदेशिकावाप्तज्ञानविज्ञानसंपदे ।
आत्रेयशठकोपाय नमो वैराग्यसिन्धवे ॥ ८ ॥
श्रीशठकोपपदाम्बुजभृङ्गं तत्करुणेक्षणलम्भितबोधम् ।
देशिकमत्रिकुलाम्बुधिचन्द्रं नौमि नृसिंहमनन्तगुणाब्धिम् ॥ ९ ॥
श्रीमन्नृसिंहार्यसुतं महान्तं वेदान्तयुग्मव्यवहारशीलम् ।
आचारहेतुं करुणापयोधिं वन्दे वदान्यं पुरुषोत्तमार्यम् ॥ १० ॥
पुरुषोत्तमपादाब्जसेवासंप्राप्तसंपदे ।
नमः श्रीवेङ्कटेशाय गुरवे भक्तिसिन्धवे ॥ ११ ॥
पराङ्कुशशठारातिकृपासंप्राप्तसंपदम् ।
श्रीवेङ्कटेशतनयं श्रीनिवासार्यमाश्रये ॥ १२ ॥' इति ।

(३) कवेरस्य नीलकण्ठमखीन्द्रस्यानुजन्मा कुशकुमुद्वतीयनाटकस्य प्रवन्द्धा प्रतिरत्र-वंशादिकर्ता अतिरात्रयज्वा ।

कुशकुमुद्वतीयनाटके—

'विद्वद्वादविवादकालयुगपद्विस्फूर्त्यहंपूर्विका-
निर्यद्युक्तिसहस्रदर्शितनिजाहीन्द्रावताराकृतिः ।
कर्तुं कारयितुं तथा रसयितुं काव्यानि नव्यान्यलं
भूष्णुर्भाति सभासभाजितमतिः श्रीनीलकण्ठाध्वरी ॥

---

१०. (तत्सुतः) वेङ्कटेशः
११. (तत्सुतः) श्रीनिवासः
१२. (तत्सुतो रामचन्द्रोदयकाव्यस्य कविः) वेङ्कटेशः ।

*    *    *    *    *

अयं किल भरद्वाजकुलपारावारपारिजातः सकलसाम्राज्यसिंहासनाधिपतिस्तत्रभवतः श्रीमतो नारायणाध्वरिणस्तपःपरिपाकः कर्ता काव्यानां व्याकर्ता तन्त्राणां आहर्ता क्रतूनां व्याहर्ता सकलनृपसभेषु दिगन्तरविश्रान्तकीर्तिरपारमहिमा मानवाकृतिः साक्षादेव दाक्षायणीवल्लभः श्रीकण्ठमतसर्वस्ववेदी श्रीनीलकण्ठाध्वरी । * * एष खलु द्वितीयशंकररूपाणामप्पयदीक्षितानां नप्ता नलचरितनाटकप्रबन्द्धा ।

**नटी**—को णु किंणामहेओ एअ णाडअप्पणेदा ।

**सूत्रधारः**—नन्वस्यैव सभानेतुरनुजन्मा विदितवेदितव्यः कविलोकमित्रमतित्रयाजी । * * स किल प्रतिरघुवंशादिकर्तेति रसिकगोष्ठीषु जोघुष्यते ।'

(४) शब्दचित्रस्वरूपभेदप्रतिपादक'चित्ररत्नाकर'ग्रन्थस्य रुक्मिणीपरिणय–जानकीपरिणय–गौरीपरिणय–द्रौपदीपरिणयादीनां नाटकानां च कर्ता श्रीचक्रकविः ।

चित्ररत्नाकरे—

> 'श्रीलोकनाथं जनकं रामचन्द्रं पतञ्जलिम् ।
> नत्वाग्रजं च क्रियते चित्ररत्नाकरो मया ॥
> रुक्मिणीजानकीगौरीद्रौपदीपरिणीतयः ।
> कृतयो यस्य तस्यैषा कृतिश्चक्रकवेः शुभा ॥'

तस्यैव ग्रन्थस्यावसाने—

> 'पुत्रं चक्रकविं गुणैकवसतिः श्रीलोकनाथः सुधी-
> रम्मा चाजनयत्सतीजननुता यं मानितं सज्जनैः ।
> षष्ठस्तस्य कृतावजायत परिच्छेदो नुते पाण्ड्यराट्-
> चोलोर्वीपतिनीलकण्ठमखिभिः श्रीचित्ररत्नाकरे ॥' इति ॥

**टी. एस्. कुप्पुस्वामिशास्त्री ।**

**तञ्जोर् ।**

(5) श्रीराम भद्र दीक्षितः [illegible] Patanjali [illegible] [illegible] chapa – Bana – Visragarbastava etc. [illegible] Janakiparinayam [illegible] श्रीनीलकण्ठ [illegible] – इति नाटके

Srngara Bhushan [illegible] – इति भाणे

(6)

# काव्यमाला

## श्रीनीलकण्ठदीक्षितप्रणीतं
## गङ्गावतरणम् ।

प्रथमः सर्गः ।

अद्भुतं किमपि द्वन्द्वमस्तु तन्मम शर्मणे ।
न्वम्तिकस्तनुते यस्य मुहृढाश्लेषनिर्वृतिम् ॥ १ ॥
श्याममेव स्तुमो यस्य वाचं गणयितुं विधिः ।
विषीदति वृषाङ्केण विलूने पञ्चमानने ॥ २ ॥
कान्तः सहृदयो वाचः कविरेव[1] चिरंतनः ।
जडे जगति येनैव च्छन्दः प्रागन्वरुध्यत ॥ ३ ॥
कवितामफलद्वीटी कालिदासमुखेऽर्पिता ।
पत्युर्मुखे तु सा गौर्याः परुषं निगमाक्षरम् ॥ ४
ना[2]रायणाध्वरीन्द्राय नमोऽस्तु ज्ञानसिन्धवे ।
शारदा यत्कटाक्षाणां साप्यवेतनकिंकरा ॥ ५ ॥
कल्पनेत्यस्ति तत्किंचित्कविलोकस्य जीवितम् ।
प्रविश्येव गृहीतं यद्भारत्याः कोशमन्दिरात् ॥ ६
स संदर्भः कवीन्द्राणां शारदा यं पदे पदे ।
श्लाघते विस्मयावेशस्मेरमन्थरया दृशा ॥ ७ ॥
शीलिते कविलोकेन सिद्धे ब्रह्मणि वाङ्मये ।
पामराः कलहायन्ते पश्यासिन्नन्यथान्यथा ॥
अस्ति सारस्वतं चक्षुरज्ञातस्वापजागरम् ।
गोचरो यस्य सर्वोऽपि यत्स्वयं कर्णगोचरः ॥ ९ ।

१. आदिकविः वाल्मीकिः २. नारायणाध्वरीन्द्रः कवेः पिता.

सत्यर्थे सत्सु शब्देषु सति चाक्षरडम्बरे ।
शोभते यं विना नोक्तिः स पन्था इति घुष्यते ॥ १० ॥
शृण्वन्तोऽपि न शृण्वन्ति जानन्तोऽपि न जानते ।
साहितीमितरे तस्या ज्ञाता श्रोता च यः कविः ॥ ११ ॥
न लक्षणेषु निष्कर्षो न वा काव्येषु कौशलम् ।
संदर्भनिर्णयायालं स ह्यदृष्टैकमूलकः ॥ १२ ॥
भारतीषु कवीन्द्राणां यावती सुकुमारता ।
तावती काव्यमर्मज्ञसंमर्दैकसहिष्णुता ॥ १३ ॥
अचमत्कृतसंदर्भमर्थं नैवाद्रियामहे
अत्यन्तभोगौपयिकमैश्वर्यमिव देहिनाम् ॥ १४ ॥
स्वर्गः कस्यास्तु सुधियः श्लाघन्ते चेन्निजं पदम् ।
ततोऽन्यः कोऽस्ति निरयस्तत्र ते यद्युदासते ॥ १५ ॥
हतः श्लोको हतं काव्यं हता बुद्धिर्हतं यशः ।
सद्भिरुद्भावितो दोषो यदि नाभ्युपगम्यते ॥ १६ ॥
अन्धास्ते कवयो येषां पन्थाः क्षुण्णः परैर्भवेत् ।
परेषां तु यदाक्रान्तः पन्थास्ते कविकुञ्जराः ॥ १७ ॥
विदुषां मत्सरग्रन्थिर्विभेद्यो वचसां गुणैः
नैव केनापि दुर्मेधश्चोद्यमर्कटमुष्टयः ॥ १८ ॥
आजन्मनः प्रबन्द्धृणां पद्यबन्धेषु यः श्रमः ।
सोऽपि सामाजिकायत्तः कष्टं धिक्कविजीवितम् ॥ १९ ॥
नार्थमुल्लिखितुं यत्नो नापि ग्रन्थयितुं गिरः ।
श्रवणात्प्रागनाक्षेपः श्रोतुरभ्यर्थ्यते परम् ॥ २० ॥
दूषणाय न काव्यानां दुर्जनाक्षेपसंप्लवः ।
शफरीपरिवर्तैः किं सरसी न प्रसीदति ॥ २१ ॥
सव्यङ्ग्यापि कवेर्वाणी सापभ्रंशा न शोभते ।
लम्बस्तनीं को वीक्षेत रम्भामप्युर्वशीमपि ॥ २२ ॥

क्व नु नाम सभा राज्ञां दुराक्षेपैकशिक्षिता ।
क्व नु वाचः सुधीलोकलालनैकरसाः कवेः ॥ २३ ॥
व्यङ्क्तुमस्फुरतो दोषान्भङ्क्तुमुत्स्फुरतो गुणान् ।
ईर्ष्ये भगवति ब्रूहि का त्वदन्या प्रगल्भताम् ॥ २४ ॥
किं मदक्ष्णोरयं दोषः किं तद्वस्त्वेव तादृशम् ।
कामं यन्मौलिरज्ञानां कम्पते कविसूक्तिषु ॥ २५ ॥
पुष्णन्तु स्वेति मधुरां परस्यापि कृतिं जनाः ।
स्वोक्तिभिर्यत्क्वचित्कर्णौ दहन्ति तदरुंतुदम् ॥ २६ ॥
स्तुत्यं न स्तुवते मूढाः पद्यं यत्तन्न दारुणम् ।
अपदे यत्प्रशंसन्ति तन्मे मर्माणि कृन्तति ॥ २७ ॥
जानीमो ज्यायसीं लक्ष्म्या जातु ते न तु शारदे ।
आः स्मृतं ननु सा वक्रेष्वास्ते दुष्कविसंसदाम् ॥ २८ ॥
न यदाह मनुर्वध्यान्न च नासृजदब्जभूः ।
न वान्तकः कविंमन्यान्नयते तन्मदंहसा ॥ २९ ॥
आमये यमके जाग्रत्यपमृत्यौ च दुष्कवौ ।
वाणि प्राणिषि तन्मन्ये वज्रेणैवासि निर्मिता ॥ ३० ॥
नाहमासं नृपः स्यां चेन्ननु कुर्यां तथा महीम् ।
विचिन्वतापि नेक्ष्यन्ते यथा दुष्कविताङ्कुराः ॥ ३१ ॥
पातिव्रत्यक्रमः कोऽयं प्राणभङ्गावधिस्तव ।
सर्गतः कविपाशानां शारदे वारय प्रियम् ॥ ३२ ॥
दूयामहे दुष्कविभिर्दत्तकर्णज्वरा वयम् ।
न वा वदामो वाग्देवि ननु त्वमपि तैर्हता ३३ ॥
विज्ञप्तिः श्रूयतामेका विधातः करुणा यदि ।
मूकान्सृज कविंमन्यान्बधिरान्विदुषोऽथवा ॥ ३४ ॥
जना नीराजनीयास्ते जानन्ति स्वयमेव ये ।
कथंचिदपि वा सर्गैः काव्यमङ्कैश्च नाटकम् ॥ ३५ ॥

प्राचेतसेन यानीता पालिता भवभूतिना।
सर्वतश्चर्व्यते वाणी सैवाद्य कविमानिभिः॥ ३६॥
निःशङ्कं न प्रवृत्तोऽस्मि निन्दितुं कविमानिनः।
निन्दामपि विगायन्ति यतः श्लाघामिवात्मनः॥ ३७॥
मुनिरस्ति भरद्वाजः ख्यातस्त्रिभुवनेष्वपि।
अन्नैर्यस्य जहौ रामोऽप्यरण्यभ्रमणश्रमम्॥ ३८॥
तस्यान्वये महत्यासीत्क्षीरोद इव चन्द्रमाः।
श्रीकण्ठचरणासक्तः श्रीमानप्पयदीक्षितः[1]॥ ३९॥
विधित्रयी यदाक्षिप्ता नान्यत्र लभते गतिम्।
जयन्त इव दुर्दान्तजानकीशशरार्दितः॥ ४०॥
आगमैरप्यसंवेद्यमाद्यं यत्तत्त्वमैश्वरम्।
आकुमारं परिज्ञातं तदेवासीद्यदुक्तिभिः॥ ४१॥
श्रीकण्ठदेशिकग्रन्थसिद्धान्तद्योतचन्द्रिका।
श्रीमती निर्मिता येन शिवार्कमणिदीपिका॥ ४२॥
गङ्गया यः पुरा स्नातो देवश्चन्द्रार्धशेखरः।
गाङ्गेयेन पुनः सस्नौ सोऽवतीर्य यदात्मना॥ ४३॥
अमोषणीयैरक्रय्यैरमूल्यैरमलीमसैः।
यत्प्रबन्धैः शतेनैव भारती परिकर्मिता॥ ४४॥
यं विद्म इति यद्ग्रन्थानभ्यास्यामोऽखिलानिति।
यस्य शिष्याः स्म इति च श्लाघन्ते स्वं विपश्चितः॥ ४५॥
नाकेऽपि सति देवानां माहात्म्यकलहे मिथः।
वादः शाम्यति यद्वाचि विन्यस्य निखिलंभरम्॥ ४६॥
आमोदिभिर्वचःपुष्पैरर्चितो येन शंकरः।
तत्याज काशधत्तूरधारणोपहितां रुजम्॥ ४७॥
तत्समानप्रभावस्य तदनन्तरजन्मनः।
आसीदाचादीक्षितस्य पुत्रो नारायणाध्वरी॥ ४८॥

---

1. अप्पयदीक्षितः कवेः पितामहस्य ज्यायान्भ्राता.

जयन्ति तनयास्तस्य पञ्च सौभ्रात्रशालिनः ।
गर्भदासा महेशस्य कवयश्च विपश्चितः ॥ ४९ ॥
तेषामहं द्वितीयोऽस्मि भूमिदेवीतनूभुवाम् ।
**नीलकण्ठ** इति ख्यातिं नीतः शंभोः प्रसादतः ॥ ५० ॥
वार्तिकाभरणग्रन्थनिर्माणव्यक्तनैपुणः ।
**श्रीवेङ्कटेश्वरमखी** शिष्ये मय्यनुकम्पते ॥ ५१ ॥
कुर्वती श्रवणे वाणी कोमलां यस्य साहितीम् ।
कर्णपूरशिरीषेऽपि काठिन्यमिव पश्यति ॥ ५२ ॥
भान्ति शिष्याः पुरो यस्य पाणिविन्यस्तपुस्तकाः ।
तत्सूक्तिजाह्नवीपूरत्रासेनेव धृतप्लवाः ॥ ५३ ॥
सति सह्यसुतातीरे सति त्र्यम्बकशीलने ।
गन्तुं निश्चितवानस्मि गङ्गां केनापि हेतुना ॥ ५४ ॥
तपसा लभ्यतां तस्यास्तपसश्च कठोरताम् ।
पश्यन्वाचा तपस्यामि काव्यसंदर्भरूपया ॥ ५५ ॥
मूकोऽपि मुखरायेत यत्र स्मृतिपथं गते ।
उपेक्षितव्यं तद्वस्तु कथं कवयता मया ॥ ५६ ॥
भगीरथमुखाद्वाचः स्तुवन्ति मम जाह्नवीम् ।
प्रभावे चन्द्रचूडस्य पर्यवस्यन्ति तत्त्वतः ॥ ५७ ॥
चन्द्रशेखरसव्याङ्गचरणोन्मार्जनाम्भसाम् ।
विवर्ता जगदुत्सङ्गे विहरन्ति मदुक्तयः ॥ ५८ ॥
भक्त्या कृतेति जाह्नव्याः प्रभावं वदतीति वा ।
सन्तः समनुगृह्णन्तु निर्गुणामपि मद्गिरम् ॥ ५९ ॥
आसीद्भगीरथो नाम राजा रविरिवापरः ।
येन साक्षात्कृतः शंभुर्येन गङ्गावतारिता ॥ ६० ॥
सदयं सानुरागं च भुञ्जानं तं वसुंधराम् ।
ऐच्छदिन्द्रवशापि द्यौरन्तः कुलवधूरिव ॥ ६१ ॥

Emphasis on Dhvani in instances in mere ...
Kama sastra rupa
Atisayokti Dhvani Anucity Vyatireka

गोवर्धनधरस्यापि यदि तावद्यशो हरेः ।
कियन्न वर्ण्यः स भुवं बिभ्रत्सगिरिकाननाम् ॥ ६२ ॥
स पौरान्पादमूलस्थानरक्षदिति नाद्भुतम् ।
यद्दिगन्ते यशोऽरक्षत्प्रतापं शौरिवेश्मसु ॥ ६३ ॥
दयालुरथ भूतेषु दण्ड्येष्वासीत्स निर्दयः ।
संजीवनोऽपि लोकानां चन्द्रमाः पथिकान्तकः ॥ ६४ ॥
न दण्ड्यं मुमुचे कंचिन्न वा कंचिददण्डयत् ।
तथापि युक्तदण्डः स दयालुरिति पप्रथे ॥ ६५ ॥
उचितेष्वदिशद्दृष्टिमुदासीनः परेषु च ।
शुश्राव च न शुश्राव स वाचमनुजीविनाम् ॥ ६६ ॥
उचितज्ञतया तस्मिन्नन्वरज्यन्यथा प्रजाः ।
न तथा तस्य दानेन न तथा चोपलालनैः ॥ ६७ ॥
तस्मिन्दुर्जनदुर्धर्षे समं पश्यति च प्रजाः ।
सर्वोऽप्यासीदपिशुनः सर्वोऽपि गतमत्सरः ॥ ६८ ॥
स यावल्लालयामास क्रीडन्निव हसन्निव ।
उपासांचक्रिरे तावद्भृतास्तमनुजीविनः ॥ ६९ ॥
जातः कोपो न भृत्येषु जातोऽपि न निगूहितः ।
निगूहितोऽपि न चिरमास्त चित्तेऽस्य कोमले ॥ ७० ॥
वैरायतां विरिञ्चोऽपि विप्रकर्तुं क्षमेत सः ।
अज्ञातविमतोत्पादामभुङ्क्त तदपि क्षितिम् ॥ ७१ ॥
प्रणाममात्रसंप्रीतस्तेजस्वी चोदयस्थितः ।
कूटस्थं रविमैक्ष्वाको गुणैरनुययाविव ॥ ७२ ॥
तस्यासन्प्राक्तना एव सेनामन्त्र्यनुजीविनः ।
नवं यशो नवः कोशो नवं राज्यं च केवलम् ॥ ७३ ॥
षष्ठांशं जगृहे नेति तुष्टुवुस्तं तपस्विनः ।
न त्वबुध्यन्त गृह्णन्तमुपायेनाखिलं तपः ॥ ७४ ॥

स्रस्तमंसतलात्पान्थैः संव्यानमपि वर्त्मसु ।
सातङ्कमाददे भूयस्त्वरद्भिस्तस्य शासनम् ॥ ७५ ॥

अख्यातपूर्वविजयानतृणीकृतजीवितान् ।
अक्षत्रियानयूनश्च न स संजगृहे भटान् ॥ ७६ ॥

अवितीर्णमहाग्रामैरकृतस्वर्णवृष्टिभिः ।
कटाक्षैर्न बभूवेऽस्य कविवक्त्रनिपातिभिः ॥ ७७ ॥

संग्रामाङ्गणमारूढः स समक्षं विरोधिनाम् ।
तिरस्कारमिवामंस्त चापस्यापि शिरोनतिम् ॥ ७८ ॥

प्रददावेव सोऽर्थिभ्यः प्रतिजग्राह न क्वचित् ।
वासवादसकृद्वृष्टिं लिप्समानस्त्वलज्जत ॥ ७९ ॥

सायाह्नोपचयेनापि मर्यादां लङ्घतेऽर्णवः ।
स तु तावत्प्रवृद्धोऽपि मर्यादां नात्यलङ्घत ॥ ८० ॥

दातुं प्रवृद्धश्चन्द्रोऽपि पक्षे पक्षेऽपचीयते ।
स तु भूयोऽप्यवर्धिष्ट संततं वितरन्नृपः ॥ ८१ ॥

पदं किमेतावदुदारतोचितं प्रयुज्य शंसेयममुष्य दातृताम् ।
पदेषु यत्प्रत्यय एव नाशितः प्रयोगशूरैः कविभिः समन्ततः ॥ ८२ ॥

यदस्य युद्धेषु महत्कुतूहलं य उद्यमो यत्प्रतिपालनं च वा ।
इदं किमङ्ग श्रुतमीक्षितं नु वा महीभुजोऽन्यस्य महोत्सवेष्वपि ॥ ८३ ॥

एकैकां क्रमभाविनीमपि कलामिन्दोः समास्वाद्य यैः
कण्ठोद्गीवितजीवितैर्निरवधिः कालः कथंचिज्जितः ।
तैरेवोदरपूरमध्वरहविः स्फारं तदावर्जितं
भुञ्जानैस्त्रिदशैरधारि जठरप्रायं तदानीं वपुः ॥ ८४ ॥

परिज्ञातुं तत्त्वं निखिलमपि विद्यासु विदुषां
परिज्ञातं भूयः परिषदि सतां श्लाघितुमपि ।
फलैर्योक्तुं तत्तत्क्रमसमुचितैः श्लाघितमपि
प्रगल्भः कोऽन्यः स्यात्त्रिभुवनवदान्यो यदि न सः ॥८५॥

साम्राज्यं यदि सप्तमार्णवतटीविश्राम्यदाज्ञाक्षरं
सौन्दर्यं यदि मुद्रिताः स्मरगिरः सा चेन्मतिः को गुरुः ।
शौर्यं चेत्पुनरन्यदेव तदिति स्तोत्रं विचित्रं सतां
शृण्वन्नेव भगीरथक्षितिपतिर्निन्ये सहस्रं समाः ॥ ८६ ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्ध-
निर्वाहकमहाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदाच्चादीक्षितपौत्रेण
नारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितेन विरचिते
गङ्गावतरणे कथावतारो नाम प्रथमः सर्गः ।

द्वितीयः सर्गः ।

पौरजानपदपार्थिवलोकप्रस्तुतस्तुतिवचोमुखरायाम् ।
जातु संसदि निषद्य सुहृद्भिः संलपन्नतिनिनाय स कालम् ॥ १ ॥
स प्रसङ्गकृतसंगति वक्तुं प्रस्तुतं किमपि बान्धववृद्धैः ।
सावधानमशृणोदपदानं सर्वमेव सगरात्मभवानाम् ॥ २ ॥
अश्वमेधमकरोत्सगरो यद्यच्च तत्र तनया विनियुक्ताः ।
अन्वयुर्यदपि ते तुरगं तं यच्च तं शतमखोपजहार ॥ ३ ॥
यत्ततः सगिरिकेतुवनान्ता तैर्व्यचीयत मही निखिलेयम् ।
यच्च तैः पितृवचोऽनुसरद्भिः सिन्धुरेव समखन्यत भूयः ॥ ४ ॥
मन्दिरं फणभृतामवतेरुः सागरोदरपथेन च ते यत् ।
पादकर्णसमवायत एव प्राकृतैः फणिभिरद्भुतदृष्टाः ॥ ५ ॥
तं तुरंगमपि यद्ददृशुस्ते तापसस्य कपिलस्य समीपे ।
चोर इत्यमुमभिद्रवतां यद्भसतामदित हुंकृतिरस्य ॥ ६ ॥
अंशुमानपि समेत्य हयं तं यच्चकार सगराध्वरपूर्तिम् ।
सर्वमेतदवकर्ण्य स वीरो विस्मितोऽजनि विषण्णमुखश्च ॥ ७ ॥
दातुमम्बुपरिपारणमेषां कोऽभ्युपाय इति पृच्छति तस्मिन् ।
संनिकर्षमुपसृत्य वसिष्ठः शंसति स जगतः सुकृतेन ॥ ८ ॥
कन्यकास्ति कुटिलेति हिमाद्रेर्ज्यायसी स्मरणतोऽप्यघहन्त्री ।
शंकराय वितरीतुममर्त्याः सत्यलोकमनयन्त शिशुं ताम् ॥ ९ ॥

प्रवसतो विनिवर्तयितुं पतीन्कृतधियः किल यत्फणिकन्यकाः ।
पथि कुहापि तदीक्षणगोचरे परिनिपत्य भवन्ति गतज्वराः ॥ ३५ ॥
स्वयमुपेतसमीरकृताशनैः स्फुटितभूविवरोदरशायिभिः ।
फणधरैरनपेक्षितवेतनैः प्रभुरवर्तत यत्र स वासुकिः ॥ ३६ ॥
सदनमेत्य स[1] जिग्धिकृते सखीन्समुपहूय निवेश्य च पङ्क्तिशः ।
विदधति व्यजनैरुपवीजनं किमपि यत्र मुखेष्वनिलाशनाः ॥ ३७ ॥
सति फणावलयातपवारणे सति च तन्मणिदीपशिखाङ्कुरे ।
घनतटिज्जटिलेषु घनागमेष्वभिसरन्ति न यत्र फणिस्त्रियः ३८ ॥
न विधुरग्नि न दक्षिणमारुतः क इव तद्विधुरः कुसुमायुधः ।
तदपि शासनमस्य दुरुत्तरं शिरसि बिभ्रति यत्र फणिस्त्रियः ॥ ३९ ॥
कतिचिदच्युतमञ्चकुलोद्भवाः कतिपये हरकुण्डलवंशजाः ।
रविरथाश्वगुणान्वयजाः परे तदिह ताक्ष्यर्भयं न यदोकसाम् ॥ ४० ॥
अधुतसिद्धशिरोमणिभूषणो ग्रथनविश्लथनासहकञ्चुकः ।
अधृतकुण्डलमुग्धमुखाम्बुजो जयति यत्र भुजङ्गवधूजनः ॥ ४१ ॥
सति महावरणेऽपि हि यज्जना न दधते परिखाखनने त्वराम् ।
तनुतराब्जभवाण्डकरण्डकाधरकपालपरिक्षतिशङ्कया ॥ ४२ ॥
परिपतत्सु ततः स समन्ततः स्वमवलोकयितुं पुरवासिषु ।
बहिरभीतवदास्त हृदा पुनः परिजजाप पतङ्गपतेर्मनुम् ॥ ४३ ॥
पतति तत्र सुधाशनदीजले फणधराः कतिचित्पथि पातिनः ।
प्रविविशुर्भयसंकुचिताङ्गका रथविटङ्कपदेषु महीपतेः ॥ ४४ ॥
प्रमथनाथजटापटलापतत्फणधरेन्द्रमुखादखिलां कथाम् ।
श्रुतवतां किल तन्नगरौकसां सुरनदी न बभूव भयावहा ॥ ४५ ॥
प्रविशतीषु रसातलमण्डलं त्रिदशसिन्धुजलोरगपङ्क्तिषु ।
अजनि बन्धुसमागमसंभवः फणभृतां प्रतिमन्दिरमुत्सवः ॥ ४६ ॥
अथ परीत्य स भोगवतीं पुरीममरसिन्धुसखो वसुधेश्वरः ।
शुचि विविक्तमनोरममासदद्भगवतः कपिलस्य तपोवनम् ॥ ४७ ॥

१. 'सदनमेत्य स' इत्येव मातृकायाम् (सदनमेत्य च ?).

कपिलकोपहुताशनसंभृतं स पुरतः पितृभस्म निरीक्ष्य तत् ।
प्रमदशोकसमागममूर्च्छितो द्विविधमश्रु दधौ युगपद्दृशोः ॥ ४८ ॥
अथ रथादवतीर्य भगीरथे सगरजानुपसर्पति वीक्षितुम् ।
भसितराशिममज्जयदम्भसा भगवती सुरलोकतरङ्गिणी ॥ ४९ ॥
सुरसरित्कवलीकृतशोषितं दिवि यदास्त पदं त्रिदिवौकसाम् ।
तदपि तत्क्षणनिर्हृतकल्मषैरपहृतं बलिभिः सगरात्मजैः ॥ ५० ॥
प्रथमलब्धसुरालयसंभृतप्रतिनवामृतपानगलत्तृषः ।
तदपवर्जितमञ्जलिमम्भसामपि पपुः पितरः सुतवत्सलाः ॥ ५१ ॥
अथ नदीमवगाह्य विनिर्गतः क्षितिपतिः परिपूर्णमनोरथः ।
मृदुगभीरपदामशृणोद्दिवि स्तुतिं[......]चतुराननगुम्फिताम् ॥ ५१ ॥
न सगरोऽयमविन्दत नांशुमान्न च भवज्जनकस्तपसि स्थितः ।
तमपि लब्धवतोऽद्य मनोरथं तव यशो न गिरां पथि वर्तते ॥ ५३ ॥
श्रुतिगिरोऽपि विचित्य विचित्य यं विफलयन्ति परिश्रममात्मनः ।
समुपलभ्य तमेव महेश्वरं क इव नाम नियोजयितुं प्रभुः ॥ ५४ ॥
दशमुखोऽपि यदङ्घ्रिनियन्त्रितान्परिचकर्ष पुरा न भुजान्निजान् ।
क इव तस्य कपर्दपथंगतां सुरनदीमपि कर्षतु साहसी ॥ ५५ ॥
यदभजन्त दिवं सगरात्मजा यदपि सिन्धुरपूर्यत शोषितः ।
यदुपयन्ति नराश्च परं पदं तदखिलं तव तात तपोबलात् ॥ ५६ ॥
तव भगीरथ वत्स सुतार्थिनस्तनुभवा सरिदस्त्वियमादिमा ।
इति निशम्य गिरं परमेष्ठिनः परिजहौ स तपोजनितां व्यथाम् ॥ ५७ ॥
ततः समामन्त्र्य वियन्नदीं तां तदम्बुसंपातपथेन देवः ।
अपाङ्गपातैः फणिसुन्दरीणामनुद्रुतः प्राप तटं पयोधेः ॥ ५८ ॥
ततश्चिरादेत्य तटं पयोधेः प्रतीक्षमाणा नृपतेर्निवृत्तिम् ।
चमूसमेताः सचिवास्तदीयास्तमुत्पतन्तं सलिलादपश्यन् ॥ ५९ ॥
समुद्यतस्तस्य जलान्नृपस्य मुखेन मुग्धस्मितसुन्दरेण ।
उल्लासमासादयति स्म सेना वेलेव सिन्धोः शशलाञ्छनेन ॥ ६० ॥

१. 'समुद्यतः' इति षष्ठ्येकवचनम्.

1 क्रु २। : ५ [illegible] नवता विचन्ते ॥

तपोविपाकेन निसर्गतोऽपि तमप्रधृष्यं च शनैरुपेत्य ।
पौरैरहंपूर्विकया प्रणेमे तदग्रविन्यस्तमहोपहारैः ॥ ६१ ॥

दृष्ट्यानुकम्प्यानथ संबभाषे संभाषितव्यान्पुनरालिलिङ्ग ।
आलिङ्गितव्यान्प्रणनाम वीरः पौरैश्चिरादुत्सुकतां प्रपन्नः ॥ ६२ ॥

प्रख्यापितं प्राक्सुरलोकसिन्धुतरङ्गरेखाजयडिण्डिमेन ।
पृष्टं प्रधानैः सचिवैरुदन्तं संगृह्य वीरः स्वमुदाजहार ॥ ६३ ॥

अलङ्घ्यवाक्यैरथ बन्धुवर्गैराप्तैरमात्यैरनुजीविभिश्च ।
संप्रार्थ्यमानः सममंस्त वीरः स राजनेपथ्यविधिं तदानीम् ॥ ६४ ॥

मन्दाकिनीमज्जनपूतमेको विस्रंसयन्नस्य जटाकलापम् ।
उन्नम्य मौलिं ग्रथयांबभूव मुक्तामयैर्दामभिरेव सान्द्रम् ॥ ६५ ॥

स दुग्धसिन्धूदरजन्मनेव शुद्धेन रेजे श्रुतिमौक्तिकेन ।
कीर्त्येव कर्णगतया दिगन्तसमाक्रमोदन्तनिवेदनाय ॥ ६६ ॥

आपाण्डरे चन्दनचर्चिकाभिरामुक्तमुक्तासरलोभनीये ।
वक्षःपदे तस्य चिरेण लक्ष्मीर्भस्माङ्गरागव्यसनं मुमोच ॥ ६७ ॥

चचार कर्णद्वयसानुरागे चित्ते यदन्तःपुरसुन्दरीणाम् ।
स तेन संरक्त इवाबभासे परिष्कृतः काञ्चनकञ्चुकेन ॥ ६८ ॥

स पादमूलग्रथितासिधेनुराबद्धतूणः समुपात्तचापः ।
मुखेन रक्तान्तविलोचनेन मूर्तो रसो वीर इवाबभासे ॥ ६९ ॥

हृष्टेन गङ्गानयनान्नदीनां पत्या धुरि न्यस्तमिवोपहारम् ।
सखायमुच्चैःश्रवसस्तुरङ्गं स पाण्डरं कंचिदुपारुरोह ॥ ७० ॥

पदेन किंचिच्चलितेन सैन्धवं भ्रुवा च पर्यन्तविलोलया चमूम् ।
प्रचालयामास समं भगीरथः शनैस्ततः सागरतीरवर्त्मना ॥ ७१ ॥

दृगन्तरान्धंकरणं फणाभृतां दिगन्तगन्धद्विपकर्णदारुणम् ।
मुकुन्दनिद्रारसमोषभीषणं बबन्ध भेरी पुरतोऽस्य मौखरीम् ॥ ७२ ॥

तदानकध्वानतरङ्गसंप्लवैर्बबन्ध शय्या बलिहन्तुरन्धताम् ।
समीपमासेदुषि सा किमन्यथा विशङ्कमासीत विहंगपुंगवे ॥ ७२ ॥

दिवौकसः पाणिविहारमात्रतो दृशोर्निकोचेन परं फणाभृतः ।
अनेन तेनापि नरा व्यवाहरन्नथ क्षणं गर्जति तस्य दुन्दुभौ ॥ ७४ ॥
कठोरधाराङ्कुशपातसंकुचत्सबृंहितोदस्तमुखा विषाणिनः ।
चमूचरान्क्रोशवितीर्णसंभ्रमैर्निषादिभिर्दूरत एव निन्यिरे ॥ ७५ ॥
तनुच्छदासञ्जितचर्मपट्टिकानिबद्धकौक्षेयनिषङ्गकार्मुकाः ।
खलीनरज्जुग्रहणोच्छ्रिताननाः प्रचेलुरश्वाः पुरतोऽस्य सङ्घशः ॥ ७६ ॥
पताकिनीमूलचरो भगीरथः समन्त्रिवर्गैश्चतुरैरतर्क्यत ।
अनुद्रुतः प्राक्चिरमभ्रगङ्गया स्वयं च तां किंचिदनुद्रवन्निव ॥ ७७ ॥
योधैस्तरङ्गाननु निष्पतद्भिर्भङ्गैश्च योधाननु धावमानैः ।
मिथो मृषा युद्धमिवाततान महार्णवस्तस्य बलार्णवेन ॥ ७८ ॥
प्राप्तोपगूहा इव वारिराशेः पर्यन्ततालीवनमर्मरेण ।
तरङ्गरेखाविलयान्तरेषु सेनारवाः शुश्रुविरे नृपेण ॥ ७९ ॥
दिव्यं पयः क्षोणितलेऽवतार्य संपन्नकीर्तिं तमिवानुकर्तुम् ।
भौमं रजो वाजिखुरप्रसूतं पताकिनी तस्य दिवं निनाय ॥ ८० ॥
सैनिकावतरदीर्घतरङ्गां संददर्श सरयूमविदूरे ।
सानुरागमुपगूहितुमग्रे संप्रसारितकरामिव देवः ॥ ८१ ॥
ततो विलम्ब्य क्षणमागमय्य पताकिनीमप्यनुसंपतन्तीम् ।
स राजचिह्नैरुपसेव्यमानः शनैरयोध्याभिमुखं प्रतस्थे ॥ ८२ ॥
तृष्णाकदुष्णं पततामभीक्ष्णं पौराङ्गनालोचनमण्डलानाम् ।
उत्सारणायेव स चामराभ्यां संवीज्यमानः शनकैरयासीत् ॥ ८३ ॥
तस्याग्रतो निर्मलमाबभासे साम्राज्यचिह्नं नवमातपत्रम् ।
पुरौकसां दर्शयितुं नृपेण नीतः कियानंश इवाभ्रसिन्धोः ॥ ८४ ॥
आलिप्तहर्म्याग्रपदं सुधाभिराबद्धहेमध्वजलोभनीयम् ।
संमृष्टरथ्यं च समन्ततोऽपि भगीरथस्तन्नगरं विवेश ॥ ८५ ॥
पताकिनीभिः प्रविशन्तमन्तर्लाजैरवर्षन्पुरयोषितस्तम् ।
गङ्गावतारावसरे पुरेव दिव्यैः प्रसूनैर्दिवि देवकन्याः ॥ ८६ ॥
आह्लादिभिर्मङ्गलतूर्यघोषैराशीर्वचोभिश्च समं जनानाम् ।
सौधाधिरूढैः शतशोऽवरोधैः संदृश्यमानः सदनं विवेश ॥ ८७ ॥

संभाव्य देवः क्रमशो द्विजातीन्बन्धूनमात्याननुजीविनश्च । Ditto
द्वारान्तिकस्तब्धवधूसमाजसंबाधमन्तःपुरमाविवेश ॥ ८८ ॥
वियोगखिन्नास्तपसा विषण्णं स्वप्नेक्षिताः स्वप्नदशानुभूतम् । Kalidasian manner
स्मेराननाः स्मेरमुखारविन्दं तमभ्युपेयुस्तरुणं तरुण्यः ॥ ८९ ॥ /
पादे निपेतुः परिरभ्य दीर्घं तस्थुर्मुखैस्तस्य मुखं चुचुम्बुः ।
संकल्पयोगाच्चिरविप्रलब्धास्तथापि तं नैव विशश्वसुस्ताः ॥ ९० ॥

संरक्षन्ननुजीविनो वितरणैः संप्रीणयन्नर्थिनः
पौराञ्जानपदानपि प्रतिदिनं पश्यन्दयादृष्टिभिः ।
आ वेधोगृहमा रसातलमपि स्वं नाम विश्रावय-
न्दीनत्राणकृता भुजेन बुभुजे देवः समस्तां भुवम् ॥ ९१ ॥ ✓✓

वाचं व्याकुरुते चिरंतनगिरं मीमांसते चोभयीं
पान्थः काव्यपथेषु पादकमले सक्तः पुरारेरिति ।
मामेतत्कथयिष्यतीति रचितं काव्यं मया तत्पुन-　　N.K. Vij...
स्तावद्द्रक्ष्यति वा न वा तदुपरि न्यस्तः समस्तो भरः ॥ ९२ ॥

साहित्यं न हि जानते कतिपये शास्त्रैकनिष्ठा यदि
क्षन्तव्यं विदुषामिदं क्व नु पुनः सर्वत्र सर्वज्ञता ।
उत्पन्नाः किल धूमकेतव इव क्लिश्नन्ति यत्साहितीं
दुर्वैदग्ध्यलवेन केचिदिह तद्दुःखाय विद्यावताम् ॥ ९३ ॥

अस्पृष्टाः कलयापि दुष्कविकुलैरज्ञैरनाकर्णिता
ज्ञानाज्ञानवतां कदाप्यपतिता दूरे दुरूहाध्वनि । न दृष्ट
खेलन्तु श्रुतिसंपुटीचुलुकिताः स्वैरं रसज्ञैर्जनैः
प्रत्युक्तिच्यवमाननूतनसुधासाराः कवीनां गिरः ॥ ९४ ॥ /

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्ध-
निर्वाहकमहाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदाच्चादीक्षितपौत्रेण
नारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितेन विरचिते
गङ्गावतरणे भगीरथनगरप्रवेशो नामाष्टमः सर्गः ।

**समाप्तोऽयं ग्रन्थः ।**

काव्यमाला. १८.

श्रीअमरुककविविरचितम्

# अमरुशतकम् ।

अर्जुनवर्मदेवप्रणीतया रसिकसंजीवनीसमाख्यया व्याख्यया समेतम् ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना महामहोपाध्याय-पण्डितदुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-पाण्डुरङ्गात्मजकाशीनाथशर्मणा च संशोधितम् ।

द्वितीयं संस्करणम् ।

तच्च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा प्राकाश्यं नीतम् ।

१९००



मूल्यं १० आणकाः ।

# अमरुककविः ।

अमरुशतकं मण्डनमिश्रपत्न्याः शारदायाः प्रश्नानामुत्तरदानार्थं गतासोरमरुकाख्यमहीपतेर्देहं प्रविष्टेन श्रीशंकराचार्येण प्रणीतमिति बहूनां प्रवादः. "भगवाञ्छंकराचार्यो दिग्विजयच्छलेन काश्मीरमगमत् । तत्र शृङ्गाररसवर्णनार्थं सभ्यैरभ्यर्थितः 'शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत्' इति वचनादमरुकनाम्नो राज्ञो मृतस्य परवपुःप्रवेशविद्यया शरीरे प्रवेशं कृत्वा स्त्रीशतेन सह केलिं विधाय प्रातस्तथाकारयामास । पिशुनैः कापटिकोऽयमाजन्मब्रह्मचारीत्युपहसितः शान्तरसमत्र व्याचष्टे इति किंवदन्ती।" इति रविचन्द्रः स्वकृताया अमरुशतकटीकायाः प्रारम्भे लिलेख. किं त्वेतत्सर्वं शंकरदिग्विजयानवलोकनमूलं प्रमादविलसितम्. तथा हि माधवकविप्रणीते शंकरदिग्विजये नवमदशमसर्गयोः "कलाः कियत्यो वद पुष्पधन्वनः किमात्मिकाः किं च पदं समाश्रिताः । पूर्वे च पक्षे कथमन्यथा स्थितिः कथं युवत्यां कथमेव पूरुषे ॥' इति श्रीशंकराचार्यं प्रति शारदाप्रश्नाः । ततः शारदाप्रश्नश्रवणानन्तरं यद्यस्याः प्रश्नानामुत्तरं न दास्यामि तदा ममाल्पज्ञता प्रतीयेत, उत्तरदाने तु संन्यासिनो मम कामशास्त्रचर्चया धर्मक्षयो भवेदिति विचार्य प्रश्नोत्तरदाने मासमात्रमवधिं विधाय शिष्यैः सह गगनमुत्पपाताचार्यः । गगने बम्भ्रम्यमाण एव मृगयार्थमायातमटव्यामेव दैवयोगाद्गतप्राणं विलपन्तीभिः प्रमदाभिः परितममरकाख्यमहीपतिं तरुमूले विलोक्य सनन्दनाख्यशिष्येण सह संमन्त्र्य शिष्यैः कृतरक्षमात्मकलेवरं कुत्रचन गिरिगह्वरे निधाय योगयुक्त्यामरकनृपशरीरे प्रविवेश । प्रमुदितैर्मन्त्रिभिर्महिषीभिश्च समेतो नृपशरीरधारी राजधानीं च जगाम । तत्र च मनोहरतराभिर्महीपतिपङ्कजाक्षीभिस्तांस्तान्भोगानुपभुज्य कामतत्त्वं सम्यगभिज्ञाय 'वात्स्यायनप्रोदितसूत्रजातं तदीयभाष्यं च विलोक्य सम्यक् । स्वयं व्यधत्ताभिनवार्थगर्भं निबन्धमेकं नृपवेषधारी ॥" इत्याख्यायिका वर्तते. एतेन श्रीशंकराचार्यो वात्स्यायनीयकामसूत्रानुकूलं कमपि निबन्धं रचयामास, तत्रैव च शारदाप्रश्नानामुत्तराण्यप्यन्तर्भावयांचकारेति प्रतीयते. न त्वमरुशतकनिर्माणसूचनमात्रमपि शंकरदिग्विजये समुपलभ्यते. नाप्यमरुशतके शारदाप्रश्नोत्तरानुरूपं किमप्यस्ति. एवं रविचन्द्रोक्तमप्यसंबद्धमेव यतस्तत्रैव षोडशे सर्गे आचार्यस्य काश्मीरयात्रा तत्र च शारदासदने तत्तद्देशवासिभिर्वादिभिर्विवादश्च सम्यग्वर्णितः. किं तु शृङ्गाररसवर्णनार्थं सभ्यैरभ्यर्थित इत्यादिरविचन्द्रोक्तं तत्र नोपलभ्यते तस्मादेवंविधा निर्मूला जनश्रुतयः कथं प्रमाणत्वेन स्वीकर्तुमर्हाः ? अथ यदि शारदाप्रश्नोत्तरदानार्थं निबन्धं प्रणीयामरुशतकमप्याचार्येणैव निरमायीति को विकल्पावकाश इत्युच्यते, तर्हि तन्निबन्धनिर्माणं शारदाप्रश्नोत्तरदानार्थमात्मनः सर्वज्ञताकीर्तिरक्षार्थं च, किं त्वमरुशतकप्रणयनं शृङ्गारव्यसनितयैवेत्यप्यङ्गीकार्यमिति महती विडम्बना यतिवरस्य. तस्मादस्य शतकस्य प्रणेतामरुककविः कश्चिदन्य एव. स च कदा कुत्र समुत्पन्न इति न ज्ञायते. किं तु ध्वन्यालोकस्य तृतीयोद्द्योते 'मु-

क्तकेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते । तथाह्यमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव ।' इत्यानन्दवर्धनाचार्य उक्त्वानुदाहृतवांश्च बहूनमरुशतकश्लोकांस्तत्तत्स्थलेषु. तस्मात्खिस्ताब्दीयनवमशतकात्प्राक्तनोऽमरुककविरिति ज्ञायते.

शतकस्यास्य भूयस्यष्टीका वर्तन्ते । तत्रास्माभिः (१) अर्जुनवर्मदेवकृता रसिकसंजीविनी, (२) वेमभूपालकृता शृङ्गारदीपिका, (३) रुद्रमदेवकृता, (४) रविचन्द्रकृता, (५) सूर्यदासकृता शृङ्गारतरङ्गिणी, (६) शेषरामकृष्णकृता रसिकसंजीविनी, (७) कर्तृनामरहिता, इति टीकासप्तकमासादितम्.

तत्र—अर्जुनवर्मदेवः सुप्रसिद्धस्य मालवाधिपतेर्भोजनरेन्द्रस्य वंश्यः सुभटवर्मसूनुरासीदिति तत्कृतटीकाप्रारम्भश्लोकेभ्यः काव्यमालायां ३ लेखे मुद्रितात्तदीयदानपत्राच्च ज्ञायते. तच्च दानपत्रं १२७२ मिते विक्रमाब्दे लिखितमिति खिस्ताब्दीयत्रयोदशशतकपूर्वार्धेऽर्जुनवर्म आसीदित्यपि सुव्यक्तम्. अर्जुनवर्मदेवश्च टीकायां 'यदुक्तमुपाध्यायेन बालसरस्वत्यपरनाम्ना मदनेन' इति वदंस्तत्तत्स्थलेषु मदनोपाध्यायप्रणीतान्बहूञ्श्लोकान्प्रमाणत्वेनोपन्यस्तवान्. दानपत्रसमाप्तौ 'रचितमिदं—राजगुरुणा मदनेन' इत्यस्ति. तस्मात्कस्यचनालंकारनिबन्धस्य प्रणेता अर्जुनवर्मगुरुर्मदनोपाध्यायोऽपि तत्समय असीत्. तत्प्रणीतग्रन्थस्तु नाद्यापि दृक्पथं गतः. 'हरिहर गर्व परिहर कविराजगजाङ्कुशो मदनः । मदन विमुद्रय वदनं हरिहरचरितं स्मरातीतम् ॥' इति प्राचीनं पद्यमपि कदाचिदस्यैव मदनोपाध्यायस्य वर्णनपरं स्यात्.

वेमभूपालस्तु शृङ्गारदीपिकाप्रारम्भे इत्थमात्मानमवर्णयत्—

'अन्योन्यमेलनवशात्प्रथमं प्रवृद्धं मध्ये मनाग्व्यवहितं च कुतोऽपि हेतोः ।
प्राप्तं दशामथ मनोरथलाभयोग्यां पायाच्चिरं रतिमनोभवयोः सुखं वः ॥

आसीच्चतुर्थान्वयचक्रवर्ती वेमक्षितीशो जगदेकवीरः ।
एकादशेति प्रतिभान्ति शङ्कां(?) येनावताराः परमस्य पुंसः ॥

राज्यं वेमः सुचिरमकरोत्प्राज्यहेमाद्रिदानो
भूमीदेवैर्भुवमुरुभुजो भुक्तशेषामभुङ्क्त ।
श्रीशैलाग्रात्प्रभवति पथि प्राप्तपातालगङ्गे
सोपानानि प्रथमपदवीमारुरुक्षुश्चकार ॥

माचक्षोणिपतिर्महेन्द्रमहिमा वेमक्षितीशाग्र(नु)जो
रामाद्यैः सदृशो बभूव सुगुणैस्तस्य त्रयो नन्दनाः ।
कीर्त्या जाग्रति रेड्डिपोतनृपतिः श्रीकोमटीन्द्रस्ततो
नागक्ष्मापतिरित्युपात्तवपुषो धर्मार्थकामा इव ॥

वेमाधिपो माचविभुश्च नन्दनौ श्रीकोमटीन्द्रस्य गुणैकसंश्रयौ ।
भूलोकमेकोदरजन्मवाञ्छया भूयोऽवतीर्णाविव रामलक्ष्मणौ ॥

स वेमभूपः सकलासु विद्यास्वतिप्रगल्भो जगनोष्वगण्ड:(?) ।
कदाचिदास्थानगतः कवीनां काव्यामृतास्वादपरः प्रसङ्गात् ॥
अमरुककविना रचितां शृङ्गाररसात्मिकां शतश्लोकीम् ।
श्रुत्वा विकसितचेता तदभिप्रायं प्रकाशतां नेतुम् ॥
मूलश्लोकान्समाहृत्य प्रक्षिप्तान्परिहृत्य च ।
विधत्ते विदुषामिष्टां टीकां शृङ्गारदीपिकाम् ॥

अनेनायं वेमभूपालः केरलदेशीयः कश्चन शूद्रमहीपतिरासीदिति भाति. अभिनवबाणकविप्रणीते वीरनारायणचरिताभिधे गद्यकाव्ये वर्णितत्रिलिङ्गदेशान्तर्गत'अद्दङ्की'नामनगर्यधीशः कदाचिदयमन्यो वेति संदेहः.

रुद्रमदेवस्तु नात्मानं वर्णितवान्. केवलं टीकासमाप्तौ—

'अमरुकशतमिदमित्थं स्वबुद्धिविभवाद्रसाभिधतत्त्वज्ञः ।
रुद्रमदेवकुमारो विदग्धचूडामणिर्व्यवृणोत् ॥'

इयमार्या वर्तते.

रविचन्द्रविषये किमपि न ज्ञायते.

सूर्यदासः कदाचन सिद्धान्तसुन्दरकर्तृज्ञानराजदैवज्ञात्मजो रामकृष्णविलोमकाव्यभगवद्गीताटीकयोः प्रणेतैव स्यात्.

शेषरामकृष्णस्तु कश्चन वाराणसेयः शास्त्री.

एतासु सप्तस्वपि टीकास्वर्जुनवर्मप्रणीता श्रेष्ठतमेति सैवास्माभिर्मुद्रिता. वेमभूपतिकृतापि समीचीनैव. रुद्रमदेवकृतातिसंक्षिप्ता. रविचन्द्रकृतायां शान्तरसोऽपि व्याख्यातः. स च शुचिरसस्यन्दिष्वमरुकश्लोकेषु परिशील्यमानेषु 'रहसि प्रौढवधूनां रतिसमये वेदपाठ इव' सहृदयानां शिरःशूलमेव जनयति. सूर्यदासेनार्जुनवर्मप्रणीतटीकायाः सर्वस्वमपहृतम्. शेषरामकृष्णेन वेमभूपालटीका सम्यगेव लुण्ठितेत्युभावपि परार्थहरणप्रवणावतिसाहसिकौ पाटच्चराविति न संदेहः. सप्तमी कर्तृनामरहिता टीका तु टिप्पणमात्रं केनचिज्जैनेन प्रणीतेति भाति. एवं शंकरकृता हरिहरभट्टकृता अमरुदर्पणं चेति टीकात्रयमन्यदप्यस्ति. तच्चास्माभिर्नासादितम्.

अस्मद्दृष्टान्यमरुशतकमूलपुस्तकान्यपि कानिचिदर्जुनवर्मदेवटीकायाः, कानिचिच्च वेमभूपालटीकायाः प्रायोऽनुकूलानि सन्ति. टीकाद्वये च श्लोकविन्यासभेदः. कानिचिच्च पद्यान्येकेन व्याख्यातान्यपरेण परित्यक्तानि. अमरुशतकपुस्तकेष्वनुपलभ्यमानानि कानिचन पद्यानि सुभाषितावल्यादिष्वमरुकनाम्ना, कानिचिच्च शतकपुस्तकेषूपलभ्यमानान्यप्यन्यकविनाम्ना समुद्धृतानीत्यादि सर्वं परिशिष्टेषु श्लोकानुक्रमणिकायां चास्माभिर्दर्शितमस्तीति शिवम्.

अस्मन्मुद्रणाधारभूतानि पुस्तकानि त्वेतानि—

(१) अर्जुनवर्मटीकासमेतं कश्मीरलिखितं प्रायः शुद्धं नवीनमस्मदीयम्. तत्पत्राणि २६.

(२) अर्जुनवर्मटीकासमेतं जयपुरराजगुरुभट्टलक्ष्मीदत्तसूनुभट्टश्रीदत्तशर्मणां प्रायः शुद्धं १६९५ विक्रमसंवत्सरे लिखितम्. तत्पत्राणि ६४.

(३) अर्जुनवर्मटीकासमेतमेव डॉक्टर् पी. पीटर्सन्महाशयेन मथुरातः समानीय दत्तं १६६५ विक्रमाब्दे लिखितं नातिशुद्धमष्टपत्रविकलम्.

(४) वेमभूपालकृतटीकासमेतं जयपुरराजगुरुपर्वणीकरोपाह्वनारायणभट्टानां नातिशुद्धम्. तत्पत्राणि ३१.

(५) तादृशमेव मुम्बईनगरवास्तव्यपण्डितज्येष्ठाराममुकुन्दजीशर्मणाम्. तत्पत्राणि ३४.

(६) रुद्रमदेवकृतटीकासमेतं शुद्धं १५७९ विक्रमाब्दे लिखितं सुरतनगरवासिना केवलदासात्मजेन भगवान्दासश्रेष्ठिना समानीय दत्तम्.

(७) इतस्ततः संपादितानि त्रिचतुराणि मूलपुस्तकानि.

# काव्यमाला।

अमरुककविविरचितम्

## अमरुशतकम्।

Com is not a very accurate

महाराजश्रीमदर्जुनवर्मदेवप्रणीतया रसिकसंजीवनीसमाख्यया व्याख्ययोपेतम्।

देवी रतिर्विजयते मृगनाभिचित्रपत्रावली पृथुपयोधरसीम्नि यस्याः।
भाति त्रिलोकविजयोपनतस्वकान्तप्रकान्तसायकनिशाणनकालिकेव॥

भ्रूलास्योत्सविनी सविभ्रमगतिर्मूर्छन्नितम्बस्तना
संकीर्णे वयसि स्मितार्द्रभणितिः सा पार्वती पातु वः।
यस्याः कर्णतटं दृशावगमतो तूर्णं तदन्तःपथे
गत्वा द्रष्टुमिवेश्वरं हृदि कृताधिष्ठानमाकुञ्चिते॥

अमरुककवित्वडमरुकनादेन विनिह्नुता न संचरति।
शृङ्गारभणितिरन्या धन्यानां श्रवणयुगलेषु॥

आपद्यन्तां विकासं कथमिह कुमुदानीव कार्कश्यदीप्य-
त्सूर्यारब्धप्रबन्धव्यसननिपतितान्युत्तमानां मनांसि।
आविर्भावं भजन्ते यदि न बुधगुरोर्मन्मथप्रौढिकाराः
क्रीडाधाम्नः कलानाममरुकसुकवेः केऽप्यमी श्लोकपादाः॥

क्षिप्ताशुभः सुभटवर्मनरेन्द्रसूनुर्वीरव्रती जगति भोजकुलप्रदीपः।
प्रज्ञानवानमरुकस्य कवेः प्रसारश्लोकाञ्छतं विवृणुतेऽर्जुनवर्मदेवः॥

अव्युत्पत्तिमतामन्तःप्रबोधाय सचेतसाम्।
काव्याभिधेयालंकारलक्षणं लिख्यते मनाक्॥

तत्रादिमोऽयमाशंसनश्लोकः—

ज्याकृष्टिबद्ध[1]खटकामुखपाणिपृष्ठ-
प्रेङ्खन्नखांशुचयसंवलितो[2]ऽम्बिकायाः।
त्वां पातु मञ्जरितपल्लवकर्णपूर-
लोभभ्रमाद्भ्रमरविभ्रमभृत्कटाक्षः॥ १॥

---

१. 'तर्जनीमध्यमामध्ये पुङ्खोऽङ्गुष्ठेन पीड्यते। यस्मिन्ननामिकायोगः स हस्तः कटकामुखः॥' इति शृङ्गारदीपिका. २. 'मृडान्याः' इति शृङ्गारदीपिकासंमतः पाठः.

'यद्गतागतिविश्रान्तिवैचित्र्येण विवर्तनम् । तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ॥' सर्वमङ्गलायाः कटाक्षस्त्वां पातु रक्षतु । किंविशिष्टः । ज्याकृष्टीत्यादि । बाणासनगुणाकर्षणेन रचितो यः खटकामुखो नाम हस्तस्तस्य पृष्ठं तत्र परिस्फुरन्यः करजकिरणकलापस्तेन संवलितः करम्बितः । खटकामुखलक्षणं चैतत्—'अस्या एव यदा मुष्टेरूर्ध्वोऽङ्गुष्ठः प्रयुज्यते । हस्तकः शिखरो नाम तदा ज्ञेयः प्रयोक्तृभिः ॥ शिखरस्यैव हस्तस्य यदाङ्गुष्ठनिपीडिता । प्रदेशिनी भवेद्वक्रा कपित्थो जायते तदा ॥ उत्क्षिप्ता च यदा वक्रानामिका सकनीयसी । एतस्यैव कपित्थस्य तदा स्यात्खटकामुखः ॥' अथ कटाक्षस्योपमानगर्भं विशेषणमाह—पुनः किंविशिष्टः । मञ्जरितेत्यादि । मञ्जरी उद्भिद्यमानमुकुलसंततिः । सा संजातास्येति तारकादिभ्य इतच् । मञ्जरितो यः पल्लवः स एव कर्णपूरस्तत्र लोभस्तेन भ्रमन्यो भ्रमरस्तस्य विभ्रमो विलासस्तं बिभर्तीति क्विप् । इति तावद्वाक्यार्थः । रहस्यं चैतत्परमार्थसहृदया मन्यन्ते—यं रसमुपनिबद्धुमेष कविः प्रवृत्तः स यद्यप्यकृत्रिमानुरागस्त्रीपुंसपरस्परानुरागकल्लोलितः परां कोटिमधिरोहति तथापि नायिकायाः प्राधान्यम् । तत्प्राधान्यप्रकाशनपरश्चायमौचित्यात्कटाक्षमुख्यत्वेनाभीष्टदेवताशंसनश्लोकोऽपि प्रथमं लिखितः, 'क्षिप्तो हस्तावलग्नः' इत्यादिश्लोकस्तु चरमम् । किं च धर्मार्थयोरुपरिवर्तमानस्य मोक्षात्किंचिदर्वाचीनस्य पुरुषार्थविशेषस्य निधानमपत्येनैव पितृणामानृण्यहेतुभूता नितम्बिनीर्विहाय किमन्यदुपादेयम् । यदुक्तमुपाध्यायेन बालसरस्वत्यपरनाम्ना मदनेन—'संसारे यदुदेति किंचन फलं तत्कृच्छ्रसाध्यं नृणां किं त्वेतत्सुखसाध्यमस्ति युगलं सम्यग्यदि ज्ञायते । यल्लक्ष्मीसमुपार्जनं पुलकिनां रक्तस्वरं गायतां यत्कान्तारतिनिस्तरङ्गमनसामुत्पद्यते नन्दनः ॥' कामशास्त्रेऽप्युक्तम्—'किं स्यात्परत्रेत्याशङ्का यस्मिन्कार्ये न जायते । न चार्थघ्नं सुखं चेति शिष्टास्तस्मिन्व्यवस्थिताः ॥' परस्त्रीगतोऽप्ययं रस उपनिबध्यमानो न पातकाय । एवंविधसंविधानकैः स्त्रीणां चारित्रखण्डनं भवति तस्मात्प्रयत्नेनैताः संरक्षणीया इत्युपदेशपर्यवसितत्वात् । अन्यथा वात्स्यायनो महर्षिस्तत्तदुपायैः परस्त्रीसाधन कथं प्रणीतवान् । उक्तं च—'संदृश्य शास्त्रतो योगान्पारदारिकलक्षितान् । न याति च्छलनं कश्चित्स्वदारान्प्रति शास्त्रवित् ॥' यद्यपि धनुर्वेदे खटकामुखः प्रणीतोऽस्ति तथाप्यत्र नृत्यसंस्कार एवायं हस्तको देव्याः । एवं च महान्विशेषः । लास्यलीलयैव देव्या दुरतिक्रमदैत्यकुलक्षयः कृत इति प्रभावातिशयप्रतीतेः । 'यतो हस्तस्ततो दृष्टिर्यतो दृष्टिस्ततो मनः' इत्युक्तत्वात्खटकामुखे कटाक्षनिवेशनं युक्तम् । सहृदयंमन्यैश्च पुनरत्र मुरटाप्रभृतिपञ्चमुष्टीनां मध्ये केयं मुष्टिः कैशिकप्रमुखपञ्चन्यायेषु कश्चायं न्याय इत्यादिशरासनशास्त्रचर्चा क्रियते । वयं त्वेवं ब्रूमः—यत्र शृङ्गारैकरसः कविः पुरुषायितप्रवृत्तकामिनीवदनमेव त्वां पातु किं हरिहरस्कन्दादिभिर्दैवतैरिति देवताशंसनमप्यपार्थकप्रायं प्रतिपादयति तत्र को नाम धनुर्वेदमनिर्वेदः पल्लवयितुमुत्सहत इति । प्रेङ्खत्खाङ्गुपाणिपृष्ठकटाक्षयोर्मञ्जरित-

१. 'मुचटी' इति द्वितीयपुस्तके.

पल्लवकर्णपूरभ्रमराभ्यां सहोपमानोपमेयभावः । तेन कोमलारुणपाणिनिर्मलनखान्ततरङ्गितचपलापाङ्गचमत्कारेण चन्द्रचूडचित्तानुमोदननिबन्धिनी देव्याः सौन्दर्यविभ्रमसंपत्तिः प्रतिपादिता । देवीनां हि लावण्यवर्णनाभिनिवेशस्तत्प्राणेश्वरप्रीतिप्रतिपादनाकाङ्क्षयैव कवीनाम् । इतराकाङ्क्षया तु कलङ्किन एव ते स्युः । उपनिबद्धं च भट्टबाणेनैवंविध एव सङ्ग्रामप्रस्तावे देव्यास्तत्तद्भङ्गिभिर्भगवता भर्गेण सह प्रीतिप्रतिपादनाय बहुधा नर्म । यथा—'दृष्टावासक्तदृष्टिः प्रथममथ तथा संमुखीनाभिमुख्ये स्मेरा हासप्रगल्भे प्रियवचसि कृतश्रोत्रपेयाधिकोक्तिः । उद्युक्ता नर्मकर्मण्यवतु पशुपतेः पूर्ववत्पार्वती वः कुर्वाणा सर्वमीषद्विनिहितचरणालक्तकेव क्षतारिः ॥' अत एवाम्बिकाया इति पदं न्यस्तम् । कोऽभिप्रायः । अन्येषां सर्वेषामपि मातुर्भगवतश्च नीलकण्ठस्य प्रियायाः । अन्यथा कटाक्षादिवर्णनप्रस्तावे कोऽवकाशोऽम्बिकादीनां पदानामिति । संवलितोऽम्बिकाया इत्यत्र, लोभभ्रमद्भ्रमरेत्यादौ चानुप्रासो नाम शब्दालंकारः । यदाह भट्टरुद्रटः—'एकद्वित्र्यन्तरितं व्यञ्जनमविवक्षितस्वरं बहुशः । आवर्त्यते निरन्तरमथवा यदसावनुप्रासः ॥' अत्र वीररसस्यानुगुणो विकटपदानां प्रकृष्टो न्यासोऽनुप्रासः । अलंकाराणां सामान्यलक्षणं चैतत्—'काव्यशोभाकरान्धर्मानलंकारान्प्रचक्षते ।' ज्याकृष्टीत्यादौ मञ्जरीत्यादौ च यथाशक्तिसमासाद्गौडीया रीतिः । यदुक्तम्—'द्वित्रिपदा पाञ्चाली लाटीया पञ्च सप्त वा यावत् । शब्दाः समासवन्तो भवति यथाशक्ति गौडीया ॥' ये च दण्डिनाचार्येण—'श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः । इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ॥' इति गुणाः प्रतिपादितास्ते चात्र शृङ्गाररसोचिता बाहुल्येन भविष्यन्ति । तस्माद्वैदर्भमार्गे सर्वथा समास एव न स्यादिति न वाच्यम् । ओजसः समासभूयस्त्वात् । तर्ह्योजोगुण एव गौडीयो मार्ग इति चेत्, गौडीये केवलं यथाशक्ति समास एव वैदर्भे पुनः श्लेषप्रसादादयोऽपीति । ननु गुणा अपि काव्यशोभाहेतवस्तत्कथं 'काव्यशोभाकरान्' इत्याद्यलंकारलक्षणं समानजातीयव्यवच्छेदकं स्यात् । उच्यते—नहि गुणाः कटककेयूरादिवदाभरणत्वेनालंकुर्वन्ति । किं तु शौर्यौदार्यवत्प्रकर्षमादधते । उक्तं चानन्दवर्धनाचार्येण—'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् । हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥ तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः । अङ्गाश्रितास्त्वलंकारा मन्तव्याः कटकादिवत् ॥' अर्थालंकारश्चात्र कल्पितोपमा । यदुक्तम्—'सा कल्पितोपमाख्या यैरुपमेयं विशेषणैर्युक्तम् । तादृग्भिस्तावद्भिः स्यादुपमानं तथा यत्र ॥' यथा—'मुखमापूर्णकपोलं मृगमदलिखितार्द्रपत्रमेतत्ते । भाति लसत्सकलकलं सलाञ्छनं चन्द्रबिम्बमिव ॥' सामान्यलक्षणं चैतत्—'उभयोः समानमेकं गुणादिसिद्धं यथा यदेकत्र । अर्थेऽन्यत्र तथा तत्साध्यत इति सोपमा ज्ञेया ॥' श्रुतालंकारैरत्रोत्प्रेक्षा कैश्चिदुक्ता । सा च न भवति । सिद्धोपमानसद्भावाभावात् । यदुक्तम्—'अतिसारूप्यादैक्यं विधाय सिद्धोपमानसद्भा-

---

१. चण्डीशतके.

वम् । आरोप्यते च तस्मिन्नतद्गुणादीति सोत्प्रेक्षा ॥' यथा—'चम्पकशिखराग्रमिदं कुसुमसमूहच्छलेन मदनशिखी । अयमुच्चैरारूढः पश्यति पथिकान्दिधक्षुरिव ॥' यत्र संभावनमात्रेण 'लिम्पतीव तमोऽङ्गानि' इत्यादिवदुपमानोपमेयभाव एव नास्ति तत्रातिशयोत्प्रेक्षाव्यवहारः । भट्टरुद्रटमते हि चतस्रोऽलंकाराणां जातयः—वास्तवमौपम्यमतिशयः श्लेष इति । अत्र यद्यपि दैत्यदलनोपक्रमे भ्रूभङ्गलोचनलौहित्यादिविकाराभावादुपमायाः सौन्दर्यविभ्रमसंपत्तिं धैर्यातिशयशालिनीं प्रतिपादयन्त्या 'उत्साहात्मा वीरः स च त्रिधा धर्मयुद्धदानेषु' इति वचनाद्युद्धवीररसे गौडीरीतिव्यञ्जितौजसि तत्परता । तथापि न रसस्य प्राधान्यम्, किं तु त्रयस्त्रिंशत्कोटित्रिदशैरप्यशक्ये कर्मण्यध्यवसिताया देव्याः प्रभावातिशयमात्रात्मनो वाक्यार्थस्य । तेनोपमाया रसवदलंकारत्वम् । यदुक्तम्—'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः । काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः ॥' भ्रमरसाधर्म्यारोपणेन कवेरसितः कटाक्षोऽभिप्रेतः । वर्णयन्ति सितमसितं सितासितं च कटाक्षम् । तत्र सितो यथा धनंजयस्य—'उज्जृम्भाननमुल्लसत्कुचतटं लोलभ्रमद्भ्रूलतं स्वेदाम्भःस्नपिताङ्गयष्टि विगलद्व्रीडं सरोमाञ्चया । धन्यः कोऽपि युवा स यस्य वदने व्यापारिताः सांप्रतं मुग्धे दुग्धमहाब्धिफेनपटलप्रख्याः कटाक्षच्छटाः ॥' असितो यथा कस्यापि—'गतः कालो यत्र प्रणयिनि मयि प्रेमकुटिलः कटाक्षः कालिन्दीलघुलहरिवृत्तिः प्रभवति । इदानीमस्माकं जरठकमठीपृष्ठकठिना मनोवृत्तिस्तत्किं व्यसनिनि मुधैव क्षपयसि ॥' सितासितो यथा—'अदृश्यन्त पुरस्तेन खेलाः खञ्जनपङ्क्तयः । अस्मर्यन्त विनिःश्वस्य प्रियानयनविभ्रमाः ॥' इति ॥

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥ २ ॥

स शांभवः शराग्निर्युष्माकं दुरितं दहतु हरतु । स कः । य आर्द्रापराधः कामीव त्रिपुरयुवतिभिर्बाष्पजलज्झलायितलोचनेन्दीवराभिः करव्यतिषक्तः प्रेरितः । बलात्कारेण वस्त्राञ्चलमवलम्बमानस्ताडितः । निरस्तश्च शिरोरुहेषु लग्नः । पादप्रणतस्तु पर्याकुलतया नावलोकितोऽपि । निर्भर्त्सितश्च परिष्वजमान इति । अत्र भगवतः पिनाकपाणेर्बाणानलभस्मीकृतोद्भटदानवेन्द्रस्य प्रभावातिशयद्योतको वीररसोऽङ्गीकृतः । क्षिप्तो हस्तावलग्न इत्यादिना दनुजेन्द्रदयितानामीर्ष्यारूपो विप्रलम्भशृङ्गारः, साश्रुनेत्रोत्पलाभिरित्यनेन प्राणेश्वरशोकात्मा करुणरसश्चाङ्गम् । न चानयोरन्योन्यं विरोधः । अन्यपरत्वात् । यथाहि महर्षीणामाश्रमेष्वहिनकुलादीनाम् । यदुक्तम्—'विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम् । वाच्यानामङ्गभावं च प्राप्तानामुक्तिरच्छला ॥' विशेषतस्तु प्रस्तुतपरिपोषकारिणावेतौ । ईर्ष्यारूपस्तावदत्र विप्रलम्भशृङ्गारः करुणमेव पुष्णाति । यदुक्तम्—

"प्रकृतिरमणीयाः पदार्थाः शोचनीयतां प्राप्ताः प्रागवस्थाभाविभिः संस्मर्यमाणैर्विलासैरधिकतरं शोकावेशमुपजनयन्ति । यथा—'अयं स रसनोत्कर्षी पीनस्तनविमर्दनः । नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥" इति । इह हि यास्तत्तदुपायपरिचर्याचतुरेण कान्तेन कुपिताः प्रसादितास्ता एव दनुजराजराजीवलोचनाश्चिरमननुभूतान्यविषयतया विपद्व्यसनेऽपि मानिनीमानदर्शनं दर्शयन्त्यो दारुणदहनेन परिभूयन्त इति प्रतीतेः करुणोऽपि प्रतिपक्षगतत्रिपुररिपोरभिनन्द्यवन्द्योदयस्य वीरं पुष्णाति । अत्रासूयाश्रुणी व्यभिचारिसात्त्विकौ भावौ प्रकर्षेण रसतां गतौ । यदुक्तम्—'निर्वेदोऽथ तथा ग्लानिः शङ्कासूयामदश्रमाः । आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ व्रीडा चपलता हर्ष आवेगो जडता तथा । गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ सुप्तं विबोधो हर्षश्चाप्यवहित्थमथोग्रता । मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः । त्रयस्त्रिंशदमी भावाः प्रयान्ति रससंस्थितिम् ॥ स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥' अलंकारश्च क्षिप्तो हस्तावलग्न इत्याद्येकैकवाक्यप्रतिपादितशराग्निसापराधकामिवृत्तान्तेनार्थश्लेषेणानुप्राह्योपमा । अर्थश्लेषलक्षणम्—'एकार्थवाचकानामेव शब्दानां यत्रानेकोऽर्थः सोऽर्थश्लेषः' इति । तेन 'यत्रैकमनेकार्थैर्वाक्यं रचितं पदैरनेकस्मिन् । अर्थे कुरुते निश्चयमर्थश्लेषः स विज्ञेयः ॥' इति भट्टरुद्रटेन यल्लक्षणं कृतं तच्छब्दश्लेषमेव प्राप्नोति । अनेकार्थानां हि शब्दानामन्वयव्यतिरेकाभ्यां तस्य प्रवृत्तिनिवृत्ती । यथा—'तवैष विद्रुमच्छायो मरुमार्ग इवाधरः । करोति कस्य नो बाले पिपासाकुलितं मनः ॥' अत्र हि प्रवालशब्देन श्लेषो न भवति । अभङ्गपदो यथा—'तव तन्वि कुचावेतौ भूधराविव राजतः । अन्योन्यमण्डलाक्रान्तौ संधिहीनौ करार्थिनौ ॥' अत्रापि परिणाहान्तरहस्तशब्दैः श्लेषो न भवति । अर्थश्लेषे तु क्षिप्तो हस्तावलग्न इत्यादिषु प्रेरितः करव्यतिषक्त इत्यादिभिः पदैः श्लेषो न निवर्तते । संकरश्चायम् । यदुक्तम्—'मिश्रालंकाराणां तिलतण्डुलवच्च दुग्धजलवद्वा । व्यक्ताव्यक्तांशत्वात्संकर उत्पद्यते द्वेधा ॥' अत्रापि वाक्यार्थस्यैव प्राधान्यम्, संकीर्णस्य रसादेश्चाङ्गत्वम् । तेन रसवदलंकारस्थितिः पूर्ववदेव। यच्च प्राग्वीररसस्याङ्गत्वं प्रतिपादितं तद्विप्रलम्भकरुणावेक एव । आर्द्रशब्दो नवोद्भिन्नकिसलयादौ प्रसिद्धः । अत्र तु स्वार्थे स्खलद्गतित्वादमूर्तस्यापराधस्य नूतनत्वं लक्षयति । तेन चातिदुःसहत्वं व्यङ्ग्यम् । अत एवार्द्रापराधः कामी वह्निसमानत्वेन प्रतिपादितः । संतापातिशयजनकत्वात् । लक्षणा चेयं वृत्तिः । यदुक्तं काव्यप्रकाशे—'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् । अन्योऽर्थो लक्ष्यते यत्सा लक्षणा रोपिता क्रिया ॥' इयमेव च विदग्धवक्रोक्तिरिति स्पृहणीया कवीनाम् । वाचकलाक्षणिकव्यञ्जकानां शब्दानामभिधा लक्षणा व्यक्तिरिति तिस्रो वृत्तयः । अर्था अपि तावन्त एव वाच्यलक्ष्यव्यङ्ग्या इति । आददानोंऽशुकान्तमित्यत्र 'आङो दोऽनास्यविहरणे' इत्यात्मनेपदम् । तेन व्यादानं मुखप्रसारणे वर्तत इति दोषो नाशङ्कनीयः । गृह्णन्केशेष्वित्यत्र क्रियाया-

त्रिपुरयुवतय एव कर्मत्वेनावधार्याः, न तु केशाः। यथा—'गृहीत इव केशेषु–' इति। आलिङ्गन्योऽवधूत इत्यत्र चरणनिपतितोऽपि दृष्टिमात्रेणापि न संभाव्यते स कथमालिङ्गितुमिच्छतीत्यर्थः। कस्यांचित्कृते कृत्वा(?) प्रतिपादितमुन्मादितः कामातुरस्तस्यालिङ्गनमुचितमिति समाधानम्। अस्य कवेस्तावदन्यः कोऽपि प्रबन्धो न दृश्यते। तन्नूनमनयोः श्लोकयोः संकीर्णरसोपनिबन्धोऽनेन दर्शितः। अग्रे सर्वत्र शृङ्गाररसस्यैवोपनिबन्धनीयत्वात्। संकीर्णरसोपनिबन्धस्तु निकषो रसकवीनाम्। किं चामीषां श्लोकानां तावती रसोपकरणसामग्री यावती प्रबन्धेषु भवति। अत एवोक्तं भरतटीकाकारैः—'अमरुककवेरेकः श्लोकः प्रबन्धशतायते' इति॥

आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं
किंचिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसः शीकरैः[1]।
तन्व्या यत्सुरतान्ततान्तनयनं वक्त्रं रतिव्यत्यये
तत्त्वां पातु चिराय किं हरिहरस्कन्दादिभिर्दैवतैः[2]॥ ३॥

तत्कृशाङ्ग्याः पुरुषायितसंभोगमध्ये खेदालसलोचनं मुखं त्वामनेककालं त्रायताम्। किं वैकुण्ठशितिकण्ठषण्मुखप्रमुखैर्नाकिभिः। अपि तु न किमपि। नहि ते रसातिरेकोन्मत्तपुरुषायितसंरब्धविदग्धनितम्बिनीवदनचन्द्रविरहदहनदन्दह्यमानं रक्षितुं क्षमन्ते। एतेनानुरागविह्वला तरुणी तवाभिलाषोचितमानुगुण्येन संपादयत्वित्यर्थः। यदुक्तम्—"'पातु वो दयितामुखम्' इति सांमुख्ये।" किं कुर्वाणम्। चञ्चलां चूर्णकुन्तलमालां विलुप्तरचनाविशेषां दधानम्। पुनश्च कीदृशम्। कम्पमानकर्णाभरणम्। भूयः कथंभूतम्। स्तोकोत्पुंसिततिलकम्। कैः। सूक्ष्मसूक्ष्मैः श्रमसात्त्विकसंकीर्णैर्जलबिन्दुभिः। अनुशयाक्षेपोऽलंकारः। 'मुखेन्दौ तव सत्यस्मिन्नितरेण किमिन्दुना।' परमत्र वाक्यार्थस्य न प्राधान्यम्। किं तु रसस्यैव। नापि रसवदलंकारव्यवहारः। अपि तु रसोऽलंकार्यः। अलंकारश्च यथार्थ एव। 'नायकस्य संतताभ्यासात्परिश्रममुपलभ्य रागस्य चानुपशममनुमता च तेन तमवपात्य पुरुषायितेन साहायकं दद्यात्।' इति वात्स्यायनः। अत्र प्रगल्भा नायिका। 'यौवनान्धा स्मरोन्मत्ता प्रगल्भा दयिताङ्कके। विलीयमानेवानन्दाद्रतारम्भेऽप्यचेतना॥' परित्यक्तव्रीडा चेयम्। यदुक्तम्—'एवमन्येऽपि परित्यक्तव्रीडायन्त्रणा वैदग्ध्यप्रागल्भ्यप्रायाः प्रगल्भा व्यवहारा वेदितव्याः।' संभोगशृङ्गारो रसः। यदुक्तम्—'अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ। दर्शनस्पर्शनादीनि स संभोगो मुदान्वितः॥' शृङ्गारस्य सामान्यलक्षणमेतत्—'रम्यदेशकलाकालवेषभोगादिसेवनैः। प्रमोदात्मा रतिः सैव यूनोरन्योन्यरक्तयोः॥ प्रकृष्यमाणः शृङ्गारो मधुराङ्गविचेष्टितैः। अयोगो विप्रयोगश्च संयोगश्चेति स त्रिधा॥' रसस्यैवाथ सामान्यलक्षणमेतत्—'विभा-

१. 'स्वेदाम्भसां जालकैः' इति शृङ्गारदीपिका. २. 'हरिहरब्रह्मादिभिर्दैवतैः' इति शृङ्गारदीपिका.

वैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । आनीयमानः स्वाद्यत्वं स्थायिभावो रसः स्मृतः ॥' स च व्यङ्ग्यव्यञ्जकभावेन भाव्यभावकभेदेन वा चर्व्यमाणात्मकोऽसंलक्ष्यक्रमध्वनिसंज्ञितः । यदुक्तं ध्वनिकृता—'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥' अस्ति ध्वनिः । स चाविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्विविधः । 'अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् । अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥ असंलक्ष्यक्रमद्योत्यः क्रमेण द्योतितोऽपरः । विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥ रसभावतदाभासभावशान्त्यादिरक्रमः । ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः ॥ [[1]क्रमेण परिपाट्या यः स्वानुस्वानाभसंनिभः । शब्दार्थशक्तिमूलत्वाद्द्विधा सोऽपि व्यवस्थितः ॥' यदाह भरतः—'बहवोऽर्था विभाव्यन्ते वागर्थाभिनयाश्रयाः । अनेन यस्मात्तेनायं विभाव इति संस्मृतः ॥ वागङ्गसत्त्वाभिनयैरस्मादर्थो विभाव्यते । वागङ्गोपाङ्गसंयुक्तः सोऽनुभाव इति स्मृतः ॥' विविधमाभिमुख्येन रसं चरन्तीति व्यभिचारिणः । विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः स्थायी रत्यादिको भावो जनितोऽनुभावैः कटाक्षभ्रूभुजाक्षेपादिभिः सहकारिभिरुपचितो रसः । यदाह भरतः—'सर्वथा नास्त्येव हृदयहारिणः काव्यस्य स प्रकारो यत्र प्रतीयमानमर्थसंस्पर्शनसौभाग्यं तदिदं काव्यरहस्यं परम्' इति ॥]

परपुरुषप्रथमानुरागिणीं कामपि नायिकां रहः सहचरी प्राह—

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते ॥ ४ ॥

हे मुग्धे, कथय क एष पुण्यराशिर्भवत्या वीक्ष्यते । कदा । अद्य । कोऽभिप्रायः । अद्यप्राक्कोऽप्येवं त्वया नावलोकित इति । कैः । ईक्षणैः । भावभेदाद्बहुवचनम् । किं कुर्वद्भिरिव । उद्गिरद्भिरिव । किं तत् । हृदयनिहितं भावाकूतमभिलाषोचितं संकल्पविशेषम् । वयःसंधौ हि नायिकाश्चिरसंचितं लज्जासंवृतं बहुतरमभिलाषं हृदये धारयन्ति । यश्च येनाध्मातो भवति स तमुद्गिरतीति युक्तमेव । पुनः किंविशिष्टैः । अलसवलितैरसौष्ठवतिरश्चीनैः । मन्थरतिर्यग्भूतैरिति भावः । यथा कश्चित्केनापि लोभेन स्थानमत्यक्तुकाम इतरेण कार्यवशाद्बलात्कारेण प्रेर्य उत्थाप्यते न च प्राञ्जलो गच्छति तथेक्षणान्यपि हि स्फारोत्फुल्लानि भूत्वा प्रियदर्शनरसपानोद्युक्तानि साध्वसेन प्रसह्य साचीक्रियन्ते । पुनः किंभूतैः । प्रेमार्द्रार्द्रैः प्रीतिस्निग्धस्निग्धैः । यदाह भगवान्भरतः स्थायिभावदृष्टीनामुपक्रमे—'व्याकोशा स्नेहमधुरा स्मितपूर्वाभिभाषिणी । अपाङ्गभ्रूकृता दृष्टिः स्निग्धेयं रतिभावजा ॥' पुनः कीदृशैः । मुहुर्मुकुलीकृतैर्दर्शनसुखविशेषानुभवेन वारंवारमर्धनिमीलितैः । यथा क-

१. कोष्ठकान्तःस्थितः पाठः पुस्तकान्तरे नास्ति.

श्चिदभिलषितं वस्तु चिरप्राप्यमास्वाद्य नितान्तसौहित्येन मान्थ्यमाप्नोति । न तु निमीलितैरेव । निमेषपराङ्मुखैरित्यत्रानुपपद्यमानत्वात् । पुनस्तर्षातिरेकेण क्षणमभिमुखैः । न तु चिरम् । यतस्त्रपातरलैः । कोऽभिप्रायः । आभिमुख्ये प्रियस्यानुरागरूपचेष्टाविशेषात्(षं) किंचिदुपलभ्य लज्जालोलानि जातानीत्युभयानुरागः । नहि निरनुरागे पुंसि नायिकानां दृष्टयो लज्जामनुभवन्ति । पुनः किंभूतैः । दर्शनरसान्तरायकातर्येण निमेषपराङ्मुखैः । अनुभवैकवेद्याश्चैवंविधा दृष्टयः । यथास्मत्पूर्वजरूपवर्णने नाचिराजस्य—'सत्रासा इव सालसा इव लसद्गर्वा इवार्द्रा इव व्याजिह्मा इव लज्जिता इव परिश्रान्ता इवार्ता इव। त्वद्रूपे निपतन्ति कुत्र न जगद्देवप्रभो सुभ्रुवां वातावर्तननर्तितोत्पलदलद्रोणि द्रुहो दृष्टयः ॥' त्वयेति पदं न युष्मदर्थमात्रम्। किं त्वर्थान्तरसंक्रमितवाच्यम्। क एवंविधः पुण्यराशिरस्ति यस्त्वया जगदेकस्पृहणीयसौन्दर्यसंपदानेकाभ्युपायेनाशक्यापहारचित्तत्वान्निर्विकारया सस्पृहमवलोक्यते। अत एव सुकृतीति। मुग्धे इति पदस्य पुनरयमभिप्रायः—यदित्थं मुग्धा त्वं यदेवमभिमतं जनं स्वच्छन्दमवलोकयसि । एवं हि लोकैः सूक्ष्मेङ्गितज्ञैरुपलक्षिष्यसे । तस्मात्प्रच्छन्नमास्व अहमेव ते समीहितं संपादयिष्यामीति । अत्र कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नोऽर्थशक्तिव्यङ्ग्यः। यदेनमेवमवलोकयसि तत्त्वमस्मिन्ननुरक्तेत्यनुमानालंकारः प्रथमानुरागदर्शनात्मकसंभोगशृङ्गारस्याङ्गम् । यदुक्तम्—'अर्थशक्तेरलंकारो यत्राप्यन्यः प्रकाशते । अनुमानोपमाव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः ॥ ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः । रूपकादिरलंकारवर्गो याति यथार्थताम् ॥' यथा—'लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्स्मेरेऽधुना तव मुखे तरलायताक्षि । क्षोभं यदेति न मनागपि तेन मन्ये सुव्यक्तमेव जडराशिरयं पयोधिः ॥' अत्र मुखं चन्द्र एवेति रूपकम् । अनुमानस्योदाहरणं चैतत्—'वचनमुपचारगर्भं दूरादुद्गमनमासनं सकलम् । इदमद्य मयि यथा ते तथासि नूनं प्रिये कुपिता ॥' परमेष वाच्योऽलंकारः । अत एवोक्तम्—'शरीरकरणं येषां वाच्यत्वेन व्यवस्थितम् । तेऽलंकाराः परां छायां यान्ति ध्वन्यङ्गतां गताः ॥' नाट्यालंकारस्तु हावो नाम । 'हेवाकस्तु सशृङ्गारो भावोऽक्षिभ्रूविलासकृत् ।' इयं स्वस्त्री न भवति । नाप्यनुरक्तः पुरुषो वक्ता । कोऽयं सुकृतीत्यनुपपद्यमानत्वात् । दूती चात्र निसृष्टार्था । यदुक्तम्—'निसृष्टार्था परिमितार्था पत्रहारिणी स्वयंदूती भार्यादूती मूकदूती बालदूती चेति दूतीविशेषाः । नायकस्य नायिकायाश्च यथामनीषितमर्थमुपलभ्य स्वबुद्ध्या कार्यसंपादिनी निसृष्टार्था । सा प्रायेण संस्तुतभाषणयोर्नायकनायिकयोरप्रयुक्ता । संस्तुतसंभाषणयोरपि कौतुकादनुरूपाविमौ युक्तौ परस्परस्येति । प्रथमानुरागलक्षणं चैतत्—'तत्संमुखी तं न वीक्षते । प्रेक्षिता व्रीडां दर्शयेत् । रुच्यमात्मनोऽङ्गमन्यापदेशेन प्रकाशयति । प्रमत्तं प्रच्छन्नं नायकमतिक्रान्तं च वीक्षते । पृष्टा च किंचित्सस्मितमव्यक्ताक्षरमनवसितार्थं मन्दमन्मतोमुखी कथयति । तत्समीपे चिरं स्थानमभिनन्दति । दूरे स्थिता पश्यतु मामिति मन्यमाना परिजनं समुखविकारमाभाषते । तं च देशं न मुञ्चति । य-

त्किंचिद्दृष्ट्वा विहसितं करोति । तत्र कथामवस्थानार्थमनुबध्नाति । बालस्याङ्कगतस्य चुम्बनमालिङ्गनं च करोति । परिचारिकायास्तिलकं च रचयति । परिजनानवष्टभ्य तांस्तांश्च लीला दर्शयति । तन्मित्रेषु विश्वसिति । वचनं तेषां बहुमन्यते करोति च । तत्परिचारकैः सह प्रीतिं संकथां द्यूतं चारभते । स्वकर्मसु चैतान्प्रभविष्णुरिव नियुङ्क्ते । तेषु च नायकसंकथामन्यस्य कथयतस्त्ववहिता तां शृणोति । धात्रेयिकया प्रोत्साहिता नायकस्योदवसितं प्रविशति । तामन्तरा कृत्वा तेन सह द्यूतं क्रीडामालापं चायोजयितुमिच्छति । अनलंकृता दर्शनपथं परिहरति । कर्णपत्रमङ्गुलीयकं स्रजं वा तेन याचिता स धीरमिव गात्रादवतार्य सख्या हस्ते ददाति । तेन च दत्तं नित्यं धारयति । अन्यवरसंकथासु विषण्णा भवति । तद्विपक्षैश्च सह न संसृज्यत इति । 'दृष्ट्वैतान्भावसंयुक्तानाकारानिङ्गितानि च । कन्यायाः संप्रयोगार्थं तांस्तान्योगान्विचिन्तयेत् ॥" सा च मुग्धा नायिका । 'मुग्धा नववयःकामा रतौ वामा मृदुः क्रुधि ।' यथा—'दृष्टिः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा श्रोत्रे प्रेषयति प्रवर्तितसखीसंभोगवार्तास्वपि । पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग्यथा बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥' 'नर्मस्फोटस्तु भावानां सूचितालपरसो लवैः' इत्यनेन नर्मस्फोटः । यथा मालतीमाधवे मकरन्देन माधवस्य मालत्यामनुरागो लक्षितः—'गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं श्वसितमधिकं किं त्वेतत्स्यात्किमन्यदितोऽथवा । भ्रमति भुवने कंदर्पाज्ञा विकारि च यौवनं ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥' प्रथमानुरागश्लोकोऽप्येष क्रमौचित्यात्प्रथम लिखितः ॥

अङ्गुल्यग्रनखेन बाष्पसलिलं विक्षिप्य विक्षिप्य किं
तूष्णीं रोदिषि कोपने बहुतरं फूत्कृत्य रोदिष्यसि ।
यस्यास्ते पिशुनोपदेशवचनैर्मानेऽतिभूमिं गते
निर्विण्णोऽनुनयं प्रति प्रियतमो मध्यस्थतामेष्यति ॥ ९ ॥

कुपितनायिकाप्रसादने साम दानं भेदः प्रणतिरुपेक्षा रसान्तरं चेति षडुपायाः । तन्मध्येऽत्र भेद एव । इह हि नायकेनानुप्रविश्य शिक्षिता सखी वक्री वक्ष्यमाणप्रकारेण मानत्याजनाय नायिकां भीषयति । हे कोपने ईर्ष्यावति, अङ्गुल्यग्रनखेन बाष्पसलिलमपनीयापनीय लाघवलज्जातिशयेन मानाध्मातहृदया किं कण्ठार्धनिरुद्धगद्गदं रोदिषि । किंशब्दोऽल्पार्थः । न तु हेतुप्रेरणार्थः । मानरूपस्य हेतोः स्वयं ज्ञातत्वात् । आत्मीयचरितेन प्रचुरतरमुच्चैःशब्दं रोदिष्यसि । यस्मात्तव परगृहोपप्लावकानां पिशुनानां शिक्षाकर्णजापैर्माने मर्यादामतिक्रान्ते विफलप्रसादनोपायतया निर्वेदं यावत्प्राप्तो बहुमानं प्रति प्रियतम औदासीन्यं गमिष्यति । न त्वन्याङ्गनाम् । यस्मात्त्वं पिशुनोपदेशेषु क्षमासि । तस्यापराधगन्धोऽपि नास्तीति भावः । विक्षिप्य विक्षिप्येति वीप्सया बाष्पैरनवरतमयुक्तम् । अत्र प्रियतमोऽथ च निर्विण्ण इति नायिकायाः सविशेषं भयोत्पादनकारणमु-

क्तम् । न तु निर्वेदो व्यभिचारिभावः । तस्य शृङ्गारे निषिद्धत्वात् । शृङ्गारश्चात्र विप्रलम्भ एव । यदुक्तम्—'विप्रलम्भस्तु विश्लेषो रूढविस्रम्भयोर्द्विधा । मानप्रवासभेदेन मानो हि प्रणयेर्ष्ययोः ॥ तत्र प्रणयमानः स्यात्कोपवश्यतया द्वयोः । स्त्रीणामीर्ष्याकृतो मानः स्यादन्यासङ्गिनि प्रिये ॥ श्रुते चानुमिते दृष्टे श्रुतिस्तत्र सखीमुखात् । उत्स्वप्नायितभोगाङ्कगोत्रस्खलनकल्पितः ॥ त्रिधानुमानिको दृष्टः साक्षादिन्द्रियगोचरः ।' न च निर्विण्णशब्देनैव निर्वेदव्यभिचारभावप्रतीतिः । रसादीनां वाच्यत्वाभावात् । यदुक्तम्—'तथा हि । वाच्यत्वं तस्य शब्दनिवेदितत्वेन वा स्याद्विभावादिप्रतिपादनमुखेन वा । पूर्वस्मिन्पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतत्वप्रसङ्गः । न च सर्वत्र तेषां स्वशब्दनिवेद्यत्वम् । यत्रापि तदस्ति तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैषां प्रतीतिः । स्वशब्देन सा केवलमनूद्यते । न तु तत्कृतैव सा । विषयान्तरे तस्या अदर्शनात् । न हि केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिः । केवलं स्वाभिधानमात्रादप्रतीतिः । तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम् । न त्वभिधेयत्वं कथंचिदिति । एवंविधस्य रसध्वनेरुपनिबन्धक्षमा अमरुकप्राया एव महाकवयः । यदुक्तमभिनवगुप्तपादैः—"प्रतीयमानानुप्राणितकाव्यनिर्माणनिपुणप्रतिभाभाजनस्यैव महाकविव्यपदेशः । अन्यथा व्युत्पत्त्यभ्यासयोर्मध्ये प्रधानभूतया प्रतिभयापि कविरेवोच्यते । यदुक्तम्—'प्रज्ञा नवनवोल्लेखशालिनी प्रतिभा मता । तदनुप्राणनाजीवद्वर्णनानिपुणः कविः ॥" अलंकारश्चात्राप्यनुमानम् । यदुक्तम्—'यत्र बलीयः कारणमालोक्याभूतमेव भूतमिति । भावीति वा तथान्यत्कथ्येत तदन्यदनुमानम् ॥' यथा—'वहति यथा मलयमरुद्यथा च हरितीभवन्ति विपिनानि । प्रियसखि तथैव न चिरादेष्यति तव वल्लभो नूनम् ॥' परमसौ वाच्यः । वाच्यो व्यङ्ग्योऽप्यलंकारो रसस्याङ्गं भवतीत्याचार्याः । गुणस्तु प्रसाद एव । अत एवात्र यमकादयो निषिद्धाः । 'ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम् । शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥'

दत्तोऽस्याः प्रणयस्त्वयैव भवतैवेयं[1] चिरं लालिता
दैवादद्य किल त्वमेव कृतवानस्या नवं विप्रियम् ।
मन्युर्दुःसह एव[2] यात्युपशमं नो सान्त्ववादैः स्फुटं
हे निस्त्रिंश विमुक्तकण्ठकरुणं तावत्सखी रोदितु ॥ ६ ॥

अत्र नायकं प्रति मानिन्याः सखी वक्री । त्वयैवास्याः प्रणयो बहुमानो दत्तः । न पुनरियं मुग्धा बहुमानोत्पादनाय प्रत्यभियोक्तुं जानाति । अन्यच्च भवतैवेयं चिरं लालिता । न पुनरनया लालनकारणं किंचिदारब्धम् । अत एव दैवात्, न बुद्धिपूर्वकमद्य पुनस्त्वमस्या नवं व्यलीकं कृतवान् । यः खलु यस्याः स्वयं प्रणयं ददाति, स्वयं च

---

१. 'भवता सेयं' इति शृङ्गारदीपिका. २. 'एष' इति शृङ्गारदीपिका.

प्रेमातिरेकेण लालयति, न तस्याः प्रतिकूलं बुद्धिपूर्वकमारभते । तत्रापि किलशब्दप्रयोगः । कोऽर्थः । विप्रियं विप्रियमिति श्रूयते न हि भवान्वस्तुतो विप्रियं करोतीति ज्ञातापराधेऽपि नायके नायिकाया धृत्युत्पादनम् । एवं सति मन्युरेव मानजनितो दुःखविशेष एव दुःसहो न सामवादैरुपशमं याति । स्फुटमेतत् । तस्मात् हे निस्त्रिंश निरनुक्रोश, विमुक्त उच्चैःशब्दत्वात्कण्ठो यस्मिन्नसौ विमुक्तकण्ठः स चासौ करुणो यथा भवत्येवं तावत्सखी रोदितु । विमुक्तकण्ठविषये करुणा यत्रेति वा समासः । कोऽभिप्रायः । एवं रोदितुं यदि न प्राप्स्यति तदा मन्युनाध्मातमस्या हृदयं परिपाकोच्छ्वसितबीजविदीर्णदाडिमफलन्यायेन स्फुटिष्यति । तस्मादुच्चैःशब्दं रोदितुं देहि । पश्चाद्यथा जानासि तथा प्रसादय। अथ च यदि रुदित्वा जीवन्ती निर्वेक्ष्यति तदा प्रसादनं घटत इत्यसूया । विषमोऽलंकारः । यदुक्तम्—'कार्यस्य कारणस्य च यत्र विरोधः परस्परं गुणयोः । तद्वत्क्रिययोरथवा संजायेतेति तद्विषमम् । यथा—'आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् । विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥'

वारंवारमनुनीयमानामपि प्रौढेर्ष्यावशादशिथिलमानग्रन्थिं मनस्विनीं प्रति प्रधानसखी प्राह—

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥ ७ ॥

हे कठिने, बहिः प्राणदयित आस्ते । किं कुर्वन् । शून्यतासूचकचिन्तासंतानसमुचितचेष्टानुभावेनावनतो भूमिं लिखन् । अकृते प्रसादे द्वारं न मुञ्चतीत्यर्थः । तथा च वर्तन्तेऽनशनाः सख्यः । पुनः कीदृश्यः । निरन्तरबाष्पेणोच्छूने लोकोक्त्या उच्छ्वसिते नयने यासां ताः सततरुदितोच्छूननयनाः । अत्र नायिकाया अमङ्गलचिन्तनमेव हेतुः । किं च, पञ्जरशुकैरपि हसितपठितं परित्यक्तम् । तथापि तवावस्था चेयम् । निरुद्धबाष्पारुणितनेत्राध्मायमाननिःश्वासकदर्थ्यमानाधरस्फुरणादिमन्युचेष्टाभिरधृष्या तथैव तिष्ठसीत्यर्थः । तस्मान्मानं परित्यज । कदा । अधुनापि । अपिशब्दोऽध्याहार्यः । एतावतीमपि दशां दुर्जनोपहसनीयां प्राप्ता मानं न मुञ्चसीति प्रतीयमानत्वात् । यस्याः कृते सख्योऽपि पञ्जरशुका अथाहारं हसितपठितं च परित्यजन्ति सा त्वं कथमिव प्रियाय न प्रतिभाषसे । प्रियोऽपि यस्यास्तव प्राणदयितस्तदलमतिमानेनेति भावार्थः । अत एव कठिने इति संबोधनम् । अत्रार्थशक्त्युद्भवः सहोक्तिरलंकारः । नायिकायामाहारादिकं कुर्वत्यां सर्वेऽपि कुर्वन्ति, निवर्तमानायां च निवर्तन्त इति प्रतीतेः । सुसिद्धव्यङ्ग्यमात्रं चात्र कर्मलकाराभ्यामेवोद्भासितम् । अत्र न लिखतीति, अपि तु लिखन्निति प्रसादनपर्यन्तम् । आस्ते इति, न त्वासित इति । भूमिमिति, न भूमाविति । नहि बुद्धिपूर्वकं

किंचिल्लिखतीति तिङ्सुब्विभक्तीनां व्यङ्ग्यम्। हसितपठितमित्यत्र 'सर्वो हि द्वन्द्वो विभाषैकवद्भवति' इत्येकवचनम्। अत्र श्लोके त्वया तस्यापराधः सोढव्य इति कापि नोक्तम्। एतच्च वक्तुः कौशलम्। अपराधस्मारणे हि मानिनी प्रतिनायिकां स्मरति। ततश्चाधिकं कुप्यति। न चैवंविधः प्रसाधननिर्बन्धः पूर्वमस्यां केवलेन दाक्षिण्येन, अपि तु लोकोत्तरेण प्रेम्णा च। उक्तम्—'अक्खडइ पिआ हिअए अण्णं महिलाअणं रमन्तस्स। दिट्ठे सरिसम्मि गुणेऽसरिसम्मि गुणे अईसन्ते॥'

अनेकनायिकाकमनीयनायकव्यलीकविलीयमानविलासां वरवर्णिनीं विदग्धवयस्या वक्ति—

नार्यो मुग्धशठा हरन्ति रमणं तिष्ठन्ति नो वारिता-<br>
स्तत्किं ताम्यसि किं च रोदिषि मुधा तासां प्रियं मा कृथाः।<br>
कान्तः केलिरुचिर्युवा सहृदयस्तादृक्पतिः कातरे<br>
किं नो बर्बरकर्कशैः प्रियशतैराक्रम्य विक्रीयते॥ ८॥

अङ्गनास्तावद्बहिर्मुग्धा अन्तःशठास्तव रमणमपहरन्ति। निषिद्धा अपि न निवर्तन्ते। तत्किमिति मुधा ताम्यसि कस्माच्च रोदिषि। उभयमपि व्यर्थमित्यर्थः। एवं हि तासामभीप्सितं भवति। अत एव तासां प्रियं मा कृथा इति। तर्हि किं समयोचितमित्याह—कान्त इत्यादि। हे कातरे, किं न विक्रीयते। लक्षणया अनन्याधीनः किं न क्रियते। अनन्याधीनं हि वस्तु विक्रेतुं याति। कोऽसौ। पतिः। किंविशिष्टः। कान्तः सुन्दरः। क्रीडारसिकः। तरुणः सहृदयस्तादृगनिर्वचनीयचेतनः। किं कृत्वा। आक्रम्य। मुग्धशठाभ्य एव नायिकाभ्य आच्छिद्येत्यर्थः। कैः। प्रियशतैः। किंविशिष्टैः। बर्बरकर्कशैः सोल्लुण्ठनर्मनिरनुक्रोशैः। यदुक्तं गोवर्धनाचार्येण—'अन्यमुखे दुर्वादो यः प्रियवदने स एव परिहासः। इतरेन्धनजन्मा यो धूमः सोऽगुरुसमुद्भवो धूपः॥' अत एव केलिरुचिर्न चासंभावितो वश्यतां याति। यतस्तादृक्सहृदयः। 'दक्षिणोऽस्यां सहृदयः'। अपमानितश्च नार्या विरज्यते। स पुनरुत्कृष्ट इति मया स्वयं मानमुत्सृज्य संगमयितुं कथं युज्यते पतिरिति लाघवलज्जाभीरुत्वेन कातरे इति संबोधनम्। प्रशंसामनोज्ञानुनयप्रवर्तिका चेयमुक्तिः। यः कान्त इत्यादि गुणस्पृहणीयो वारिताभिरप्यङ्गनाभिरपह्रियते स त्वयापराधोचितनिग्रहस्थानीयेन बर्बरकार्कश्येन विक्रेयकोटिमानीयते। तस्माद्युवतिषु धन्या त्वमिति प्रतीयमानत्वात्परिवृत्तिरलंकारः। बर्बरकर्कशं दत्त्वा पतिरपह्रियतामिति पर्यवसितत्वात्। यदुक्तम्—'युगपद्दानादाने अन्योन्यं वस्तुनोः क्रियेते

१. 'आस्खलति प्रिया हृदये अन्यं महिलाजनं रममाणस्य। दृष्टे सदृशे गुणे असदृशे गुणे अदृश्यमाने॥' इति गाथासप्तशतीटीकायां (१।४४) छाया. २. 'बर्बरकर्कशैः परुषकठिनैः' इति शृङ्गारदीपिका.

यत् । क्वचिदुपचर्यैते वा प्रसिद्धितः सेति परिवृत्तिः ॥' यथा—'दत्त्वा दर्शनमेते मत्प्राणा वरतनु त्वया क्रीताः । किं त्वपहरसि मनो यद्ददासि रणरणकमेतदसत् ॥'

कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः ।
भूयोऽप्येवमिति स्खलन्मृदुगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान्रुदत्या हसन् ॥ ९ ॥

हन्यते क्रीडाकमलादिना ताड्यते । कोऽसौ । प्रेयान् । कीदृशः । धन्य एव । कया । दयितया । किं कुर्वत्या । रुदत्या । किं कुर्वन् । निह्नुतिपरो हसन् । नाहं तत्र गत इत्यादिवचनेन मानोपशमं लक्षयित्वा स्मयमानः । किं कृत्वा हन्यते । वासनिकेतनं नीत्वा । वासनिकेतनमेव किं कृत्वा नीतः । कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढम् । बाहुलतिकाया लोलत्वं सात्त्विको भावः । लतिकेत्यनेन दुःसहविरहक्लेशकार्श्यम् । अत एव बन्धनव्याजादौत्सुक्येन स्वयंग्रहाश्लेषः । क्व । पुरः । कासाम् । सखीनाम् । कदा । सायम् । यदि मानमेव धृत्वायतनीमपि रात्रिं प्रतिपालयिष्यामि तदा मा कदाचिदल(य)मन्यत्र वर्त्स्यतीत्यौत्सुक्यप्रतिपादकः सायंशब्दप्रयोगः । अत एव लज्जापरित्यागद्योतकं सखीनां पुरः इत्युक्तम् । पुनः किं कृत्वा । व्यलीकं संसूच्य । कथमिति । भूयोऽप्येवमिति । अर्थादिदानींतनोऽपराधः सोढ इति लभ्यते । भूयोऽप्येवं करिष्यसीति वाच्ये यदर्धोक्तं तत्र रोषसात्त्विकसंकीर्णसंभ्रमहेतुको वाक्स्तम्भः कारणम् । अत एव स्खलन्मृदुगिरा । अहो अन्यदेव किमपि दयितायाः प्रभुत्वं यत्समकालमेव निग्रहप्रसादौ । नहि बाहुलतिकाबन्धनं विहाय कश्चिदन्यः प्रसादोऽस्ति । अत्र कविर्वक्ता । ईर्ष्यामानात्मकविप्रलम्भारम्भः संभोगशृङ्गारपर्यवसितो रसः । अत्रालंकारो रसनिर्वाहणैकतानहृदयेन कविनात्यन्तं न निर्वाहं नीतः । यदाह ध्वनिकारः—'अत्र हि बाहुलतापाशेनेति रूपकमाक्षिप्तमनिर्व्यूढं च परं रसपुष्टये ।' अधीरा प्रगल्भा नायिका ॥

कश्चिद्देशान्तरगमनोपक्रमं विहाय यथापूर्वमवस्थितः केनचिदगमनकारणं पृष्टः प्राह—

याताः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि ।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥ १० ॥

भाविन्यावश्यके । निःसंदेह इति यावत् । मरणे उत्साहस्तया सूचितः । केन । हसितेन । अर्थाद्वैलक्ष्यजन्मना । किं कृत्वा । मां दृष्ट्वा । केन । चक्षुषा । न तु चक्षुर्भ्याम् ।

१. 'मोहनमन्दिरं' इति शृङ्गारदीपिका. २ 'स्वैरं' इति शृङ्गारदीपिका.

एष निर्दयहृदयो मामेवंविधां विहाय जिगमिषतीत्यसूयाजन्यावधीरणव्यञ्जकमत्रैकवचनमिति वचनध्वनिः। किंविशिष्टेन लज्जामन्थरतारकेण। अत्र मां त्यक्त्वा देशान्तरमसौ याति तदलमनुपादेयया मयेति लघुत्वसंभावनजन्या लज्जा। पुनः किंविशिष्टेन। निपतत्पीताश्रुणा निपतत्सत् पीतमपह्नुतमश्रु येन। प्राणैर्हि दुःखनिस्तारकामो न बाष्पमुत्सृजति। क्व सति। मयि सबाष्पे एवं कथयति सति। एवं किम्। हे सुन्दरि, याताः सन्तो भूयः किं न मिलन्ति। अपि तु मिलन्ति। तस्मात्त्वया मत्कृते चिन्ता न कार्या। यतो नितरां कृशासि। नह्येवंविधे कार्श्ये सचिन्तया वर्तितुं शक्यते। कार्श्ये तत्कालमापृच्छमानप्राणेश्वरविरहसंभावनासंभवमेव। प्रिये सबाष्पे स्वयं निपतत्पीताश्रुणा चक्षुषेत्यबाष्पा यदनुवृत्तिं परिजहार तत्र 'त्यक्तश्चात्मा का च लोकानुवृत्तिः' इति न्यायेन प्राणनिरपेक्षतैव कारणम्। अथवा अमङ्गलसूचनमश्रु प्रस्थानकाले न प्रकाश्यत इति प्रीत्यतिशयः। यथा—'अद्यापि तन्मनसि संप्रतिवर्तते मे रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या। जीवेति मङ्गलवचः परिहृत्य कोपात्कर्णे कृतं कनकपत्रमनालपन्त्या॥' भविष्यत्प्रवासात्मको विप्रलम्भः। उत्तरालंकारः। यदुक्तम्—'उत्तरवचनश्रवणादुन्नयनं यत्र पूर्ववचनानाम्। क्रियते तदुत्तरं स्यात्प्रश्नादप्युत्तरं यत्र॥' उपायाक्षेपश्च। यदुक्तम्—'दुष्करं जीवितोपायमुपन्यस्योपरुध्यते। पत्युः प्रस्थानमित्याहुरुपायाक्षेपमीदृशम्॥'

सखीभिर्मानं शिक्षितापि कृतप्रियसंगमा काचिन्नायिका ताः प्रति प्राह—

तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयो-
स्तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया।
पाणिभ्यां च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः
सख्यः किं करवाणि यान्ति शतधा यत्कञ्चुके संधयः॥ ११॥

हे सख्यः, किं करवाणि। अपि तु न किमपि। क्वविषये, यत्कञ्चुके संधयः शतधा यान्ति। दलन्तीत्यर्थः। यतो मानाभिव्यक्तये किं किं न मया कृतमित्याह—तस्य प्रियस्य वक्त्राभिमुखं सत्स्वमुखं विनमितं नम्रीकृतम्। दृष्टिः स्वपादयोर्न्यस्ता। अत्र तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयोरिति वाक्यद्वयेनापि दिदृक्षारसस्यैव निषेधो बोद्धव्यः। अभिमुखमुखतया तद्दर्शनाभिलाषिणी दृष्टिर्निवारितेत्यर्थः। न तु प्रथमवाक्ये विवक्षारसनिषेधः शङ्कनीयः। द्वितीयवाक्ये तद्दर्शनोत्सुका दृष्टिः कृता पादयोरिति तच्छब्दसहितपदस्यान्वेषणीयत्वात् तृतीयवाक्ये विवक्षारससूचकचिह्नतिरस्काराच्च। यद्वा मुखविनमनेनैव दृष्टेः पादगमने सिद्धे दृष्टिः कृता पादयोरिति यदुक्तं तेन प्रेयानपाङ्गेनापि नावलोकित इत्यर्थः। पादयोरित्यत्र संबन्धपदाभावेन सखीषु वचनच्छलं व्यज्यते। तत्पादयोर्दृष्टिः कृतेत्यत्रापि प्रतीतिसंभवात्। न केवलमेतदेव कृतम्, तद्वच-

१. 'तत्संलाप' इति शृङ्गारदीपिका. २. मत्कञ्चुलीसंधयः' इति शृङ्गारदीपिका.

नश्रवणकौतुकचपले श्रोत्रे च कर्णकण्डूयनव्यपदेशेनाकुञ्चिते । अपरं च स्वविवक्षारससूचकः कपोलयोः सरोमाञ्चः स्वेदोद्गमो हस्ताभ्यामाच्छादितः । अत्रेदं प्रकर्षेण(?) प्रियविषये प्रीतिप्रकर्ष एव । मानाय नायिकया प्रयत्ने क्रियमाणेऽप्यवयवानां प्रियसंगमोत्सुकत्वात् । अत्राप्युत्तर एवालंकारः । यथा—'भण मानमन्यथा मे मौनं भ्रुकुटिं विधातुमहमसहा । शक्नोमि तस्य पुरतः सखि न खलु पराङ्मुखी भवितुम् ॥' यत्नाक्षेपश्च । यदुक्तम्—'यत्नाक्षेपः स यत्नस्य कृतस्यानिष्टवस्तुनि । विपरीतफलोत्पत्तेरानर्थक्योपदर्शनात् ॥' यथा—'गच्छेति वक्तुमिच्छामि त्वत्प्रियं मत्प्रियैषिणी । निर्गच्छति मुखाद्वाणी मा गा इति करोमि किम् ॥'

प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेण[1] वा
किमुत सकले याते वाह्नि प्रिय त्वमिहैष्यसि ।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः[2] सबाष्पगलज्जलैः ॥ १२ ॥

वासरशतप्राप्यं देशं प्रियस्य जिगमिषोः प्रस्थानं मुग्धा निषेधति । कैः । अश्रुगलज्जलैरालापैः । कथम् । इत्यमुना प्रकारेण । हे प्रिय, प्रथमप्रहरावसाने त्वमिहागमिष्यसि । अथवा मध्याह्ने । उत स्वित्तस्मादपि परेण । तृतीयप्रहरेणेत्यर्थः । अत्र 'विवक्षातः कारकाणि भवन्ति' इति करणे तृतीया । यथा—'समेन धावति', 'विषमेण धावति' इत्यादौ । अपिशब्दस्यायमभिप्रायः—हे निष्करुण, मध्याह्नादप्यनन्तरं बहिः स्थातुं न युज्यत इति । अत्र सप्तम्यन्तानां पदानामन्तरेऽस्य पदस्य तृतीयान्तत्वेनोपक्रमभङ्गो न दोष एव । अर्थस्यान्यथा प्रतीतेः । पददोष एवास्य रसकवेः क्वाप्यस्तु । यदुक्तमुपाध्यायेन—'पदविह्वलता क्वापि स्पृहणीया भवति रसकवीन्द्राणाम् । घनजघनस्तनमण्डलभारालसकामिनीनां च ॥' अनेनापि प्रश्नेन यदा नायकोऽनभ्युपगमनसूचकं मौनमेव जग्राह, तदा नायिका पुनराह—अनन्तरमाहोस्वित्सर्वस्मिन्नेव दिनेऽतिक्रान्ते । अत्र मौग्ध्येन नर्मस्पर्शिन्यां विरहासहिष्णुतायां तात्पर्यम् । अत एव रात्रौ व्यतीतायामुदिते स्विदा गमिष्यतीति प्रयोगो न कृतः । विरहासहिष्णुतात्मकविप्रलम्भरसोत्कर्षहेतुर्जातिरलंकारः ॥

धीरं वारिधरस्य वारि किरतः श्रुत्वा निशीथे ध्वनिं
दीर्घोच्छ्वासमुदश्रुणा विरहिणीं बालां चिरं ध्यायता ।

१. 'परेऽथवा' इति शृङ्गारदीपिका. २. 'वाक्यैः सबाष्पझलज्झलैः' इति शृङ्गारदीपिकासंमतः पाठः. 'सबाष्पाणि च तानि झलज्झलानि च तैः । सबाष्पगद्गदैरित्यर्थः ।' इति तद्व्याख्यानम्.

अध्वन्येन विमुक्तकण्ठमखिलां रात्रिं तथा क्रन्दितं
ग्रामीणैः पुनरध्वगस्य वसतिर्ग्रामे निषिद्धा यथा ॥ १३ ॥

अर्धरात्रे निर्भरमम्भोधरस्य वर्षतः स्तनितमाकर्ण्य दीर्घोत्कटश्वाससमुत्कटबाष्पाम्बुना विरहिणीं मुग्धां विरहातिवाहनोपायेष्वनभिज्ञतया शङ्कनीयां गद्गदलोलमनिशं तदेकतानेन स्मरता पथिकेन समस्तामपि रात्रिमसंकोचितकण्ठस्वरं तथा रुदितं यथा ग्रामनिवासिभिर्भूयः पान्थस्य वासो ग्रामे निवारित इति । यदि मार्गो वहति तदा प्रचलति । यदि च लोको जाग्रद्भवति तदा वाञ्छिश्रणेनापि कियतीमपि विरहव्यथामतिवाहयति । निशीथे उभयस्याप्यभावादप्रतिविधानस्तपस्वी पान्थः शब्दान्तराभावात्केवलं नीरदनिनादमेव दुःश्रवं श्रुत्वा मुक्तश्वासोऽनुद्यमद्योतकमश्रुपातं विधाय क्रन्दितुमेवारब्धवान् । मेघवृष्टिर्दृष्टिप्रतिबन्धको बाष्पयोगश्चेत्यपरं गमननिरोधे कारणद्वयम् । वारिधरस्य, न तु वारिमुचः । वारिमुच इत्यनेन हि पदेन क्रमात्सलिलक्षयोऽपि संभाव्यते । न तु वारिधरस्येत्यनेन । अत एव सान्द्रसलिलसंपदाध्माततया धीरं वारि किरत इति । बालां पूर्वाननुभूतविरहव्यथाम् । अखिलत्वं क्रन्दनविषयायाः पश्चिमाया एव रात्रेः । न तु सकलरात्र्यभिप्रायेण । अर्धरात्र एव मेघध्वनेः श्रुतत्वात् । ग्रामीणाः प्रायो नायिकानुरागविदग्धवकोक्तिविरहवेदनानर्मभङ्गिष्वनभिज्ञा भवन्ति । परं तैरप्यध्वगस्य वसतिर्ग्रामे निषिद्धा । 'ग्रामाद्यखञौ' । 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' इति खस्थाने ईनादेशः । प्रवासात्मको विप्रलम्भः । कविर्वक्ता । अत्र न तथालंकारः कश्चिदुद्भावनायामवतरति । अस्मिन्काव्ये तथाविधा अलंकाराः प्रायशो न दृश्यन्ते । प्राणात्मकेन रसेनैव चमत्कारः परां कोटिमधिरोहति । यदुक्तमुपाध्यायेन—'स्वभावरमणीयानां पदार्थानामलंक्रिया । प्रत्युताच्छादकत्वेन न प्रकर्षाय जायते ॥'

कश्चित्तत्कालमागतो मानिनीं प्रत्याह—

कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः
शिरस्याज्ञा न्यस्ता प्रतिवचनवत्यानतिमति[1] ।
न दृष्टेः[2] शैथिल्यं मिलन इति चेतो दहति मे
निगूढान्तःकोपा[3] कठिनहृदये संवृतिरियम् ॥ १४ ॥

हे कठिनहृदये, इयं निगूढान्तःकोपा तवाकारगुप्तिर्मम चेतो दहति । कथं संवृतिः । इत्यमुना प्रकारेण । प्राय ईर्ष्यास्मितेनापि यन्माधुर्यं तत्किमपि नायिकाया रामणीयकं द्योतयति । अभ्युद्गमविधिरित्यत्र विधिशब्दस्यायमभिप्रायः—षडर्घ्या भवन्ति । आचार्यो ऋ-

१. प्रतिवचनमप्यालपसि च' इति शृङ्गारदीपिका. २. 'दृष्टिः शैथिल्यं भजत इति' इति शृङ्गारदीपिका. ३. 'कोपे' इति शृङ्गारदीपिका.

त्विग्विवाह्यो राजा प्रियः स्नातक इति । श्रौताचारवतामागमनोचितमेतत् । न पुनः प्रणयोचितम् । शिरस्याज्ञा न्यस्ता, न तु हृदये । सापि पाषाणभारवदतिदुर्वहा । अतिदुर्वहं वस्तु मस्तके धार्यते । अत एवानतिमतीति शिरोविशेषणम् । मिलने दृष्टेर्न शैथिल्यम् । मनसो मिलने तु शैथिल्यमेव । अथ च दृष्टेः शैथिल्यं न । अमुना प्रकारेण त्वया दूरादेव स्मितमधुरं यथा भवत्येवमभ्युत्थानं कृतम् । इदं क्रियतामित्यादिकार्यनियोग आज्ञा । सापि प्रियवचनवती मे आनम्रशिरसि प्रतीष्टा । अन्यच्च तव दृष्टेर्मम दृष्ट्या सह मिलने शैथिल्यं नास्तीत्येतावत्संवृतिस्वरूपम् दूरादेवाभ्युद्गमः कृतो न तु प्रत्यासत्तौ । शरीरसंपर्कसंभावनायामप्यसहनत्वात् । यः पूर्वं मम तथा वशीभूत आसीत्तस्यैव प्रियतमस्यान्याङ्गनासङ्गिनोऽप्यनुवृत्तिं करोमि प्राणांश्च धारयामीत्यात्मन्यसंभावना । अभ्युपगमोऽपि तस्या नास्ति, अपि तु साटोपत्वम् । तवौदासीन्यमात्रेऽपि मम चेतो दह्यते तत्का नामान्याङ्गनासङ्गसंभावना । तस्मात्पिशुनविजृम्भितमेतत् । यच्च मम हृदये दह्यमानेऽपि तव हृदयस्य काठिन्यं तत्र निगूढान्तःकोपता हेतुः । अन्तर्निखातकर्कशपदार्थे हि कोमलमपि कठिनं भवति । मिलन इत्यत्र यद्यपि गुणप्रतिषेधो न प्राप्नोति तथापि रूढिरस्ति । अनुमानालंकारः । यथा—'वचनमुपचारगर्भे–' इत्यादि प्राग्दर्शितम् । औदार्यं प्रदर्श्य सदे(?)त्यनेनौदार्यं नाव्यालंकारः । यथा—'अइदुक्खिआएँ[1] दिअहं सकलं काऊण गेहवावारम् । गरुए वि मण्णुदुःक्खे भरिमो पाअन्तसुत्तस्स ॥'

काचित्प्रणयकलहान्तरिता सहचरीं प्रत्याह—

> कथमपि सखि क्रीडाकोपाद्व्रजेति मयोदिते
> कठिनहृदयः शय्यां[2] त्यक्त्वा बलाद्गत एव सः ।
> इति सरभसं[3] ध्वस्तप्रेम्णि व्यपेतघृणे स्पृहां
> पुनरपि हतव्रीडं चेतः करोति करोमि किम् ॥ १९ ॥

हे सखि, किं करोमि । अपि तु न किमपि । यतः पुनरपि मे निस्त्रपमन्तःकरणं तस्मिन्प्रियतमे स्पृहां करोति । किंविशिष्टे । यतो व्यपेतघृणे निःशङ्के । पुनरपि कीदृशे । सरभसमपर्यालोचितमपास्तप्रेम्णि । तस्मादिति कस्मात् । यतः स कर्कशहृदयो बलात्कारेण गत एव । क्व सति । कथमपि प्रणयरोषाद्गच्छेति मयोक्ते सति । कथमपिशब्दस्यायमभिप्रायः—क्रीडयापि कोपं न करोमि । क्रीडाकोपेऽपि मा कदाचिदसौ वैमनस्यं गच्छेत । शय्यां त्यक्त्वा गतः, न तु माम् । उपनतेऽप्यमङ्गले न कश्चिदात्मनः स्वयममङ्गलं शंसतीत्याशयः । बलाद्गतः सोऽपि किं स्वभावेन गन्तुं शक्नोति । अत एव सरभसं ध्वस्तप्रेम्णि । व्यपेतघृणे इयं मया विना न जीविष्यतीति जानत्यप्युपेक्षितवति । किं करोमि । इतिकर्तव्यतामो-

---

१. 'अतिदुःखिताया दिवसं सकलं कृत्वा गेहव्यापारम् । गुरुकेऽपि मन्युदुःखे स्मरामः पादान्तसुप्तस्य ॥' इति च्छाया. २. 'त्यक्त्वा शय्यां' इति शृङ्गारदीपिका. ३. 'सरभसध्वस्त–' इति शृङ्गारदीपिका.

ह्वेनोपायमपि न जानामीत्यर्थः। अत्रेदं विमृश्यते—ननु य एष क्रीडाकोपमात्रेण शय्योत्थायं गत एव स किं ग्राम्यः, उतान्यासक्तः। न तावदाद्यः। शृङ्गारोपनिबद्धस्याग्राम्यत्वात्। नापि द्वितीयः। सापराधस्य विटस्यापि वा नायिकायाः सुमहत्यपि कोपे प्रसादनैकपरत्वात्। न च सापराधे प्रेयसि क्रीडाकोपो भवति भामिनीनाम्, अपि तु वास्तव एव। तस्मादयं क्रीडाकोपावमानितः सन्नुत्थाय कुड्यान्तरितो भूत्वा प्रियतमायास्तत्कालमदर्शनमात्रेण प्राणपरिहारं यावदध्यवसितायाः प्रेमसर्वस्वनिधानमुद्राभङ्गकारिभिरभिमानवाक्यैः श्रवणेन्द्रियं चरितार्थयति। प्रणयमानात्मको विप्रलम्भः। 'कलहान्तरितामर्षाद्विधूतेऽनुशयार्तियुक्' इति कलहान्तरिता नायिका॥

दंपत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसंनिधौ निगदतः श्रुत्वैव तारं[1] वधूः।
कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्च्वाः[2] पुरो
व्रीडार्ता प्रकरोति[3] दाडिमफलव्याजेन वाग्बन्धनम्॥ १६॥

त्रपापर्याकुला वधूः श्रवणालम्बितशोणमणिशकलं विन्यस्य चञ्च्वाः पुरः प्रणिधाय दाडिमफलरूपेण च्छद्मना वाग्बन्धनं प्रयत्नेन करोति। किं कृत्वा। श्रुत्वैव। किं तत्। वचः। कस्य। अर्थवशाद्विभक्तिविपरिणामेन शुकस्यैव। किं कुर्वतः। प्रभाते श्वशुरश्वश्रूप्रभृतीनां प्रत्यासत्तावुच्चैःस्वरं निगदतः। तत्किम्। यद्रात्रौ स्त्रीपुंसयोः किंचिदेकान्तोचितं वाच्यावाच्यं जल्पतोः संबन्धि तेनैव मन्दिरशुकेन श्रुतम्। दंपत्योर्मध्ये वधूरिति संबन्धः। तयोरेतावती लज्जा यन्निशि दंपत्योर्जल्पतोः दिवा पुनरौदासीन्येन दंपती इति न ज्ञायेते। न च परस्परं जल्पतोः। प्रातः श्रुत्वेत्यनेन सुरतालापैर्जागरितसकलरात्रिरपि प्रथमप्रबुद्धेयं नायिका। कुलाङ्गना हि चरमं शायिन्यः प्रथमं प्रबोधिन्यश्च भवन्तीति। एवंविधैरालापैस्तु रजनिरज्ञातैव प्रयाति। यथोत्तरचरिते—'किमपि किमपि मन्दं मन्दमासक्तियोगादविचलितकपोलं जल्पतोरक्रमेण। अशिथिलपरिरम्भव्यापृतैकैकदोष्णोरविदितगतयामा रात्रिरेव व्यरंसीत्॥' श्रुत्वैवेत्येवशब्दस्याव्ययानामनेकार्थत्वेनाविलम्बोऽर्थः। केचित् 'तस्यैव तारं वधूः' इति पठन्ति। तेन चान्वयः सुखावहो न भवति। यदुक्तम्—'वाक्यं यत्राभिमतं परस्परं सव्यपेक्षवृत्तीनाम्। समुदायः शब्दानामेकपराणामनाकाङ्क्षः॥ अन्यूनाधिकवाचकसक्रमपुष्टार्थशब्दचारुपदम्। क्षोदक्षममक्षुण्णं सुमतिर्वाक्यं प्रयुञ्जीत॥' उक्तं हि—'अभिहितान्वयवादिनां मते सामान्यरूपाणां पदार्थानामाकाङ्क्षायोग्यतासंनिधिवशात्परस्परसंसर्गे पदार्थव्यतिरिक्तो वाक्यार्थः प्रकाशते' इति। अखण्डवाक्यवादिनां मते तु वाक्योपदेशः कर्तुं न युज्यते। व्यङ्ग्यव्यञ्जकभावाभावात्। यदुक्तम्—'सोऽयमिषोरिव दीर्घदीर्घो व्यापारः शब्दस्य' इति। शब्दश्रुतेरन-

---

१. 'तस्यातिमात्रं वधूः' इति शृङ्गारदीपिका. २. 'चञ्चूपुटे' इति शृङ्गारदीपिका. ३. 'विदधाति' इति शृङ्गारदीपिका.

न्तरं यावानर्थो गम्यते तावता शब्दस्याभिधैव व्यापार इति चेत्, प्रष्टव्या यूयम् 'ब्राह्मण, पुत्रस्ते जातः कन्या ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि [न] वाच्यत्वम्। कस्माच्च लक्षणा। लक्षणीयेऽप्यर्थे दीर्घदीर्घाभिधाव्यापारेणैव प्रतीतिसिद्धेः। जाया च पतिश्च दंपती। उत्तरपदाधिकारे जायाशब्दस्य जंभावो दंभावश्च निपात्यते। दुर्गसिंहाचार्यस्तु जंदंशब्दौ जायासमानार्थाविति मन्यते। शुकादयस्तु शृङ्गारिणां भवनेषु भवन्त्येव। यदुक्तम्—'वृक्षायुर्वेदयोगमेषकुक्कुटलावकयुद्धविधिशुकशारिकाप्रलापनम्' इत्यादि। दाडिमबीजमेव पद्मरागसदृशं भवति न तु फलमित्याशङ्क्य यदि भवति तदा 'दाडिममृषाबीजेन' इति युक्तः पाठः। वाग्बन्धनमित्यत्र कारणे कार्योपचारः। तेन मुखबन्धनमित्यर्थः। अन्योऽपि यः परमर्मोद्घाटनं करोति तस्य बन्धनं विधीयत इत्युक्तिलेशः। कविर्वक्ता। लज्जया व्यभिचारिभावेन पुष्टः संभोगशृङ्गारः। पद्मरागशकले दाडिमबीजभ्रान्तिरिति भ्रान्तिमानलंकारः। यदुक्तम्—'वस्तुविशेषं पश्यन्नवगच्छेदन्यमेव तत्सदृशम्। निःसंदेहं यस्मिन्प्रतिपत्ता भ्रान्तिमान्स इति॥' यथा—'पालयति त्वयि वसुधां विविधाध्वरधूमशालिनीः ककुभः। पश्यन्तो दूयन्ते घनसमयाशङ्किनो हंसाः॥'

काचिन्मानिनी मन्यूपतापेन नायकं प्रति सोल्लुण्ठमभिधत्ते—

अज्ञानेन पराङ्मुखीं परिभवादाश्लिष्य मां दुःखितां
किं लब्धं शठ दुर्नयेन नयता सौभाग्यमेतां दशाम्।
पश्यैतद्दयिताकुचव्यतिकरोन्मृष्टाङ्गरागारुणं[1]
वक्षस्ते मलतैलपङ्कशबलैर्वेणीपदैरङ्कितम्[2]॥ १७॥

हे कितव, त्वया किमुपार्जितम्, अपि तु न किमपि। किं कुर्वता। मदालिङ्गनरूपेण दुर्नयेनात्मनः सौभाग्यमेतामयोग्यामवस्थां प्रापयता। किं कृत्वा। अन्याङ्गनासंगमलक्षणात्परिभवाद्दुःखितामनभिमुखीमाश्लिष्य। केन। अज्ञानेन। कोऽर्थः। यस्यां त्वमनुरक्तस्तद्भ्रमेण। कीदृशी सौभाग्यदुरवस्थेत्याह—पश्यैतदित्यादि। वर्तते। किं तत्। तव वक्षः। कीदृशम्। मलतैलपङ्कशबलैर्वेणीपदैरङ्कितं लाञ्छितम्। किंविशिष्टं पूर्वमासीत्। दयिताकुचव्यतिकरोन्मृष्टाङ्गरागारुणम्। वल्लभास्तनयोर्व्यतिकरेण संबन्धेन प्रोञ्छितो योऽङ्गरागस्तेनारुणम्। अत्र दयिताया आज्ञाभङ्गो दुर्नयशब्दार्थः। तेन च तया त्वं निग्राह्योऽसीति व्यङ्ग्यम्। पश्येतिक्रियाया वाक्यार्थ एव कर्म, न तु वक्षः। नहि वक्षस्ते पश्येत्युक्तिर्भवति अपि तु वक्षस्त्वमिति। इयं च नायिका ऋतुस्नानोन्मुखी। अन्यथा तैलपङ्कादिप्रयोगः शृङ्गारोपनिबन्धे तत्रभवतां छान्दसानामेव सुकरः। तस्मिन्नेवावसरे नायकेन नूनमन्याङ्गनासङ्गः कृतः। ईर्ष्यामानात्मको विप्रलम्भः। आलिङ्गनेन स्पर्शनात्मकः संभोगोऽपि किं न स्यादिति चेत्, न। परस्परानुकूल्याभावात्। न चैवं प्रतीतिरपि नास्तीति वाच्यम्। पराङ्मुखत्वेऽपि नान्योऽयमिति प्रतीतेः। यथोत्तरचरिते

१. 'व्यतिकरासक्ताङ्ग' इति शृङ्गारदीपिका. २. 'मम तैलपङ्कमलिनैः' इति शृङ्गारदीपिका.

सीतायां वनं प्रेषितायां शम्बूकं हत्वा प्रतिनिवर्तमानो यानि दयितया सह पूर्वं निषेवितानि गोदावरीपरिसरस्थानानि तानि दृष्ट्वा मूर्छितो भागीरथीप्रभावाददृश्यसीताकरारविन्दस्पर्शमासाद्य साह्लादोच्छ्वासो रामः—'हन्त भोः, किमेतत्। आश्च्योतनं नु हरिचन्दनपल्लवानां निष्पीडितेन्दुकरकन्दलजो नु सेकः। आतप्तजीविततरोः परितर्पणो मे संजीवनौषधिरसो नु हृदि प्रसिक्तः॥ स्पर्शः पुरा परिचितो नियतं स एष संजीवनश्च मनसः परिमोहनश्च। संतापजं सपदि यः प्रतिहृत्य मोहमानन्दनेन जडतां पुनरातनोति॥' उक्तं च—'अभ्यासादभिमानाच्च तथा संप्रत्ययादपि। विषयेभ्यश्च तत्त्वज्ञा विदुः प्रीतिं चतुर्विधाम्॥ प्रीतिः साभ्यासिकी ज्ञेया मृगयादिषु कर्मसु। अनभ्यस्तेष्वपि पुरा कर्मस्वविषयात्मिका॥ संकल्पाज्जायते प्रीतिर्या सा स्यादाभिमानिकी। नान्योऽयमिति यत्र स्यात्प्रतीतिः प्रीतिकारणम्॥ तत्त्वज्ञैः कथ्यते सापि प्रीतिः संप्रत्ययात्मिका। प्रत्यक्षा लोकतः सिद्धा स्यात्प्रीतिर्विषयात्मिका। प्रधानफलभूता सा तदर्थाश्चेतरा अपि॥'

एकत्रासनसंस्थितिः[1] परिहृता प्रत्युद्गमाद्दूरत-
स्ताम्बूलाहरणच्छलेन[2] रभसाश्लेषोऽपि संविघ्नितः।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः॥ १८॥

गृहागतं प्रियं प्रति विदग्धयानुवृत्तिरूपादुपचारादेव कोपश्चरितार्थतां नीतः। यतो दूरादेवाभ्युत्थानादेकस्मिन्पीठे उपवेशनं त्यक्तम्। ताम्बूलस्य वीटिकाया आहरणं तद्व्याजेन रभसालिङ्गनमपि सम्यग्विघ्नितम्। सखीप्रभृतिपरिजनं सविधे नियुञ्जानया वाङ्मिश्रणमपि न कृतम्। मीलितमलंकारः। यदुक्तम्—'तन्मीलितमिति यस्मिन्समानचिह्नेन कोपहर्षादि। अपरेण तिरस्क्रियते नित्येनागन्तुना वापि॥' यथा—'मदिरामदभरपाटलकपोलतललोचनेषु वदनेषु। कोपो मनस्विनीनां न लक्ष्यते कामिभिः प्रभवन्॥' सावहित्थादरा नायिका प्रगल्भा॥

दृष्ट्वैकासनसंस्थिते[3] प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य[4] विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकंधरः[5] सपुलकः[6] प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति॥ १९॥

एकासनोपविष्टे द्वे प्रियतमे दृष्ट्वा पृष्ठदेशं सप्रयत्नमागत्यैकस्या लोचने क्रीडानुबन्धव्याजेन मुद्रयित्वा दक्षिणो नायक इतरां चुम्बति। कथंभूतः सन्। यथा द्वितीयो न

---

१. 'संगतिः' इति शृङ्गारदीपिका. २. 'ताम्बूलानयनच्छलेन' इति शृङ्गारदीपिका. ३. 'संगते' इति शृङ्गारदीपिका. ४. 'पिधाय' इति शृङ्गारदीपिका. ५. 'तिर्यग्वक्रित' इति शृङ्गारदीपिका. ६. 'सपुलकप्रेमो' इति शृङ्गारदीपिका.

जानातीति मनाङ्नमितग्रीवः । पुनः कीदृशः । सरोमाञ्चः । तां किंविशिष्टाम् । प्रीत्युल्लसच्चेतसम् । पुनः कीदृशीम् । मत्कारणेनेयं वञ्चितेत्यन्तर्निभृतहासलसद्गण्डमण्डलाम् । यस्या नेत्रे मुद्रिते सा ज्येष्ठा । तस्यामपि नायकस्य प्रीतिरस्त्येव । यतः—'दक्षिणोऽस्यां सहृदयः' इति वचनात्पूर्वस्यामपि नायिकायां हृदयेन सह व्यवहरति । तस्माद्विहितक्रीडानुबन्धच्छल इति योऽयं छलशब्दः स चुम्बितनायिकापेक्षयैव नायके न पुनर्वास्तवेनैव क्रीडानुबन्धेन प्रथमा प्रथममेव संभाविता, द्वितीयस्यां च नेत्रमुद्रणाच्चुम्बनात्मकस्य संभावनाप्रकारस्य वैशिष्ट्यात्सपुलकत्वाच्च विशिष्टा प्रीतिः । नूतननायिकायां च विशिष्टप्रीतिप्रतिपादनादेव पूर्वस्यां दाक्षिण्यमात्रादुपचार एवेत्येतेन। द्वयोरपि नायिकयोः प्रियतमे इत्युक्तत्वात् । विशेषोऽलंकारः । यदुक्तम्—'यत्रान्यत्कुर्वाणो युगपत्कर्मान्तरं च कुर्वीत । कर्तुमशक्यं कर्ता विज्ञेयोऽसौ विशेषोऽन्यः ॥'

चरणपतनप्रत्याख्यानात्[1]प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्ते[2] रुषा परुषीकृते ।
व्रजति रमणे निःश्वस्योच्चैः स्तनार्पित[3]हस्तया
नयनसलिलच्छन्ना[4] दृष्टिः सखीषु निपातिता ॥ २० ॥

कयाचित्कलहान्तरितया, सखीषु दृष्टिर्न्यस्ता । कीदृशी । नयनसलिलच्छन्ना । किंविशिष्टया । उच्चैर्निःश्वस्य स्तनविनिहितहस्तया । क सति । दयिते गच्छति सति । कुतो हेतोर्गच्छतीत्याह—चरणपतनस्य यन्निराकरणं तेनालब्धप्रसादे । पुनः कीदृशे । निगूढशठचरितेत्यभिहिते । पुनरपि किंविशिष्टे । क्रुधा कर्कशतां यावन्नीते । 'अपमानितश्च नार्या विरज्यते यः स उत्कृष्टः' इति वचनादन्यत्र गच्छतो नायकस्य दक्षिणत्वम् । स्तनार्पितहस्तयेति हृदयसंतापसूचकश्चेष्टाविशेषः । नयनसलिलच्छन्नेति सखीष्वेव प्रतिविधानसूचिका दीना दृष्टिः । यदुक्तम्—'अर्धस्रस्तोत्तरपुटा छन्नतारा जलाविला । मन्दसंचारिणी दृष्टिर्दीनेति परिकीर्त्यते ॥

काञ्च्या गाढतरावनद्ध[5]वसनप्रान्ता किमर्थं पुनर्मुग्धाक्षी स्वपितीति तत्परिजनं स्वैरं प्रिये पृच्छति ।
मातः स्वप्तुमपीह वारयति[6] मामित्याहितक्रोधया
पर्यस्य स्वपनच्छलेन शयने दत्तोऽवकाशस्तया ॥ २१ ॥

तया नायिकया शयने शय्यायामवकाशो दत्तः । अर्थात्प्रियस्य । किं कृत्वा । परिवृत्य । केन । स्वपनच्छलेन । आहितक्रोधयेव आहितः क्रोधो यया । कथमिति । हे मातः,

---

१. 'प्रत्याख्यानात्' इति शृङ्गारदीपिका. २. 'उक्त्वा' इति शृङ्गारदीपिका. ३. 'स्तनाहित' इति शृङ्गारदीपिका. ४. 'क्लिन्ना' इति शृङ्गारदीपिका. ५. 'अवबद्ध' इति शृङ्गारदीपिका. ६. 'सुप्तिमपीह लुम्पति ममेत्यारोपित' इति शृङ्गारदीपिका.

निद्रातुमप्यत्र स्थाने निषेधति । क्व सति । प्रिये पर्यनुयुञ्जाने सति । कम् । प्रियायाः परिजनम् । कथम् । स्वैरम् । 'मन्दस्वच्छन्दयोः स्वैरम्' इति वचनान्मन्थरमित्यर्थः । द्विकर्मकत्वेन पुनरिति पृच्छति सति । इतीति किम् । किं पुनर्विह्वलाक्षी कटिसूत्रेण निबिडनियमितसिचयान्ता निद्रायते । अत्र गाढतरनितम्बवस्त्राञ्चलवहनाभ्यसूयागर्भो रम्भास्तम्भाभिरामोरुकाण्डस्पर्शलौल्यपर्यवसायी भणितेरुल्लेखः । इयं च साङ्गभङ्गैरलसचेष्टाविशेषैर्लम्बितपक्ष्मलोचनाञ्चला मदनमदविक्लवतामनुभवन्त्यासीत् । न पुनर्वास्तवीं निद्राम् । यदि वा मृषा सुप्तिरियम् । यदुक्तम्—'सापि भावजिज्ञासार्थिनी नायकस्यागमनकाले मृषा सुप्ता स्यात् ।' अत एव मन्दमपि प्रियस्य प्रश्नवचनमश्रौषीत् । मातः स्वप्तुमपीति मातःशब्दः स्त्रीणामुक्तिमात्रे । सूक्ष्मोऽलंकारः । यदुक्तम्—'इङ्गिताकारलक्ष्योऽर्थः सौक्ष्म्यात्सूक्ष्म इति स्मृतः ।' यथा—'कदा नौ संगमो भावीत्याकीर्णे वक्तुमक्षमम् । अवेत्य कान्तमबला लीलापद्मं न्यमीलयत् ॥' काञ्च्या गाढतरेत्यादि संभोगनर्म । यथा—'सालोए व्विअ सूरे घरिणी घरसामिअस्स घेत्तूण । णेच्छन्तस्स वि पाए धुवइ हसन्ती हसन्तस्स ॥' एते च नर्मभेदाः । वैदग्ध्यक्रीडितं नर्म प्रियोपच्छन्दनात्मकम् । हासेनैव सश्रृङ्गारभयेन विहितं त्रिधा ॥ आत्मोपक्षेपसंभोगमानैः श्रृङ्गार्यपि त्रिधा । शुद्धमङ्गं भयं द्वेधा त्रेधा वाग्वेषचेष्टितैः ॥ सर्वं सहासमित्येवं नर्माष्टादशधोदितम् ।' मातः स्वप्तुमपीत्यादिना आत्मोपक्षेपनर्म । यथा—'मध्याह्नं गमय त्यज श्रमजलं स्थित्वा पयः पीयतां मा शून्येति विमुञ्च पान्थविवशः शीतः प्रपामण्डपः । तामेव स्मर घस्मरस्मरशरत्रस्तां निजप्रेयसीं त्वच्चित्तं तु न रञ्जयन्ति पथिक प्रायः प्रपापालिकाः ॥'

एकस्मिञ्शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपरा्ङ्मुखं ग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणा-
न्मा भून्म्लान इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ २२ ॥

कयाचिन्मुग्धया प्रियतमस्तत्कालमेव पराङ्मुखं यथा भवत्येवमवज्ञातः । किं कुर्वन्नपि । चाटूनि कुर्वन्नपि लालनवाक्यानि ब्रुवाणोऽपि । तथाभूतोऽपि कस्मादवधीरितः । आवेगात् । तस्य लक्षणम्—'आवेगः संभ्रमोऽस्मिन्नभिसरजनिते शस्त्रनागाभियोगो त्रासात्पांसुपदिग्धस्त्वरितपदगतिर्वर्षजे पिण्डिताङ्गः । उत्पातात्स्रस्तताङ्गेष्वहितहितकृते शोकहर्षानुभावा वह्नेर्धूमाकुलाक्षः करिजमनुभयस्तम्भकम्पापसाराः ॥' अत्र सपत्नीनामग्रहणमेवाहितम् तत्कृत आवेगः । किंविशिष्टया । ग्लपितया । क्व सति । एकस्यां शय्यायां सपत्नीनामोच्चारणे सति एकस्मिञ्शयने प्रस्तुतायां रतिप्रवृत्तौ विपक्षस्त्रीनामग्रह इत्येव

१. 'सालोक एव सूर्ये गृहिणी गृहस्वामिनो गृहीत्वा । अनिच्छतोऽपि पादौ धावति हसन्ती हसतः ॥' इति च्छाया. २. 'पराङ्मुखग्लपितया' इति श्रृङ्गारदीपिका. ३. 'तत्क्षणं' इति श्रृङ्गारदीपिका. ४. 'सुप्त' इति श्रृङ्गारदीपिका.

न, अपि तु विपक्षरमणीनामग्रहे भूताविष्टस्य ग्रह इव ग्रहे । अत एव नायिकाया आवेगः । मुग्धाश्च स्तोकेऽप्युपाये कोपं परिहरन्तीति । न केवलमवधीरितः, अवधीरणहेतोस्तूष्णीं स्थितः सन्मा भून्म्लान इवेति द्रुतमेव वेगविवर्तितकंधरं यथा भवत्येवं पुनरवलोकितः । अत्रौत्सुक्यभावस्योदयः । यदुक्तम्—'भावस्य शान्तिरुदयः संधिः शबलता तथा ।' उपायश्चात्र चाटूनि कुर्वन्नपीत्यनेन साम । यदुक्तम्—'नरः कलासु कुशलो वाचालश्चाटुकारकः । असंस्तुतोऽपि नारीणां चित्तमाश्वेव विन्दति ॥' यथास्मत्पूर्वजस्य वाक्पतिराजापरनाम्नो मुञ्जदेवस्य—'दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि नास्मि दूये । उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रैर्यत्खिद्यते तव पदं ननु सा व्यथा मे ॥' तूष्णीमित्यनेनोपेक्षामात्रं च । म्लान इवेत्यत्रेवकारेण म्लानसदृशोऽपि मा भूदिति प्रीत्यतिशयः । ईर्ष्यामानात्मकविप्रलम्भपूर्वको दर्शनात्मा संभोगश्शृङ्गारः । ,गूढविप्रियकृच्छठः' इत्यनेन शठो नायकः । यथा—'शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः । तदेतत्क्वाचक्षे घृतमधुमयत्वद्बहुवचोविषेणाघूर्णन्ती किमपि न सखी मे गणयति ॥' मृदुकोपा मुग्धा नायिका ॥

एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
र्[1]अन्योन्यं हृदयस्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दंपत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः [2]सहासरभसं व्यावृत्तकण्ठग्रहः ॥ २३ ॥

दंपत्योः प्रणयमानकलहो भग्नः । किंविशिष्टः । सहासरभसं यथा भवत्येवं व्याघुटितः कण्ठाश्लेषो यत्र स तथा । अभग्ने मानकलहे कण्ठग्रहः किल निवृत्त आसीदिति हेतोर्व्यावृत्त इति भङ्गविशिष्टस्यैव मानकलेरिदं विशेषणम् । केवले मानकलहे कण्ठग्रहस्यानुपपन्नत्वात् । केन क्रमेण भग्न इत्याह—एकस्मिन्नित्यादि । एकस्मिञ्शयने त्वया किमित्येवं कृतमित्यादिकलहप्रश्नानामपगतान्युत्तराणि यत्र तद्वीतोत्तरं यथा भवत्येवं ताम्यतोः । उत्तरव्यय एव कथं जात इत्याह—पराङ्मुखतया । पुनः कथंभूतयोः । परस्परं चित्तस्थितेऽपि प्रसादनप्रकारे गौरवं संरक्षतोः । स्वं स्वं लाघवमाशङ्कमानयोरित्यर्थः । अथ च मानभङ्गहेतुगर्भं विशेषणमाह—पुनः कीदृशयोः । स्तोकस्तोकं लोचनाञ्चलविवर्तनेन संघटमानदृष्टयोरिति । प्रणयमानात्मकविप्रलम्भपूर्वकः स्पर्शनात्मा संभोगः । 'एकत्रासनसंस्थितिः—' इत्यारभ्यामुं श्लोकं यावत्षट्श्लोकेषु कविर्वक्ता ॥

---

१. 'अन्योन्यस्य हृदि स्थिते' इति शृङ्गारदीपिका. २. 'सहासरभसव्यावृत्तकण्ठग्रहम्' इति शृङ्गारदीपिका.

कस्मात्त्वमद्य विमना इव लक्ष्यसे इत्यादि केनचित्पृष्टः कश्चिन्नायकः कान्ताप्रणयमानचेष्टामाचष्टे—

पश्यामो मयि किं प्रपद्यत इति स्थैर्यं मयालम्बितं
किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।
इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो बाष्पस्तु मुक्तस्तया ॥ २४ ॥

पश्यामस्तावदियं मयि स्वयं कीदृशीमालपनादिप्रतिपत्तिमुपक्रमत इत्यपेक्षया मया निर्व्यापारेण स्थितम् । एष निश्चयेन कितवः कस्मान्मां न भाषत इति मनसि विभाव्य तया कोपः स्वीकृतः । इत्यमुना प्रकारेणान्योन्यस्य या विलक्षा दृष्टिस्तत्र चतुरं यत्कोपप्रसादरूपाया अवस्थाया मध्यं तस्मिन्मया संप्रतिपत्तिप्रवृत्तेन किमपि मिथ्यैवोद्भाव्य हसितम् । तया पुनर्धृतिहरो बाष्पस्त्यक्तः । धृतिं हृतवान् । 'पचादिभ्यश्च' इत्यच् । अधृतिं सूचितवानित्यर्थः । नहि बाष्पः प्रथममुत्पद्य धृतिं जहार । अपि त्वधृतिसमनन्तरमुत्पन्नो नायकस्य धृतिं हृतवानिति चेत्, मैवम् । मानिनीमानस्य प्रत्युताश्रुमोक्षान्तत्वात् । 'पश्यामः' इत्यत्र 'पश्येयम्' इति पाठो युक्तः । मयीत्येकवचनव्यपदेशात् । 'किं मां नालपतीति' इत्यत्रेतिशब्दोऽस्थाननिवेशितः । शठशब्दानन्तरं प्रयोजनीयत्वात् । 'अन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे' इत्यत्रावस्थान्तरं चतुरताधिकरणं भवितुमशक्तं सत्स्वसंबद्धं मिथुनं लक्षयति । तां विलक्षां दृष्टिं तदेवावस्थान्तरं जानाति न पुनरन्यः कोऽपीति दृष्टेरनिर्वचनीयत्वं चात्र प्रयोजनम् । प्रणयबहुमानलालिता मुग्धा नायिका ॥

कस्यापि विस्रम्भसंभावितस्याग्रे नायको वक्ति—

परिम्लाने माने मुखशशिनि तस्याः करधृते
मयि क्षीणोपाये प्रणिपतनमात्रैकशरणे ।
तया पक्ष्मप्रान्तध्वजपुटनिरुद्धेन सहसा
प्रसादो बाष्पेण स्तनतटविशीर्णेन कथितः ॥ २५ ॥

तया प्रसादः कथितः । अनुमानेन प्रतिपादित इत्यर्थः । केन । बाष्पेण । किंविशिष्टेन । पक्ष्मप्रान्तध्वजपुटनिरुद्धेन । पक्ष्मप्रान्तावेव ध्वजौ तयोः पुटं तत्र निरुद्धेन । अव्ययानामनेकार्थत्वान्निमेषमात्रं रुद्धेन । न तु निःशेषतो रुद्धेन । अत एव रोद्धुमशक्यत्वात्सहसा स्तनतटविशीर्णेन । अयमभिप्रायः—हृदये द्रुताया नायिकायास्तावदश्रूद्गमो जातः । पश्चात्तया संवरणार्थं रोद्धुमारब्धः । अथ दुर्वहतयासौ बलात्कारेण स्तनयोरुपरि पपात । पक्ष्मप्रान्तयोर्ध्वजपुटरूपेण दैर्घ्यं साधारणो धर्मः । पुटशब्दोऽश्रुनिरोधप्रयत्न-

१. 'मुक्तश्च बाष्पस्तया' इति शृङ्गारदीपिका. २. 'तदा पक्ष्मप्रान्तव्रजपुट' इति शृङ्गारदीपिका.

प्रतिपादकः । तटशब्दः स्तनयोः परिणाहं द्योतयति, विशीर्णशब्दस्तु काठिन्यम् । अन्यथा कथं बाष्पः कणशो विशीर्णतां व्रजेत् । अनुनयेन मानो गत उत स्वयमित्याह—तस्याः परिम्लाने माने अपराधातिशयात्पूर्वमनुनीयमानापि प्रसादं कथमपि न चकार पश्चाद्यथा कश्चित्तीव्रं रुदन्निवारितोऽपि न निवर्तते किं तु परिश्रान्तः स्वयमेव, तथा तस्या मानः स्वयं शिथिलो बभूव । अत एव विषादद्योतकं मुखशशिनि करधृत इति । अर्थवशाद्विभक्तिविपरिणामेन तया करधृत इत्यर्थः । परिम्लानता कुसुमादिषु प्रसिद्धा अमूर्ते माने स्खलद्गतिः स्वसंबद्धं शैथिल्यं लक्षयति । व्यङ्ग्यं चात्र चमत्कारेण केवलमनुमेयं गूढमेव । यथा—'मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः । उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥' न केवलमेवं सति, अन्यच्च मयि क्षीणोपाये । ननु षण्णामुपायानां मध्ये प्रणतिरस्त्येव । तत्कथं 'क्षीणोपाये' इत्युक्त्वा 'प्रणिपतनमात्रैकशरणे' इत्युक्तम् । युक्तमेवैतत् । परमिदं प्रणिपतनमुपायतया नारब्धम्, किं त्वनन्यगतिकत्वेन । अत एव मात्रच्प्रत्ययः, शरणशब्दप्रयोगश्च । मुखशशिनीति काव्यालंकारो रूपकम् । नाट्यालंकारः कोपकालुष्येऽपि माधुर्यम् । यदुक्तम्—'यौवने सत्त्वजाः स्त्रीणामलंकारास्तु विंशतिः ।' भावहावहेलास्त्रयोऽङ्गजाः । शोभा कान्तिर्दीप्तिर्माधुर्यं प्रागल्भ्यमौदार्यं धैर्यमित्ययत्नजाः सप्त । 'लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् । मोट्टायितं कुट्टमितं विव्वोको ललितं विहृतम् ॥' इति स्वाभाविका दश । अनुल्बणत्वं माधुर्यम् । यथा—'सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति । इयमधिकमनोज्ञा वल्कलेनापि तन्वी किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥'

तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं[1]
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते[2] ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तस्याश्च[3] तद्विस्मृतम् ॥ २१ ॥

सा मया परिरब्धा । किं कृत्वा । क्व तदित्युदीर्य । क्व तत्सान्द्रविलेपनम्, अपि तु न क्वापीत्यर्थः । किं कर्तुम् । वेगेन संप्रमार्ष्टुं तदेव विलेपनं स्वहृदयलग्नं प्रोञ्छितुम् । विलेपनप्रोञ्छनमेव केवलमधिकृत्यालिङ्गिता, न तु प्रीत्येत्याह—रभसेन हर्षविशेषेण । क्व. सति । तया इत्युक्ते सति । इति किम् । किमिति चरणप्रणामसंबन्धच्छद्मना हृदयमपह्नूयते । किंविशिष्टं वक्षः । तस्या यद्घनश्रीखण्डादिविलेपनं स्तनयुगं तस्य प्रकृष्टमालिङ्गनं तेन विलेपनमयी मुद्रा तया लाञ्छितम् । अन्यदपि यन्मुद्रालाञ्छितं निधानादिकं भवति तत्प्रयत्नेन गोपाय्यते । व्यतिकरव्याजेनेति व्याजशब्दस्यायमीर्ष्याद्योतकोऽभि-

---

१. 'स्तनतट' इति शृङ्गारदीपिका. २. 'गोपायते' इति शृङ्गारदीपिका. ३. 'तन्व्या च' इति शृङ्गारदीपिका.

प्राय:। तत्प्रियतमास्तनविलेपनलाञ्छितस्य वक्षसो रक्षणं तव महत्प्रयोजनम्, चरणानतिव्यतिकरस्तु मिथ्यारम्भ इति। यद्यपि तस्या इति पदस्य स्तनयुगपदेन सह संबन्धस्तथापि वक्षःपदेन सह संबन्धविधायको भिन्नविभक्तिनिर्देश उचितः। तस्यात आधीनं तव हृदयमिति प्रतीतेः। आश्लिष्टापि मानं तत्याज न वेत्याह—तस्याश्च परिरम्भसुखवशात्तद्विलेपनं विस्मृतम्। चशब्दस्तुल्यकालताप्रतिपादनार्थः। यदैवालिङ्गिता तदैव कोपकारणं विस्मृतवतीति प्रीतिप्रकर्षः। अत्र कोपस्य शान्तिरित्यत्र भावशान्तिः। ईर्ष्यामानात्मकविप्रलम्भारम्भपर्यवसितः संभोगः। नायको वक्ता पूर्ववत्। पिहितमलंकारः। यदुक्तम्—'यत्रातिप्रबलतया गुणः समानाधिकरणमसमानम्। अर्थान्तरं विदध्यादाविर्भूतमपि तत्पिहितम्॥' 'व्यक्ताःगा वितथो धृष्टः' इत्यनेन धृष्टो नायकः। माननर्मैतत्। यथा—'तदवितथमवादीर्यन्मम त्वं प्रियेति प्रियजनपरिभुक्तं यद्दुकूलं दधानः। मदधिवसति मा गाः कामिनां मण्डनश्रीर्व्रजति हि सफलत्वं वल्लभालोकनेन॥

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिका[1]संस्पृशि।
शय्योपान्तनिविष्टसस्मितसखी[2]नेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः॥ २७॥

अलीकवचनानामुपन्यासो यत्र तद्यथा भवत्येवं वयस्याजनः शनकैर्निर्गतः। किंविशिष्टः। शय्योपान्तेत्यादि। कान्तशय्योपान्ते [निविष्टा] या सखी नायिका तस्या नेत्रोत्सवेन प्रमुदितः। क्व सति। कञ्चुलिकाया वीटिकासंस्पृशि प्रियतमे इत्यभिधायिनि सति। इतीति किम्। हे विह्वलाक्षि, त्वं कञ्चुलिकामन्तरेणैव रमणीयां शोभां दधासि। अत्र मदनालसलोचनां दृष्ट्वा ग्राम्येतरभङ्गीभणितिप्रक्रमेण रिरंसुः कामी मुग्धाक्षीति संबुबुधे। सत्यां कञ्चुलिकायामङ्गसौन्दर्यस्य प्रत्युत पिधानं भवतीति विनैवेत्येवकारस्य तात्पर्यम्। कञ्चुलिका चेयं दाक्षिणात्यचोलिकारूपैव। तस्या एव ग्रथनपदार्थे वीटिकाव्यपदेशः। अन्यत्र [3]कंषातनिकेत्येवमादयः। भवतीष्वप्युपविष्टास्वयमेवंविधं चेष्टत इति सलज्जकृतस्मितायाा नायिकायाः सखीजनं प्रत्यवलोकनमात्रमेव नेत्रोत्सवः। ननु स्पर्शसुखेन नयननिमीलनं नायिकानां प्रसिद्धम्। यदाह कालिदासः—'मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः। शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः॥' इत्यादिषु तिर्यक्संभोगेऽपि तदेव श्लाघ्यम्। तत्कथमत्र विकस्वरदृष्टिता व्याख्यायते। अत्रोच्यते—नहि सर्वासामेव नायिकानां स्पर्शसुखेन लोचननिमीलनं स्पृहणीयम्। प्रौढनायिकानामेवोपवर्ण्यमानत्वात्। ता हि सुरतारम्भ एवाचेतना भवन्ति। इयं च मध्या नायिका। मुग्धाक्षीति मदनालसलोचनेति कान्तं प्रत्यनभियोगित्वात्।

---

१. 'वेणिका' इति शृङ्गारदीपिका. २. 'वधू' इति शृङ्गारदीपिका. ३. 'कस' 'तनी' इति तद्वाचकौ हिन्दीभाषाशब्दौ.

यदुक्तम्—एवमपरेऽपि व्रीडानुपहताः स्वयमनभियोगकारिणो मध्याव्यवहारा भवन्ति । यथा—'स्वेदाम्भःकणिकाचितेऽपि वदने जातेऽपि रोमोद्गमे विस्रम्भेऽपि गुरौ पयोधरभरोत्कम्पेऽपि वृद्धिं गते । दुर्वारस्मरनिर्भरेऽपि हृदये नैवाभियुक्तः प्रियस्तन्वङ्ग्या हठकेशकर्षणघनाश्लेषामृते लुब्धया ॥' सद्भावरहःसहचरीणां परस्परसौभाग्यसाक्षात्कारेणाह्लादो भवतीत्यालीजन आनन्दितः । कविर्वक्ता । विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यनेन विभावनालंकारः । यदुक्तम्—'सेयं विभावनाख्या यस्यामुपलभ्यमानमभिधेयम् । अभिधीयते यतः स्यात्तत्कारणमन्तरेणापि ॥' अत्रार्थशक्त्याक्षिप्तो रिरंसालक्षणोऽर्थः कविना सखीजनसव्याजगमनात्मिकया स्वोक्त्या भूयोऽपि व्यञ्जितः । यदुक्तम्—'शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः । यत्राविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः ॥' यथा—'अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथात्र । अस्मिन्पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥' मनोहारिणीं लक्ष्मीमित्यनेन शोभा नाम नाट्यालंकारः—'रूपोपभोगतारुण्यैः शोभाङ्गानां विभूषणम् ।' यथा—'तां प्राङ्मुखीं तत्र निवेश्य बालां क्षणं व्यलम्बन्त पुरो निषण्णाः । भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने संनिहितेऽपि नार्यः ॥' मुग्धाक्षीत्यनेन कान्तिश्च—'मन्मथाप्यायिता छाया सैव कान्तिरिति स्मृता ॥'

यथा मानं त्याजिता सती तत्कालमवलम्ब्यमानेर्ष्यातिरेकेण संयुज्यमाना रहसि रमणे रतिरमणरहस्यसर्वस्वमुन्मुद्रयति न तथा नित्यमेवेत्यनुसंधाय सखीभिः प्रणयमानं शिक्षिता सती ताः प्रति काचिदाह—

भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने ॥ २८ ॥

लोचनगोचरे सति तस्मिञ्जने मानस्य निर्वाहः कथं भविष्यति, अपि तु न कथमपि तस्मिन्नित्यनिर्वचनीयचमत्कारे जने इत्यर्थान्तरसंक्रमितत्वेन प्राणेश्वर इत्यर्थः । नहि कृत्रिमैरुपायैरयुतसिद्धं वस्तु निह्नोतुं शक्यते । तदत्र क उपायाः किं च वस्त्वित्याह—भ्रूभङ्ग इत्यादिना । एवमेव तावत्प्रियतमं दृष्टिः सोत्कण्ठमुद्वीक्षते । भ्रुकुटिकौटिल्ये नाटिते पुनरधिकं सोत्कण्ठमुद्वीक्षते । यथा कश्चित्पक्षी बलात्कारेण रुध्यमानः कथंकथमप्युड्डीय यत्रत्यो भवति तत्रैव गत्वा रमते । अभिनीतेऽपि वाचंयमत्वे ममेदं दग्धमुखं सस्मितं भवति । धिक्कारे दग्धहतकादयः शब्दाः प्रयुज्यन्ते । अथ च तेन सार्धमालापनमन्तरेणाप्रयोजनमाननं दग्धमेव । काठिन्यं गत इत्येव न, अपि तु काठिन्यं गमिते । तथाभूतेऽपि मनसि तनुः पुलकं बिभर्ति । अथ च प्रिये काठिन्यं गमिते ,

चेतसि तनुः तनुःस्वे (?) कृशेत्यर्थः । तस्मिन्दृष्टे मानस्य कथं निर्वाहो भविष्यति । कोऽर्थः—मया भ्रूभङ्गादीनि दुष्कराणि कृतानि, परंतु न मानो निर्व्यूढः । तस्मादतःपरं मानार्थे यत्नमपि न करिष्यामीति प्रीतिप्रकर्षो भविष्यत्या व्यज्यते । उत्तरयत्नाक्षेपालंकारौ ॥

सा पत्युः प्रथमेऽपराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलोदकैरश्रुभिः ॥ २९ ॥

सा बाला भर्तुर्व्यलीकप्रस्तावे केवलं रोदित्येव । कीदृशी । लम्बितपक्ष्मलोचनेन्दीवरा । कैर्विशिष्टा । अश्रुभिः । कथंभूतैः । निर्मलकपोलयोर्यन्मूलं नेत्रयोरधोभागस्तत्र क्षरितैः । पुनः किंविशिष्टैः । लुठल्लोलोदकैः निमेषार्धबद्धबिन्दुजालतया लुठत्पतनशीलत्वेन लोलमुदकं येषां तैः । पुनः कीदृशैः । नैरन्तर्येण प्रथममेवोन्मृष्टकज्जलत्वात्स्वच्छैः । अथवा ईर्ष्यामानेऽप्यनुपन्यस्तवक्रोक्त्यादेर्नायिकायाः स्वच्छतानुमापकैः । उपचारेणाश्रुभिरपि स्वच्छैः । ननु किमिति रोदित्येवमुल्लुण्ठनादिकमेव किमिति नारभत इत्याह—नो जानाति । किं तत् । सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् सहेलं भ्रूक्षेपादिभिरङ्गवलनादिभिरनृजुभणितिभिश्चापराधस्य सम्यगनुमानम् । तदेव किमिति न वेत्तीत्याह—सख्योपदेशं विना सख्येनोपदेशः अर्थात्सख्यास्तं विना । अत्र तावत्कविः प्रायस्तटस्थो वक्ता । सेति पदं च दूतीदूतप्रभृतिकस्य रतिवासनालिङ्गितान्तःकरणस्य वा वक्तुर्युज्यते, न तु तटस्थस्य । तस्मात् 'कान्तस्य प्रथमेऽपराधसमये' इति पाठो युक्तः । अथानुरक्त एव वक्तास्तु । मैवम् । पत्युरित्यनुपपन्नत्वात् ॥

काचिदन्यनायिकानुरक्तं नायकं प्रति ब्रूते—

भवतु विदितं व्यर्थालापैरलं प्रिय गम्यतां
तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः ।
तव यदि तथारूढं प्रेम प्रपन्नमिमां दशां
प्रकृतितरले का नः पीडा गते हतजीविते ॥ ३० ॥

हे प्रिय, भवतु अनुनयोपक्रमैरालापैरास्ताम् । कोऽर्थः—ज्ञातं तव स्वरूपम् । प्रसादनप्रवृत्तस्यापि सर्वाकारमन्यासक्तिशंसिन्येव च्छाया बाह्याकारेण दाक्षिण्यमात्रमेतत् । अत एव व्यर्थालपैः पूर्यताम् । त्वदधीनं मे जीवितमित्यादीनामालापानामर्थस्य विगतत्वाद्व्यर्थता । तस्माद्यत्रैव प्रतिभासते तत्रैव गम्यताम् । नहि प्रियस्य समीहितप्रतिबन्धः कर्तुं

१. 'प्राणेशप्रणयापराधसमये' इति शृङ्गारदीपिका. २. 'लोलालकैः' इति शृङ्गारदीपिका.

युज्यते । अस्मिन्प्रेमवैशसे तव स्वल्पोऽपि दोषो नास्ति । अस्माकमेव दैवं वक्ष्यमाणमरणाध्यवसायेन प्रतिकूलम् । अस्माकमिति बहुवचनमौदासीन्यव्यञ्जकम् । अनेकार्थत्वादव्ययानां तुशब्दोऽवधारणार्थः । केन प्रकारेण विधिः पराङ्मुख इत्याह—तव यदीत्यादि । तव यद्यनिर्वचनीयेन प्रकारेण कोटिं प्राप्तं प्रेम इमां प्रसादनसमयेऽप्यन्यासक्तिशंसनलक्षणामवस्थां प्रपन्नमस्मादस्माकं स्वभावगत्वरे निन्द्यजीविते गते का व्यथा । अपि तु न कापि । प्रकर्षप्राप्तस्य प्रेम्णो विपर्यासे त्वेषैव स्थितिः । यथा रत्नावल्याम्—'समारूढा प्रीतिः प्रणयबहुमानादनुदिनं व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया । प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमहो प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ॥' तनुरपि न ते दोष इत्यत्र तवैव गरीयान्दोष इति विपरीतलक्षणया निषेधे विधिः । एवं च त्वयि निरनुक्रोशेऽस्माकं विधिः पराङ्मुख इति प्रीत्यतिशयः । तवेत्यर्थान्तरसंक्रमितत्वेन शठस्येत्यर्थः । वयं त्वदेकशरणाः, तस्मात्का नः पीडा । अपि तु तवैव । प्रकृतितरले इत्यनेन संसारस्यानित्यता प्रतिपाद्यते । वैराग्यं च शृङ्गारोपनिबन्धे वयं तावदनुचितं मन्यामहे । यथोदाहृतं दोषनिर्णये मम्मटालकाभ्याम्—'प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः । निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥' अत्र शृङ्गारे प्रतिकूलस्य शान्त्यस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचारी । यद्यपि शुद्धतार्किकाणां जातिघोटिक(?)वैयाकरणानामैकान्तिकच्छान्दसानां च दन्तकलहो न निवर्तिष्यते, यद्यपि च करणीय(?)सहृदयाः प्रस्रवणनिरोधबाधिता (?) इव नासासंकोचं करिष्यन्ति, तथापि परमार्थसहृदयैः कृतयोगक्षेमाः पाठान्तरमभिदध्महे—'अकृतविफले का नः पीडा गते हतजीविते' इति नायकस्यान्यासक्तिलक्षणस्य नायिकायाः प्रीतिलक्षणस्यान्तरस्य प्रतीतिजनको भावो नामालंकारः । यदुक्तम्—'अभिधेयमभिदधान तदेव तदसदृशसकलदोषगुणम् । अर्थान्तरमवगमयति वाक्यं तदसौ परो भावः' ॥

काचित्स्वैरिणी जरदभिसारिकया सोपदेशमभिधीयते—

उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा
यदि किमधिकत्रासोत्कम्पं दिशः समुदीक्षसे ॥ ३१ ॥

हे मुग्धे, यदि त्वमित्थं वादितपटहा प्रियं प्रत्याभिमुख्येन गच्छसि, तदा अधिकत्रासेनोत्कम्पो यत्र तद्यथा भवत्येवं ककुभः किमित्युत्कंधरमीक्षसे । एवमाहतडिण्डिमा । एवं कथमित्याह—वक्षसि पारिप्लवं मुक्तादाम न्यस्तम् । शब्दायमाना मेखला नितम्बे

1. 'त्रासोत्कम्पा' इति शृङ्गारदीपिका.

निवेशिता। किंविशिष्टे। घने। प्रचुरपरिणाहिनीत्यर्थः। चरणौ च शिञ्जानरत्नमञ्जीरौ। हारश्चाकचक्यायमानतया प्रकाशकः, काञ्चीनूपुरौ च सशब्दत्वेन। पादौ रणन्मणिनूपुरावित्यत्र यद्यपि बहुव्रीहिणैव प्रकाशमानात्मकोऽर्थः संघटते, तथाप्युरसि हारवज्जघने काञ्चीवदाधाराधेयभावेनाप्रयोगादुपक्रमभङ्गो दूषणम्। ईषद्दूषणत्वाच्चादूषणप्रायम्। मुग्धे इत्यत्र मोहः प्रियसंगमौत्सुक्यवती विह्वलतैव। अन्यथोपलम्भकारणानि भङ्क्त्वा किमित्यभिसरणमारभते। आहतडिण्डिमेत्यत्र लक्षणया सुप्रकाशकत्वमर्थः। अधिकत्रासोत्कम्पमित्यत्र च संकल्पकल्पितेन प्रियसमागमेन सात्त्विक एव तावदुत्कम्पः। त्रासेन पुनरधिक इति। अथ चाहतडिण्डिमा यदि प्रियमभिसरसि तदा किमद्यापि दिशः समुदीक्षसे। वेगेन गत्वा समीहितं साधयेति साभ्यसूयं कार्यशिक्षा। विषमोऽलंकारः। यदुक्तम्—'विषम इति प्रथितोऽयं वक्ता विघटयति कमपि संबन्धम्। यत्रार्थयोरसन्तं परमतमाशङ्क्य तत्सत्त्वे॥' यथा—'यो यस्य नैव विषयो न स तं कुर्याद्धठो बलात्कारः। सततं खलेषु भवतां क्व खलाः क्व च सज्जनस्तुतयः॥' अभिसारिकाश्च प्रदोषेषु विवाहादिप्रकरणेषु मध्याह्नशून्येषु मार्गेषु वसन्तोत्सवे उद्यानयात्रासु विदूरेषु चैवंविधेष्वन्येष्वपि संविधानकेषु कामुकमभिसरन्ति। यदुक्तम्—'अटव्यामन्धकारे वा शून्ये वापि सुरालये। उद्याने वा सरित्कुञ्जे प्रदेशे गर्हितेऽथवा॥ परदारेषु संकेतः कर्तव्यो रतिसिद्धये। दूतीवक्त्रेण निश्चित्य स्वयं तत्र पुरा व्रजेत्॥ ततः प्राप्तां प्रियां शीघ्रं सेवेत रतिकोविदः। प्रेषयेदन्यमार्गेण स्वयमन्येन च व्रजेत्॥ यथा न ज्ञायते कश्चित्सुनिगूढो विचक्षणः॥' अभिसारयन्ति च दूत्यो नायिकामनेककौतुकवासनाभिः। यदुक्तमीश्वरकामिते—'प्रागेव स्वभवनस्थां ब्रूयात् अमुष्यां क्रीडायां तव राजभवनस्थानानि रामणीयकानि दर्शयिष्यामीति। काले च योजयेत्। बहिः प्रवालकुट्टिमं ते दर्शयिष्यामि। मणिभूमिकां वृक्षवाटिकां मृद्वीकामण्डपिकां चित्रकर्माणि यन्त्राणि क्रीडामृगान्—' इत्यादि। भवननर्म चैतत्। यथा रत्नावल्यामालेख्यदर्शनावसरे—'जाणिदो मए एसो सव्वो वुत्तन्तो समं चित्तफलएण। ता गदुअ देवीए कहइस्सम्।'[1] इत्यादि॥

काचित्प्रोषितभर्तृका विरहार्तिमोहेन प्रतिविधानमाकाङ्क्षन्ती वर्षारम्भबलाहकं प्रत्याह—

मलयमरुतां व्राता व्राता विकासितमल्लिका-
परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि।
घन घटयितुं तं निःस्नेहं य एव निवर्तने
प्रभवति गवां किं नश्छिन्नं स एव धनंजयः॥ ३२॥

हे घन, चैत्रीयाश्चन्दनसमीरा वहन्ति स्म। निदाघकालोऽपि पर्यवसितः। किं-

१. 'ज्ञातो मया एष सर्वो वृत्तान्तः समं चित्रफलकेन। तद्गत्वा देव्यै कथयिष्यामि।' इति च्छाया.

विशिष्टः । दलितकोमलविचकिलानां परिमलभरो यस्मिंस्तथा । उभयोरप्युद्दीपनविभावयोः सुगन्धित्वोक्तिः । ताभ्यामपि प्रियो न मेलितः । अतएव वाता इति भग्न इति चाक्षमत्वोक्तिः । लोके ह्यप्रयोजके वायुरिति व्यपदिश्यते परिश्रान्ते च भग्न इति । उभावाक्षिप्य मेघमुत्तेजयति—यदि परं तं प्रियमुद्दीपनविभावोद्गमेऽपि स्वस्थावस्थत्वात्यक्तानुरागं मेलयितुं त्वमुद्यच्छसे । मेघागमे हि यथाकथंचिद्दूरदेशान्तरादप्यागत्य पान्थाः कान्ताभिः सह संगच्छन्ते । अमुमेवार्थमाख्यानेन द्रढयति—य एव गवां निवर्तने प्रत्यानयने क्षमते स एव धनंजयः । किमस्माकं त्रुटितम् । कोऽर्थः—वयं जीवाम एव । धनंजयपदमुचितम् । गोसमूहस्यापि धनशब्देन प्रसिद्धत्वात् । आख्यानकवाक्यान्तःपतितत्वात्किं नश्छिन्नमिति न गर्भितं नाम दूषणमाधत्ते । क्वचिदेवंविधस्य दोषस्यापि गुणप्रतीतेः । यथा काश्मीरकविह्लणस्य—'कृत्वा नूपुरमूकतां चरणयोः संयम्य नीवीमणीनुद्दामध्वनिपण्डितान्परिजने किंचिच्च निद्रायति । कस्मात्कुप्यसि यावदस्मि चलिता तावद्विधिप्रेरितः काश्मीरीकुचकुम्भविभ्रमधरः शीतांशुरभ्युद्गतः ॥' इत्यत्र कस्मात्कुप्यसीति । अत्र हि संकेतप्राप्तस्य कामुकस्य वैमनस्यमपनेतुं स्वविलम्बकारणमुदाहरन्ती स्वैरिणी वाक्यस्यान्तरेव प्रसक्तिजनकं कस्मात्कुप्यसीत्यवोचत् । तथा प्रोषितभर्तृकापि मेघात्संभाव्यमानेऽपि प्रियसमागमे संकल्पितसमीहितसिद्धिरसमाप्तेऽपि वाक्ये किं नश्छिन्नमिति संतोषव्यञ्जकं पदमुक्तवती ॥

काचिदेकग्रामप्रवासेन मन्दमन्दोद्दीपितमन्मथानलज्वालाभिभूततनुर्व्याधिव्यपदेशेन मानमन्युमनुभवन्ती सपत्ननायिकासक्तं नायकं प्रति सोल्लुण्ठकरुणोपन्यासमाचष्टे—

प्रातःप्रातरुपागतेन जनिता निर्निद्रता चक्षुषो-
मन्दाया मम गौरवं व्यपगतं प्रोत्पादितं लाघवम् [1] ।
किं [2] तद्यन्न कृतं त्वया मरणभीर्मुक्ता मया गम्यतां
दुःखं तिष्ठसि यच्च पथ्यमधुना कर्तास्मि तच्छ्रोष्यसि ॥ ३२ ॥

यद्यपि मानविषयस्यार्थस्यात्र मुख्यता तथापि संविधानकवशेन रुग्विषय एवार्थ आदौ प्रतिपाद्यते—प्रतिप्रभातमागतस्त्वम् । रोगिणो हि विशेषाविशेषपरिज्ञानमिष्टजनः प्रभात एवागत्य करोति । मम चक्षुषोर्निद्रा निवारिता । किंविशिष्टायाः । मन्दायाः सरुजः । दिवास्वापो हि निषिद्धः सव्याधेः । दृष्टौ हि मीलनोन्मीलनपरिज्ञानार्थमवनं कार्यमिति विशेषणं चक्षुषोरिति प्रसिद्धं युक्तम् (?) । अन्यथा जनिता निर्निद्रितेत्येतावतैव पूर्यते । उचितप्रतिविधानैरेव यत्र पारवश्यं व्यपगतम् । अन्तर्भूतकारितार्थत्वे व्यपग[मि]तमित्यर्थः । अन्यथा नायककर्तृकयोर्निद्रानिरोधलाघवोत्पादनवाक्ययोरन्तरा गौरवं स्वयमेव व्यपगतमिति प्रयोक्तुं न युज्यते । स्फूर्तिमत्त्वं प्रकर्षेणोत्पादितम् । अथवा किं बहुना,

---

१. 'गौरवव्यपनयादुत्पादितं' इति शृङ्गारदीपिका. २. 'किं मुग्धेन कृतं त्वया रमणभीः' इति शृङ्गारदीपिका.

किं तत्समयोचितं न कृतं त्वया। अपि तु सर्वं कृतम्। अत एव मृत्युभयं परित्यक्तं मया। अतःपरं निःसंशयं जीविष्यामीत्यर्थः। इदानीं गम्यताम्। यतः कृच्छ्रमास्ते भवान्। यच्चेदानीं मुद्गरसप्रायं पथ्यं करिष्यामि तदाकर्णयिष्यसि। कोऽर्थः—पथ्यं श्रुतिविषयमेवास्तु, न तु दृष्टिविषयम्। दृष्टिविषये किल भवदीयकार्यसंकोचक्लेशकारिणी वेला लगिष्यति। अथ प्रातःप्रातरुपागतोऽसि, न तु रात्रौ। तदा हि कदाचित्संगमावकाशोऽपि संभवति। अन्यच्चान्याङ्गनासङ्गशंसीन्यधरक्षतादीन्यपि प्रातर्दृश्यन्ते। तानि चाक्षिदुःखमुत्पादयन्ति। अत एव जनिता निर्निद्रता चक्षुषोः। अन्यथा विरहवेदनाजागरितसकलरात्रेर्दिवा कदाचिन्निद्रापि मुहूर्तं घटते। कचाकर्षणताद्यकरणादक्षमाया मम बहुमानो व्यपगमितः। तुच्छता तु प्रकर्षेण जनिता। अथ वा किं तद्यत्त्वया विरुद्धं न कृतम्। अत एव मया मरणे निश्चयः कृतः। तदितः स्थानाद्गम्यताम्। यतोऽत्र दुःखं तिष्ठसि। तत्रैव ते सुखमित्यर्थः। यच्चेदानीं प्राणपरित्यागलक्षणमुचितं करिष्यामि तदवश्यं श्रोष्यसि। न तु कर्णपिधानादिना शोकावेगं सूचयिष्यसि। तवैव समीहितत्वात्। कर्तास्मीत्यत्र लुटि उत्तमैकवचनम्। मन्दामशब्दशक्त्युद्भव उपमालंकारः। यथा सरागा वराकीति संभाव्यते तथा त्वयाहं संभावितेति प्रतीतेः। यदुक्तम्—'ननु शब्दशक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकार उच्यते तदानीं श्लेषस्य विषयोऽपहृत एव स्यात्। नापहृत इत्याह—'आक्षिप्त एवालंकारः शब्दशक्त्या प्रकाशते। यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः'॥

कस्यांचिदनुरक्तः कश्चित्स्वयं सवितर्कमनुसंधत्ते। विस्रम्भपात्रस्य वा प्रतिविधानप्रत्याशया कस्याप्यग्रे निवेदयति—

सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम्।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम्॥ ३४॥

सा अनिर्वचनीया मुग्धा, वयं च तदप्राप्तिपर्याकुलतया अप्रगल्भमनसः। अथ च यत्रैव बाल्यं तत्रैवाप्रगल्भमनस्कत्वं युज्यते। सा स्त्री, वयं च तां विना स्थातुं न शक्नुम इति गतधैर्याः। अथ च यत्रैव स्त्रीत्वं तत्रैव कातरत्वमुचितं भवति। सा पीनं चोन्नतिमच्च एवंविधं स्तनयुगलं बिभर्ति, वयं च तद्गाढालिङ्गनमप्राप्नुवन्तः सखेदाः। अथ च य एव गुरुपदार्थभारं वहति स एवं सखेदो दृश्यते। 'भरं' इति पाठे स्तनभारं बिभर्तीत्यर्थः। अत्र पाठे धरभरमित्यनुप्रासालंकारः। भारश्च साक्षादुक्तः। पूर्वत्र तु पाठे पीनोन्नतिमत्त्वेन भार आक्षिप्यत इति। सा महता नितम्बभरेणाक्रान्ता, वयं च तां तत्प्राग्भारलीलालसगामिनीं स्मरन्तो जडिम्ना गन्तुं न क्षमाः। अथ च य एव महता भारेणाक्रान्तो भवति स एव गन्तुं न शक्नोति। एवं सत्यन्यजनावलम्बिभिर्दोषैर्वयमसौष्ठवाः

संवृत्ता इत्याश्चर्यमेतत् । असंगतिरलंकारः । यदुक्तम्—'विस्पष्टं समकालं कारणमन्यत्र कार्यमन्यत्र । यस्यामुपलभ्येते विज्ञेयासंगतिः सेयम् ॥' दोषैरित्यत्र विपरीतलक्षणया गुणैरित्यर्थः । अत एवानिर्वचनीयताद्योतकः सर्वत्र साशब्दः । अथ च तस्या एव दोषो या यथाकथंचिदागत्य संकेते मया सह न संगच्छत इत्यभिप्रायः । अन्यच्च सा बाला चेष्टाविशेषानुमेयानुरागापि प्रच्छन्नचाराद्ययोग्यतया संगमोपायं न जानातीत्युभयानुरागः। एकानुरागे हि शृङ्गाराभास एव स्यात् । यथा बालरामायणस्योन्मत्तदशाननाङ्के । तत्र हि सुलभानेकस्त्रीरत्नस्यापि रावणस्य यदप्राप्तावुन्मादो जातस्तस्याः प्राणेश्वररामचन्द्रैकचेतसो जानक्याः स्पृहणीयतातिशयः प्रतिपादितो भवति, न तु रसोपनिबन्धः । उभयानुरागाभावात् ॥

काचिद्भाविप्रोषितभर्तृका आत्मानं प्रति सोपालम्भमाचष्टे—

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं[1] व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे[2] समं प्रस्थिता
गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु[3] त्यज्यते ॥ ३० ॥

हे जीवित, कृत्याकृत्यविवेकपराङ्मुखतया प्रियतमे देशान्तरं गन्तुं निःसंदेहमनसि सति सर्वे सुहृदः सहैव प्रचलिताः । कथमित्याह—प्रस्थानं वलयैरित्यादि । दौर्बल्यवशेन पतनशीलतया हस्ताभरणैः प्रस्थानं कृतम् । किं विशिष्टैः । प्रियसखैः वल्लभसहचरैः । प्रिये तिष्ठति तिष्ठद्भिर्गच्छति । गच्छद्भिरित्यर्थः । एवमस्रादिष्वपि प्रियसखत्वं योज्यम्। अस्रैरप्यनवरतं गतम् । अश्रूणामप्रवृत्तिरेवावस्थितिः गतिश्च प्रवृत्तिरेव । न त्वभाव एव । तथा सत्यश्रूणामभाव एव स्यात् । संतोषेण क्षणमपि न स्थितम् । मनसापि पुनः प्रथममेव गन्तुमुपक्रान्तम् । तत्त्वयाप्यवश्यगन्तव्ये सति कुतो हेतोः प्रियसुहृत्संघातः परित्यज्यते । गम्यतामेवेत्यर्थः । आस्तां तावत्प्रियतमे गते, गन्तुं निश्चितचेतस्यपि नायिका जीवितनिरपेक्षा बभूवेति भावः । सहोक्तिरलंकारः । यदुक्तम्—'भवति यथारूपोऽर्थः कुर्वन्नेवापरं तथारूपम् । उक्तिस्तस्य समाना तेन समं या सहोक्तिः सा ॥' यथा—'कष्टं सखे क यामः सकलजगन्मन्मथेन सह तस्याः । प्रतिदिनमुपैति वृद्धिं कुचकलशनितम्बभित्तिभरः' ॥

संदष्टेऽधरपल्लवे सचकितं हस्ताग्रमाधुन्वतीं
मा मा मुञ्च शठेति कोपवचनैरानर्तितभ्रूलता ।
सीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी
प्राप्तं तैरमृतं श्रमाय मथितो मूढैः सुरैः सागरः ॥ ३१ ॥

---

१. 'आस्थितं' इति शृङ्गारदीपिका. २. 'सर्वैः समं प्रस्थितं' इति शृङ्गारदीपिका. ३. 'किमुत्सृज्यते' इति शृङ्गारदीपिका..

तैरेव पीयूषं लब्धं यैः सहर्षोत्तरलं मनस्विनी चुम्बिता। अधररस एवामृतमित्यर्थः। यावदप्रसादं हि मानिनी महान्तं संतापमुत्पादयति, प्रसन्ना च लोकोत्तरमानन्दम्। अत एवाचेतनैरमरैः खेदाय विलोडितः क्षीरोदः। किं कुर्वती चुम्बिता, दष्टाधरत्वात्कराग्रं समन्ताद्धुन्वती। कथं सचकितम्। चकितमत्र चमत्कृतिरेव। क्व सति। ओष्ठप्रवाले हठात्खण्डिते सति। किं विशिष्टा। सविलासतरङ्गितभ्रूवल्लिः। कैर्विशिष्टा। मा मा मुञ्च शठेति कोपवचनैः। मा मेति पर्याकुलताप्रतिपादकाभ्यां शब्दाभ्याम्, मुञ्चेति क्रियया च संभोगाभियोगस्य निषेधः। न तु ताभ्यां मुञ्चेति क्रियायाः। कोपस्य वचनैरेव, न तु वास्तवेन कोपेन। पुनः कीदृशी। सीत्काराञ्चितलोचना सीत्कारपूर्वकं विलासदशास्पर्शेन कूणिते लोचने यया सा तथोक्ता। कलहरूपं चैतत्सुरतम्। यदुक्तम्—'कलहरूपं सुरतमाचक्षते। विवादात्मकत्वाद्वामशीलत्वाच्च कामस्य' इति। सीत्कारः कामिनीनां दयितस्पर्शसुखातिशयेन हृदयोल्लासचमत्कारपूर्वकः श्वसितात्मा मन्मथोद्दीपनो मुखस्य चेष्टाविशेषः। आक्षेपोलंकारः। यथा—'कुतः कुवलयं कर्णे करोषि कलभाषिणि। किमपाङ्गमपर्याप्तमस्मिन्कर्मणि मन्यसे॥' अनुभवी वक्ता। यदपि चामी श्लोकाः संभोगमीर्ष्यामानं प्रणयमानेन, प्रणयमानमभिसरणेन, अभिसरणं प्रवासविप्रलम्भेन, तिरयन्ति तदपि कवेरभिसंधानम्। अतिनिरन्तरमेकरसोपनिबन्धोऽप्युद्वेजको भवति। यथा नाटकादावभिनेयः सान्तरोपनिबन्धो रसश्चमत्कारी स्यात्तथैवंविधकाव्येषु श्रव्योऽपीति। किलकिञ्चितं चात्र नाट्यालंकारः। यदुक्तम्—'क्रोधाश्रुहर्षभीत्यादिसंकरः किलकिञ्चितम्।' यथा—'रतिक्रीडाद्यूते कथमपि समासाद्य समयं मया लब्धे तस्याः क्वणितकलकण्ठार्धमधरे। कृतभ्रूभङ्गासौ प्रकटितविलक्षार्धरुदितस्मितक्रोधोद्भ्रान्तं पुनरपि विदध्यान्मयि मुखम्॥' 'सानन्दान्तः कुट्टमिते कुप्येत्केशाधरग्रहे' इत्यनेन कुट्टमितमपीति॥

काचिन्नर्मसख्याः पुरतः कथयति—

सुप्तोऽयं सखि सुप्यतामिति गताः सख्यस्ततोऽनन्तरं
प्रेमावेशितया मया सरलया[1] न्यस्तं मुखं तन्मुखे।
ज्ञातेऽलीकनिमीलने नयनयोर्धूर्तस्य रोमाञ्चतो
लज्जासीन्मम तेन साप्यपहृता तत्कालयोग्यैः क्रमैः॥ ३७॥

हे सखि, अयं ते दयितः सुप्तैस्तस्मादस्माभिरपि सुप्यतामिति मां प्रत्युक्त्वा सख्यो गताः। ततः प्रघटनानन्तरं प्रेमग्रहगृहीतया तत्रापि प्राञ्जलया मया प्रियमुखे स्वमुखं निवेशितम्। अथ तस्य धूर्तस्य रोमाञ्चचिह्नेन नेत्रयोर्मिथ्यासंकोचने ज्ञाते मम व्रीडा बभूव। तेन च संभोगसमयोचिताभिर्नीवीव्यपनयनप्रायाभिः परिपाटीभिः सापि लुण्ठिता। कोऽर्थः—अहमपि तत्कालोचितप्रवृत्तिरभूवम्। सुप्यतामिति पदस्याग्रे

1. 'तरलया' इति श्रृङ्गारदीपिका.

उक्त्वेत्यध्याहरणीयम् । सुप्तमुखचुम्बनं च नायिकानां रागोद्दीपनम् । यदुक्तम्—'सुप्तस्य मुखमालोकयन्त्याः स्वाभिप्रायेण चुम्बनं रागोद्दीपनम्' इति । यच्च तेन रिरंसुना विजनमाकाङ्क्षतालीकनिमीलनं कृतं तत्सख्यो जानन्ति, अत एवायमित्यर्थान्तरसंक्रमितत्वेन धूर्तोऽस्मन्निर्गमाय सुप्त इत्युपन्यस्य स्वयमुत्थाय गताः । अर्थान्तरसंक्रमितस्योदाहरणमेतत्—'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः । कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥' अत्र हि पितृमरणादिदुःखसहनक्षमत्वविशिष्टो राम इति संज्ञा प्रतीयते न तु संज्ञिमात्रम् । यदुपज्ञेन ध्वनिवर्त्मना संचरमाणाः सचेतसः प्रहर्षं प्राप्नुवन्ति तेषामाचार्याणामुक्तिषु मीमांसायां के वयम् । परं तथाप्यात्मावबोधार्थमिदमुदाहरणं परामृशामः—ननु सर्वसहत्वे हेतुभूतकठोरहृदयत्वेनैव राम इति संज्ञिनो वैशिष्ट्यमुच्यते । यदि कठोरहृदयत्वमत्र सर्वसहत्वे हेतुभूतमभविष्यत्तदा राम इति पदमेव न प्रायोक्ष्यत । वैदेही तु कथं भविष्यतीत्यनेनैव दाशरथिप्रतीतेः । तस्मात्कठोरहृदयत्वविशिष्टस्यैव संज्ञिनस्तत्त्वान्तरं ध्वननीयम् । येन मया प्रवासकाले मातृभिः स्थाप्यमाना त्वमयोध्यायामुपेक्षिता सोऽहं शतकोटिकोटिकर्कशचेताः सर्वसहः । नहि मया त्वमाहूता, अपि तु स्वयमागता । यथा—'कृतककुपितैर्बाष्पाम्भोभिः सदैन्यविलोकितैर्वनमपि गता यस्य प्रीत्या धृतापि तथाम्बया । नवजलधरश्यामाः पश्यन्दिशो भवतीं विना कठिनहृदयो जीवत्येव प्रिये स तव प्रियः ॥' यच्चालोचनकारेण पितृमरणादिदुःखसहनक्षमत्वं ध्वनिविषयीकृतं तदसत् । दुःखस्य विजातीयत्वात् । नहि प्रियाविरहसंतप्तः पुमाञ्जीवतो लोकान्तरितस्य वा पितुः स्मरति ॥

काचिन्मानिनी बहुभिरुपायैरतिनिर्बन्धप्रसादनेन गतकल्पं मानं परित्यक्तुमनाः प्रियं प्रति ब्रवीति—

कोपो यत्र भ्रुकुटिरचना निग्रहो[1] यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः[2] प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ ३८ ॥

तस्यावयोरेवंविदितस्य प्रेम्णस्तदिदमतिगर्हितमधुना वैशसं विनाशो जातः । पश्य, मान्धो भूः । तस्य कस्येत्याह—यत्र प्रणयकलहेषु भ्रुकुटेरभिनय एव रोषः । वाक्पारुष्येणापि मनसो दूषयितुमशक्यत्वाद्वचननिरोध एव यस्मिन्निग्रहः । क्रीडाकमलादिनापि ताडनस्य दुष्करत्वात्परस्परमनुवृत्तिवशीकरणव्यञ्जकमीषद्धसितमेव प्रसादनम् । सामदानाद्युपायानामपि भेदसूचकत्वात् । उभयोरपि तुल्यकालमेव प्रसादनमभिलषितमिति प्रतिपादयितुमन्योन्यशब्दप्रयोगः । दृष्टिक्षेप एव यत्रानुग्रहः । चरणपतनाद्यसंभवे

---

१. 'विग्रहो' इति शृङ्गारदीपिका. २. 'यत्र दृष्टिः प्रसादः' इति शृङ्गारदीपिका.

बाहौ धृत्वोत्थापनादिसंप्रतिपत्तेरभावात् । कीदृशं प्रेम्णो वैशसमित्याह—त्वमुरःस्थलैकधारणीयः पादसमीपे लुठसि, न तु पादयोः । अपराधातिशयाभावात् । न च मे दुर्जन्याः स्वान्तस्थस्य क्रोधशल्यस्य परित्यागः । कोऽर्थः तथा निःशङ्केन किमप्याचरितं यथाहमप्यनन्यशरणा ते दुर्जनी जाता । अवसरोऽलंकारः । यदुक्तम्—'अर्थान्तरमुत्कृष्टं सरसं यदि वोपलक्षणीक्रियते । अर्थस्य तदभिधानं प्रसङ्गतो यत्र सोऽवसरः ॥' यथा—'तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी । निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः ॥' धीराधीरा प्रगल्भा [मध्या] नायिका । चतुर्थवाक्ये यत्रशब्दप्रयोगाभावादुपक्रमभङ्गः ॥

सुतनु जहिहि मौनं पश्य पादानतं मां
न खलु तव कदाचित्कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किंचित् ॥ ३९ ॥

मानिन्या मानत्यागसूचकं बाष्पसलिलमस्तोकं दुर्निवारत्वेन मुक्तम्, प्रतिवचनं च न किंचिदुदीरितम् । किं विशिष्टया । तिर्यगामीलिताक्ष्या अपराधक्षपणलक्षणयापमानलज्जया साचि यथा भवत्येवं बाष्पनिरोधबुद्ध्या समन्तात्संकोचिते अक्षिणी यया सा तथोक्ता तया । क सति । नाथे निर्बन्धेनेति निगदति सति । इति किम् । हे सुतनु, मौनं त्यज । मानजनितातिकार्कश्याद्वाङ्निरोधहृदयाध्माननिरुच्छ्वासात्कुसुमशरजयश्रीकार्मणमङ्गनिर्माणमिदं दुर्दशां मा नैषीरिति भावः । अथवा यदि वचनामृतैरभिषिच्य मां संतप्तं नाह्लादयसि तर्हि चरणपतितं दृष्टिप्रसादेन संभावय । आत्मनः प्रियामानात्मकविप्रलम्भदुःसहताकारणमाह—निश्चयेन तव जातु कदाचिदीदृशः क्रोधो नासीत् । यदि चाभविष्यत्तदा तत्संस्कारवशादिदानीमपि सहिष्ये ॥

कश्चिन्नर्मविदग्धो वियोगी तदेकतानेन मानिनीसर्वस्वमनुध्यायति—

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा[1]
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा[2] ।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि किं लीना विलीना नु किम् ॥ ४० ॥

किं नु शयिता, उतस्विदुपरतैव, अथवान्तःकरणेऽभेदं प्राप्ता, आहोस्विद्द्रवतां ययौ, इत्यमुना संदेहेनानिर्वचनीयावस्था । मदकलकलहंसचञ्चुकोटित्रोटितकोमलमृणालिनीकिसलयवत्परिक्लान्तैरङ्गैः प्राभातिकनीलेन्दीवरवन्मुकुलितेन लोचनयुगलेन विलयं गच्छन्ती वोपलक्ष्येत्यर्थः । तस्यापि तत्कालमानन्देन मन्दचेतनत्वात् । केन क्रमेणैवंविधा बभूवे-

१. 'प्रोद्भिन्न' इति शृङ्गारदीपिका. २. 'काञ्चीप्रदेशाम्बरा' इति शृङ्गारदीपिका.

त्याह—गाढेत्यादि । अतिनिर्भराश्लेषेणावामनौ वामनौ कृतौ यौ कुचौ तत्र प्रकर्षेणोद्भूतः पुलकोद्गमो यस्याः सा तथोक्ता । कथमुल्लापिनीति । मा, मा, मानद मानखण्डन, मा अतिशयेन । मामलमित्यत्र पीडयति क्रियां विना पर्याकुलताद्योतकमर्धोक्तम् । मा मेत्यादि पौनरुक्त्यं च सुन्दरम् । अत्रापि यदि कथ्यते तदा वधू रुष्यति, यदि मौनाय्यते तदा गृहं नश्यति । तथापि करुणबीभत्सस्मारकं मृतेति पदं न मानयामः । तस्मात् 'किं म्लाना शयिता नु किं मनसि मे लीना विलीना नु किम्' इति पठिष्यामः । संशयोऽलंकारः । यदुक्तम्—'वस्तुनि यत्रैकस्मिन्ननेकविषयस्तु भवति संदेहः । प्रतिपत्तुः सादृश्यादनिश्चयः संशयः स इति' ॥

अभिनवस्नुषा प्रथमनर्मारम्भे किं करोतीत्याह—

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।
न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥ ४१ ॥

वस्त्राञ्चलाकर्षिणि प्रिये किंचिदङ्गीकाराज्जातप्रश्रया मुखं नमयति । बलात्कारेण परिरम्भमाकाङ्क्षति सत्यङ्गानि निभृतं यथा भवत्येवमन्यतो नयति । न तु मध्यावत्सभ्रूभङ्गाभ्यसूयाभिनयपूर्वकमपहरति । अत्रैवावसरे स्मितमुखीं वरसंनिधिं प्रापयितुमागतां सहचरीं प्रति क्षिप्तलोचना तत्कालोचितप्रियप्रश्नोत्तरमाख्यातुं न क्षमते । यदि कथमपि सखी नाभविष्यत्तदा सा कदाचित्किंचिदाख्यातुमप्यक्षमिष्यतेत्यर्थः । इत्थमन्तःकरणे लज्जया ताम्यति । लज्जा तस्याः प्रियतमस्वच्छन्दसंगमप्रतिकूला वैरिणी जातेत्यर्थः । यदुक्तम्—'दूरादुत्कण्ठन्ते दयितानां संनिधौ तु लज्जन्ते । ताम्यन्ति वेपमानाः शयने नवपरिणया वध्वः ॥' मुग्धानां च प्रियोपक्रान्तसंभोगच्छलारम्भ एवाकल्पिकेयमिति कौतुकिन्यः सख्यो न सत्वरमेव संनिधानमुज्झन्ति । जातिरलंकारः । यदुक्तम्—'संस्थानावस्थानक्रियादि यद्यस्य यादृशं भवति । लोके चिरप्रसिद्धं तत्कथनमनन्यथा जातिः ॥' 'हरति रुचिरं गाढाश्लेषे यदङ्कमाकुला स्थगयति तथा यत्पाणिभ्यां मुखं परिचुम्बने । यदपि बहुशः पृष्टा किंचिद्ब्रवीत्यपरिस्फुटं रमयतितरां तेनैवासौ मनोऽभिनवा वधूः ॥' रते वामा मुग्धा नायिका । विहृतं नाम नाट्यालंकारः । 'प्राप्तकालं न यद्ब्रूयाद्व्रीडया विहृतं हि तत्' ॥

नापेतोऽनुनयेन यः प्रियसुहृद्वाक्यैर्न यः संहृतो
यो दीर्घं दिवसं विषह्य विषमं यत्नात्कथंचिद्धृतः ।

---

१. 'अशक्ता चाख्यातुं' इति शृङ्गारदीपिका. २. 'हृदये' इति शृङ्गारदीपिका.

अन्योन्यस्य हृते मुखे निहितयोस्तिर्यक्कथंचिद्दृशोः
स द्वाभ्यामतिविस्मृतव्यतिकरो मानो विहस्योज्झितः ॥ ४२ ॥

स प्रणयमानो द्वाभ्यामतिशयेन विस्मृतानुसंधानः स्वयं विहस्य मुक्तः । कयोः सत्योः । दृशोस्तिर्यक्कथंचिन्निक्षिप्तयोः । क । मुखे । कस्य । अन्योन्यस्य । किंविशिष्टे । कोपादन्यतो नीते । दृशोर्मुखे इत्युभयत्रान्योन्यस्येति संबन्धः । स कः । यः प्रसादनेन नापगतः । यः सखीप्रभृतीनां वचनैर्न शमितः । यश्च वियोगव्यथया दीर्घं विषयं च दिवसं प्रतिपाल्य गतकल्पोऽपि लाघवशङ्कया यत्नात्कथंचित्कथमपि व्यवस्थापितः । 'यत्रासंभाव्यभावो वा' इति विषममलंकारः ॥

काचिन्मनस्विनी दयितव्यलीकखेदं सख्याः कथयति—

गते प्रेमाबन्धे प्रणयबहुमाने विगलिते
निवृत्ते सद्भावे जन इव जने गच्छति पुरः ।
तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिवसा-
न्न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥ ४३ ॥

हे प्रियसखि, न वेद्मि किं कारणं यन्मे हृदयं शतधा न स्फुटति । कस्मिन्सतीत्याह—स्नेहानुबन्धे गते । अन्योन्यगुणवशीकारगौरवे गलिते । निष्प्रपञ्चनायां निवृत्तायाम् । विधेये प्रियतमे उदासीन इव गच्छति । किं कृत्वा हृदयं शतधा न याति, तत्पूर्वोक्तं पर्यालोच्य षड्गुण यत्वेति (?) लोकोक्तिः । न परं तदुत्प्रे... । विधेयेन प्रेयसा सह व्यतीतांस्तानिर्वचनीयवासरान् । इदानींतनदुःखं प्राक्तनं सुखमनुस्मृत्येत्यर्थः । यथा किंचिदपक्वपात्रस्थितमवष्टम्भेन विना विदीर्यते तथा मानाध्मातं हृदयं प्रेमाबन्धेन विना किमिति न स्फुटतीत्युक्तिलेशः । नायिकाः खलु सानुरागमपि नायकमीर्ष्याकालेषु निरनुरागं व्यपदिशन्तीत्येकानुरागो नात्र शङ्कनीय इति ॥

चिरविरहिणोरत्युत्कण्ठाश्लथीकृतगात्रयो-
र्नवमिव जगज्जातं भूयश्चिरादभिनन्दतोः ।
कथमिव दिने दीर्घे याते निशामधिरूढयोः
प्रसरति कथा बह्वी यूनोर्यथा न तथा रतिः ॥ ४४ ॥

बहुदिनवियोगिनोर्भागधेयैः संगतयोस्तरुणयोर्यथा लम्भकानुपलम्भकैर्भूयसी गृहदेशान्तरानुभूतवृत्तान्तकथा प्रसरति न तथा संभोगः । किंविशिष्टयोः । महता कष्टेन दीर्घेऽहनि व्यतीते सति रात्रिमधिरूढयोः । अथ च दीर्घे निःश्रेणिकाप्रायं पदार्थमतिक्र-

१. 'विहितयोः' इति शृङ्गारदीपिका. २. 'संबन्धे सपदि स्मितव्यतिकरे' इति शृङ्गारदीपिका. ३. 'प्रेमावेशे' इति शृङ्गारदीपिका. ४. 'उत्कण्ठार्ता' इति शृङ्गारदीपिका. ५. 'याते दीर्घे' इति शृङ्गारदीपिका.

म्योच्चैरधिरुह्यते। प्राप्तयोरित्येतावन्मात्रे वाच्येऽधिरूढयोरिति लक्षणया लब्धोत्कर्षयोरित्यर्थः । यथा कश्चिदभिमानी गजस्कन्धाधिरूढः । संपूर्णमनोरथत्वेन किंचिन्न मानयति । दिन एव किंविशिष्टयोरित्याह—रत्युत्कण्ठाश्लथीकृतगात्रयोः । अस्मिन्दुरात्मनि दिने गते प्राप्तैकान्तौ स्वच्छन्दं रंस्यावह इति सुरतोत्कलिकया शिथिलीकृतान्यङ्गानि याभ्यां तयोः । रिरंसोर्हि प्रतिक्षणमुद्धृषितहृदयस्यावयवाः शिथिलीभवन्ति । पुनः कथंभूतयोः । भूयो नूतनमिव संसारमभिलक्ष्यीकृत्य समृद्धतोः । कदा। चिरात्। कोऽर्थः। अद्य प्राग्विरहनिष्फलत्वेन जगन्नष्टमिति ताभ्यां चिन्तितम् । बह्वीशब्दस्यायमभिप्रायः—रतिरपि बह्वी, परं कथामानेन न भवति । सुरतान्तरालेषु परस्परवृत्तान्तोपवर्णनप्रश्नपरम्पराभिर्विभावरी प्रयाति, निद्रायाः कथैव नास्तीति तात्पर्यम् ॥

दीर्घा वन्दनमालिका विरचिता दृष्ट्यैव नेन्दीवरैः
पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः ।
दत्तः[1] स्वेदमुचा पयोधरभरेणार्घो[2] न कुम्भाम्भसा
स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम् ॥ ४९ ॥

यथा कश्चिद्वशीकर्तुकामः सर्वाधिकारेषु स्वीयमेव कुटुम्बं नियुङ्क्ते तथा दयितस्य गृहं प्रविशतः कृशाङ्ग्याः स्वैरेवाङ्गैर्मङ्गलमुपढौकितम् । किं तदित्याह—दीर्घेत्यादि । उत्सवेषु या तोरणादिसंनिवेशनीया लोकप्रसिद्धा वन्दनमाला सा दृष्ट्यैव दीर्घा सूत्रिता न तु कुवलयैः । कुसुमानामितस्ततः प्रक्षेप ईषद्धसितेनैव निर्मितो न पुनर्मालत्यादिभिः । स्वेदस्यन्दिना स्तनप्राग्भारेणैवार्घः संपादितः, न तु कलशतोयेन । दृष्ट्यैवेत्यत्र य एवकारः स एव स्मितेनेत्यत्र पयोधरभरेणेत्यत्र चानुवर्तते । वन्दनमालिकेत्यत्र स्वार्थे कप्रत्ययः। न तु ह्रस्वार्थे । तथासति दीर्घत्यस्यानुपपद्यमानत्वात् । दैर्घ्येण स्निग्धश्यामलत्वेन पक्ष्मलत्वेन च दृष्ट्यैव यदर्थः साधितस्तैरिन्दीवरैः किम्। सौकुमार्येण वैशद्येन परिमलेन च स्मितेनैव यत्कार्यमनुष्ठितं तेन पुष्पप्रकरेणालम् । काठिन्येन प्रथिम्ना सजलत्वेन गरिम्णा च पयोधरेणैव यद्विधेयं संपादितं तेन कुम्भाम्भसा पर्याप्तमित्याक्षेपोऽलंकारः । इन्दीवरैः कुन्दजात्यादिभिरिति बहुवचनापेक्षया दृष्टिस्मितयोरेकवचनेन महानुत्कर्षः । अयमवश्यं गृहप्रवेशो देशान्तरादागतस्यावधार्यमाणो रसपुष्टिमाधत्ते । अत एव तन्व्येति । 'भाविन्यागमने भर्तुरात्मानं च गृहं च या । अलंकरोति हर्षेण सा स्याद्वासकसज्जिका ॥' इत्यनेन तत्कालं वासकसज्जा नायिका ॥

अद्य त्वमन्यादृशी, वयमेव दुर्जनीभूताः स्मः। युवां पुनरभिन्नावेवेति सस्मितं सख्या प्रभाते पृष्टा काचित्तां प्रत्याह—

कान्ते सागसि शापिते[3] प्रियसखीवेषं विधायागते
भ्रान्त्यालिङ्ग्य मया रहस्यमुदितं तत्संगमाकाङ्क्षया ।

१. 'दत्तम्' इति शृङ्गारदीपिका. २. 'अर्घ्यम्' इति शृङ्गारदीपिका. ३. 'यापिते' इति शृङ्गारदीपिका.

मुग्धे दुष्करमेतदित्यतितमामुद्दामहासं बला-
दाश्लिष्य च्छलितास्मि तेन कितवेनाद्य प्रदोषागमे ॥ ४६ ॥

सापराधे प्रेयसि यद्यस्मद्गृहमागच्छसि तदामुकशपथस्तवेति निवारितेऽप्यमुकसखीवेषं कृत्वा प्राप्ते सति मया निजवयस्याभ्रमेण परिरभ्य प्रियसंगमस्पृहया स दुरात्मा यद्येवं परिरभ्यत इत्यादिकमपि रहस्यमुक्तम्। अथ सिद्धसमीहितेन तेन शठेन मुग्धे यदेतत्त्वयोक्तं तन्मम दुष्करमित्युक्त्वा निरतिशयेन सशब्दहासं यथा भवत्येवं हठादालिङ्ग्याद्य रजनीमुखसमये वञ्चितास्मि। तदाहं तमज्ञास्यम्। भवादृशीनां सखीनामेव भ्रमेण मुष्टास्मीति भावः। अत्र कामुकस्य हठाश्लेष उद्दामहासोपलम्भेन नायिकाया अपसरणं सूचयति। अन्यथा सखीभ्रमेण स्वयं कृताश्लेषायाः कीदृशं हठालिङ्गनम्। मुग्धे इत्यत्र पत्यौ सखीमोहः, रहस्यमुदितमित्यनेन काममोहश्च। रसान्तरं प्रसादनोपायः। यथा—'अभिव्यक्तालीकः सकलविफलोपायविभवश्चिरं ध्यात्वा सद्यः कृतकृतकसंरम्भनिपुणम्। इतः पृष्ठे पृष्ठे किमिदमिति संत्रास्य सहसा कृताश्लेषां धूर्तः स्मितमधुरमाश्लिष्यति वधूम्॥' समयाभियोगश्चायं नायकस्य। यदुक्तम्—'प्रदोषे निशि तमसि च योषितो मन्दसाध्वसाः सुखेन सुरतव्यवसायिन्यो रागवत्यश्च भवन्ति' इति। प्रदोषागमे छलितेत्युचितम्। अन्यस्यापि यस्य भूतादिच्छलनं भवति तस्य प्रदोषे प्रायः श्रूयते। अद्य प्रदोषागमे इत्यत्राद्यशब्दो विचार्यते—यदैव सा छलिता तदैव नायकः संप्रतिपत्तिमात्रं कृत्वा गत इति तावन्न घटते। यतो मानिनी सखीवेषप्रायोपायकष्टप्रसादिता सर्वां शर्वरीं लालनीया भवति। अगते च तस्मिन्प्रदोषसमयानन्तरं कस्याग्रे कथं वा स्ववृत्तान्तं निवेदयति। न चैवंविधानि वाक्यानि मनोगतानि घटन्ते। ततश्चाद्यशब्दः कथमुपपद्यते। अत्रोच्यते—लोकोक्तिमात्रमेतत्। यथा व्यतीतरात्रिवृत्तान्तेऽप्युपवर्ण्यमाने अद्य रात्रौ मया स्वप्नो दृष्ट इति व्यवह्रियते, तथा अद्य प्रदोषागमे इत्यत्रापि॥

कश्चिद्वियोगी प्रियतमामानवृत्तान्तमनुस्मरति—

आशङ्क्य प्रणतिं पटान्तपिहितौ पादौ करोत्यादरा-
द्व्याजेनागतमावृणोति हसितं न स्पष्टमुद्वीक्षते।
मय्यालापवति प्रतीपवचनं सख्या सहाभाषते
तन्व्यास्तिष्ठतु निर्भरप्रणयिता मानोऽपि रम्योदयः॥ ४७ ॥

तन्व्यास्तावदास्तां निरन्तरमनुवृत्तिपरता, यावन्मानोऽपि रमणीयोदयः। सर्वास्ववस्थासु स्पृहणीयेति भावः। कथमित्याह—आशङ्क्येत्यादि। एष प्रणामं करिष्यतीति चेष्टाविशेषैरनुमीय प्रयत्नाद्दुकूलाञ्चलावगुण्ठितौ स्वचरणौ विदधाति। न त्वन्यतो नयति। कोपस्य स्वल्पत्वात्। पूर्वानुभूतस्य कस्यचिन्नर्मण उल्लेखेनाकस्मादागतं हास्यं किमिद-

---

१. 'दुष्कर एष इत्यतितरामुक्त्वा सहासं बलादालिङ्ग्य' इति शृङ्गारदीपिका.
२. 'वचना सख्या समं भाषते' इति शृङ्गारदीपिका.

मिति मिथ्यापदार्थनिर्वर्णनार्थं ग्रीवावलनापदेशेन रुणद्धि । व्यक्तं नावलोकते । मय्यन्यतोमुखेऽन्तरान्तरा पश्यतीत्यर्थः । मयि वाक्श्रिणार्थमालापयुक्ते तदन्तरार्थे सख्या सह विपरीतवचनमाचष्टे । लेशोऽलंकारः । यदुक्तम्—'दोषीभावो यस्मिन्गुणस्य दोषस्य वा गुणीभावः । अभिधीयते तथाविधकर्मनिमित्तः स लेश इति' ॥

यावन्त्येव पदान्यलीकवचनैरालीजनैः पाठिता
तावन्त्येव कृतागसो द्रुततरं संलप्य पत्युः पुरः ।
प्रारेभे परतो यथा मनसिजस्येच्छा तथा वर्तितुं
प्रेम्णो मौग्ध्यविभूषणस्य सहजः कोऽप्येष कान्तः क्रमः ॥ ४८ ॥

मुग्धा यावन्त्येव पदानि व्यलीकवचनैः कृत्वा सखीजनैः शिक्षिता तावन्त्येव कृतापराधस्य भर्तुरग्रे अनन्यसामान्योऽयमर्थो मयैव केवलं साधित इत्यद्भुतातिशयेन शुकवदुच्चार्य तदनन्तरं यथा मनसिजस्येच्छा तथा चेष्टितुमुपचक्रमे । संभोगप्रवणा बभूवेत्यर्थः । यतः प्रेम्णो मौग्ध्येन शोभमानस्याकृत्रिमः कोऽप्यनिर्वचनीयः सुन्दरः प्रकारः । अलीकवचनैरित्यत्रालीकशब्दो व्यलीकवदपराधार्थः । यथा—'अभिव्यक्तालीकः' इत्यादि । तेनापराधे यानि वचनान्युच्यन्ते तैरलीकवचनैः, न तु प्रणयमानार्थं मिथ्यापराधारोपकैरिति । अन्यथा कृतागस इत्यस्यानुपपद्यमानत्वात् । संलप्येति क्त्वाप्रत्ययेन पूर्वकालतायां प्रतिपादितायां मनसिजस्येच्छावर्तनस्य यद्यपि परत्वं स्वतःसिद्धं तथाप्यमुकं कृत्वा पश्चादमुकं कर्तव्यमिति लोकोक्त्या परतःशब्दो नाधिकः ॥

दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ ४९ ॥

अहो आश्चर्यम् । यज्जातापराधे प्रियतमे मानिन्याश्चक्षुरनेकरूपतादक्षिणं संवृत्तम् । कथं तथा जातमित्याह—दूरादित्यादि । यदि तमपराधकारिणं पश्यामि तदा शिक्षां ग्राहयामीत्युत्पन्नकोपावेगेन दूरस्थे तस्मिन्नुत्सुकम् । सविधं प्राप्तेऽवधीरणयान्यतो नीतम् । वक्तुं प्रवृत्ते सत्यथापि निःशङ्को वदन्वर्तेत इत्याक्षेपबुद्ध्या स्फारितम् । बलादालिङ्गितुमुपनते बहुमानयोग्यामेवं मां धृष्यतीति रोषेण लोहितम् । धृतवस्त्रे कोपकुञ्चितभ्रूलतम् । अत्रारुणतासकाशादञ्चितभ्रूलतत्वस्योद्भटत्वेन सर्वेष्वपि भावेषु कोपहेतुकेषु सत्स्वपि विशेषतः कोपाञ्चितेत्यमुना कोपशब्दप्रयोगेण बहुमानरोष एव पोषं प्रापितः ।

---

१. 'सा यावन्ति' इति शृङ्गारदीपिका. २. 'व्याहृत्य' इति शृङ्गारदीपिका. ३. 'प्रारब्धा' इति शृङ्गारदीपिका. ४. 'संकुञ्चितभ्रूलतम्' इति शृङ्गारदीपिका. ५. 'पूर्णेक्षणात्' इति शृङ्गारदीपिका.

तस्मात् 'किंचाश्रितभ्रूलतम्' इति यत्कैश्चित्पाठान्तरं कृतं तद्व्यर्थश्रमपर्यालोचितमरमणीयं च मन्यामहे। पादप्रणामसंपर्के च बहुमानलाभात्प्रसादोन्मुखत्वव्यञ्जकेन बाष्पाम्बुना पूर्णा संवरणायोपक्रान्ता ईक्षणक्रिया यस्य तत्तथोक्तम्। चक्षुरित्येकवचनमवज्ञाद्योतकम्। कर्तृक्रियादीपकमलंकारः॥

अङ्गानामतितानवं कुत इदं [1]कस्मादकस्मादिदं
मुग्धे पाण्डुकपोलमाननमिति प्राणेश्वरे पृच्छति।
तन्व्या सर्वमिदं स्वभावत इति व्याहृत्य पक्ष्मान्तर-
व्यापी बाष्पभरस्तया [2]वलितया निःश्वस्य मुक्तोऽन्यतः॥ ९० ॥

तन्व्या तत्कालमेव पराङ्मुखत्वेनान्यतो विवृत्तया बाष्पोत्पीडो निःश्वासपूर्वमुक्तः। किं कृत्वा। इत्युदीर्य। इति किम्। सर्वमिदमङ्गतानवादिकं स्वभावादेव। क सति। प्राणेश्वरे मया सह यथाकथंचिदेव वाङ्मिश्रणं करोत्वित्यनुसंधानेनेति पर्युनुयुञ्जाने। इति किम्। हे मनोहरे, अवयवानामतिकार्श्यं कस्मादेतत्। कुतश्चेदं पाण्डुगण्डफलकं मुखम्। कथम्। अकस्मात्। कोऽभिप्रायः—मया ते शरीरदौर्बल्यपाण्डुकपोलत्वसदृशं किमपि न चेष्टितमस्तीति स्वापराधापह्नवः। प्राणेश्वरशब्दस्य चायमभिप्रायः—य एव प्राणेश्वरः स एव यदुदासीनवत्पृच्छति तदा जीवितव्यस्य किं कार्यमिति। अत एव निःश्वासपूर्वमन्यतो भूत्वाश्रुमोक्षः कृतः। व्याजोक्तिरलंकारः। यदुक्तम्—'व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम्'। यथा—'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः। हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः'॥

कश्चित्कुपितनायिकाप्रसादनारम्भनिरुपायः कस्यापि रहःसहचरस्याग्रे निवेदयति—

[3]पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः
प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः।
स्फुटो रेखान्यासः कथमपि स ताहक्परिणतो
गता येन व्यक्तिं पुनरवयवैः सैव तरुणी॥ ९१ ॥
ततश्चाभिज्ञाय स्फुरदरुणगण्डस्थलरुचा
मनस्विन्या रूढप्रणयसहसोद्गद्गदगिरा।

---

१. 'कम्पश्च कस्मादयं' इति शृङ्गारदीपिका. २. 'दयितया' इति शृङ्गारदीपिका. ३. एतद्युग्मं शृङ्गारदीपिकायां नास्ति. किं तु दशरूपावलोकस्य चतुर्थपरिच्छेदेऽसूयोदाहरणे धनिकेनामरुशतकनाम्नैव समुद्धृतमस्ति.

अहो चित्रं चित्रं स्फुटमिति निगद्याश्रुकलुषं
रुषा ब्रह्मास्त्रं मे शिरसि निहितो वामचरणः ॥९२॥(युगलम्)

तन्व्या पुरतो वार्तान्तरेऽन्याङ्गनानामोच्चारणचकितोऽहं किंचिदवाञ्चितवदनः प्रतिकूलविधिप्रेरितो वैलक्ष्यात्किंचिल्लिखितुं प्रवृत्तः । अथ मयि लिखत्येव केनाप्यनिर्वचनीयप्रकारेण व्यक्तः स कोऽपि रेखालेखस्तादृशं परिपाकं गतो येन यस्या एव गोत्रस्खलनमापतितं सैव युवतिर्नामापेक्षया पुनरप्यङ्गैरभिव्यक्तिं जगाम । ततश्चित्रनायिकामुपलभ्य तया वामोऽथ च प्रतिकूलश्चरणश्चण्डिम्ना निक्षिप्तः । किंविशिष्टः । रूपकालंकारेण ब्रह्मास्त्रम् । यथा वारंवारमतिप्रहारिणि शत्रावनन्योपायतया ब्रह्मास्त्रं मुच्यते तथा मयि प्रथममपराधिनि पुनर्गोत्रस्खलनकारिणि पश्चादन्याङ्गनाचित्रलेखिनि वामपादो न्यस्त इत्यर्थः । किं कृत्वा । अश्रुकलुषं यथा भवत्येवमित्यभिधाय । इति किम् । अहो आश्चर्यमाश्चर्यमभिव्यक्तम् । कोऽभिप्रायः—लोकाः, पश्यत दुरात्मनोऽस्य तस्यां तदेकतानताम् । गोत्रस्खलने न पर्याप्तमिदानीं तामेव लिखन्वर्तते । किं विशिष्टया सत्या निगद्य । आरूढप्रणयेत्यादि । प्रकर्षं प्राप्तेन प्रेमविशेषेण य एव मे तथा वशीभूत आसीत्स एवायमित्थमुद्वृत्तो जात इत्याश्चर्यकोपव्यञ्जकेन हासेन सह वर्तत इति सहसा उद्गतरोदनस्खना च गीर्यथा स्यात्तथा । कुटस्यादिः कुटादिरिति षष्ठीतत्पुरुषेण कुटादिसंबन्धाल्लिखितुमित्यत्र गुणप्रतिषेधसमर्थनम् । अन्यथा लेखितुमित्येव प्राप्नोति । यथा—'स्पृष्ट्वा स्पृष्ट्वा समस्तं जनमनुलिखता भूरिभाग्याक्षराणि क्षिप्रं विद्वल्ललाटे कथमपि विधिना लेखितुं विस्मृता श्रीः । दत्त्वास्मिन्हंसपादं मलयजतिलकच्छद्मना क्ष्मातलेन्दो हस्ते दत्तैः सुवर्णैः प्रतिकृति भवता शोधितो भालदेशः ॥' यच्च लेखनारम्भे सैव तरुणी व्यक्तिं गता तत्र नायकस्य तन्मयी चित्तवृत्तिर्निमित्तम् । चित्रकला च विलासिनां प्रसिद्धैव । यदुक्तम्—'गीतं वाद्यं नृत्तं चालेख्यं विशेषकपत्रच्छेद्यम्' इत्यादि । विषममलंकारः । यदुक्तम्—'यत्र क्रियाविपत्तेर्न भवेदेव क्रियाफलं तावत् । कर्तुरनर्थश्च भवेत्तदपरमभिधीयते विषमम्' ॥

कश्चिन्नायिकां समासोक्तिभिरनुनयति—

कठिनहृदये मुञ्च भ्रान्तिं व्यलीककथाश्रितां[1]
पिशुनवचनैर्दुःखं नेतुं न युक्तमिमं जनम् ।
किमिदमथवा सत्यं मुग्धे त्वयाद्य विनिश्चितं
यदभिरुचितं तन्मे कृत्वा प्रिये सुखमास्यताम् ॥ ९३ ॥

मामनपराधमुपेक्ष्य मत्संगमं विनैव तिष्ठसीति हेतोः हे कठिनहृदये, अपराधकथाविषयां मिथ्याबुद्धिं त्यज । व्यलीककथाश्रितां न तु व्यलीकाश्रिताम् । व्यलीकस्य कथा-

---

१. 'कथाश्रयां' इति शृङ्गारदीपिका.

पि नास्तीत्यर्थः। परगृहभङ्गव्यसनिनां कर्णेजपानां वचनैरिममिति लद्वैमुख्येनैवंविधदुःखस्थं जनमतिविधेयं मां दुःखं प्रापयितुं न ते युक्तम्। अथवा अलमनेन कियन्मे जीवितेन प्रयोजनम्। तस्मात्सत्यं कथय हे अचेतने, किमिदं त्वया ममोपरि विनिश्चितं किं पर्याप्तम्। हे प्रिये, यत्किंचिदभिवाञ्छितं तन्मे विधाय सुखं स्थीयताम्। तवैव सुखार्थमहमकारणोत्पन्नं मानं त्याजयामि। ममाभावे (?) चेत्तव सुखं तत्किं मानत्याजनेनेत्यर्थः। युक्तमित्यत्र 'नपुंसके भावे क्तः'। तेन 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इत्यादिवत् 'प्रधानक्रियाशक्त्यभिधाने गुणक्रियाशक्तिरभिहितवत्प्रकाशते' इति न्यायेनेमं जनमित्यत्र न प्रथमा। तत्र तु सांप्रतमित्यत्र द्वितीया न युज्यत इति कर्मविवक्षा॥

रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा
पान्थेनात्मवियोगदुःखपिशुनं गीतं तथोत्कण्ठया।
आस्तां जीवितहारिणः प्रवसनालापस्य संकीर्तनं
मानस्यापि जलाञ्जलिः सरभसं लोकेन दत्तो यथा॥ ९४॥

कस्मिंश्चिद्ग्रामे यामिन्यामध्वगेन मुक्ताश्रुणा तेन प्रकारेण तत्कालोचितं किंचिदुत्कलिकया गीतम्, यथा 'ककुभोत्था विभाषैव निर्दिष्टा याष्टिकेन या। धैवतांसग्रहन्यासाऋहीना मन्द्रमध्यभाक्। समस्वरा च संपूर्णा करुणे मधुकर्यसौ॥' एवंप्रायम्। किं विशिष्टम्। विरहक्लेशसूचकम्। अथ वात्मशब्देन जीवात्मा। अत एवोत्तरार्धम् 'आस्तां जीवितहारिणः' इत्यादि। कीदृशेन। वारिभरालसजलधररसितोद्विग्नेन। अत्र लाक्षणिकेनालसशब्देन गर्भवेदनाक्रान्तयुवतिस्तनितवद्गर्जितस्य निःसीमगम्भीरता व्यज्यते। निशीथे हि निवातनिर्भरं वर्षन्तो बलाहकास्तथैव गर्जन्ति, भवन्ति च वराकाणां वियोगिनामुद्वेजनाहुर्ललिताः। अत एवोक्तमुपाध्यायेन—'या क्रिया मान्मथैर्बाणैः शल्यितेषु वियोगिषु। जलं ददति यत्तस्यै तेनामी जलदाः स्मृताः॥' तथा कथं गीतमित्याह—आस्तां तावत्प्राणहारिणः प्रवासनाम्नो ग्रहणं यावत्प्रेमवर्त्माभिज्ञेन लोकेनोभयरूपस्यापि मानस्य जलाञ्जलिर्दत्तः। लक्षणया लोकान्तरं गतो मान इत्यर्थः। 'त्वं तावदास्व दूरे भृत्यावयवोऽपि ते निहन्त्यहितान्' इत्यादिवदत्र विषमालंकारः॥

कश्चिद्वियोगी मत्तनायिकायाः प्रणयमानमनुस्मरति—

स्वं दृष्ट्वा करजक्षतं मधुमदक्षीबाविचार्येर्ष्यया
गच्छन्ती क नु गच्छसीति विधृता बाला पटान्ते मया।
प्रत्यावृत्तमुखी सबाष्पनयना मां मुञ्च मुञ्चेति सा
कोपप्रस्फुरिताधरा यदवदत्तत्केन विस्मार्यते॥ ९५॥

१. 'सा मुञ्च मुञ्चेति मां रोष' इति शृङ्गारदीपिका.

मया मुग्ध वस्त्राञ्चले गृहीता । किं कुर्वती । गच्छन्ती । कया । ईर्ष्यया । किं कृत्वा । स्वमेव नखपदं दृष्ट्वा । पुनः किं कृत्वा । अविचार्य । यतो मदिरामदमत्ता । मया किं कृत्वा विधृता । नु इति प्रश्ने । क्व गच्छसीत्युक्त्वा । अथ सा वलितवदना सास्रदृष्टिः कोपकम्प्रौष्ठी मां त्यज त्यजेति यदवोचत्तत्केन विस्मार्यते । अपि तु न केनापि । अत एव स्वं करजक्षतं दृष्ट्वा न त्वन्याङ्गनायाः । तस्य तदेकचित्तत्वात् । अत्र बालाशब्दोऽज्ञानमात्रापेक्षया न तु वयोपेक्षया । बालानायिकाविधेयनखपदादीनामवर्ण्यमानत्वात् । ताः प्रत्युत संगमेषु पराङ्मुख्यो भवन्ति । निर्बन्धेन नीवीनिरसनोद्युक्ते प्रेयसि बलात्सुरतप्रतीपं विदधति । किं च मिथ्यानखपदारोपणेऽपि कम्पन्ते । यदुक्तं मुग्धाविस्रम्भणे—'अप्रतिपद्यमानां च भीषयेत् । अहं खलु दन्तपदानि तवाधरे करिष्यामि । स्तनमण्डले नखपदानि । आत्मनश्च स्वयं कृत्वा त्वया कृतमिति ते सखीजनस्य वक्ष्यामि ।' यथानर्घराघवस्य अभिषेकसुग्रीवाङ्के(सुग्रीवाभिषेकाङ्के)—'स्ववपुषि नखलक्ष्म स्वेन कृत्वा भवत्या कृतमिति चतुराणां दर्शयिष्ये सखीनाम् । इति सुतनु रहस्ते भीषितायाः स्मरामि स्मर परिमलमुद्राभङ्गसर्वंसहायाः ॥' मधुमदक्षीबेति रतावसानिकम् । यदुक्तम्—'सव्येन बाहुना परिरभ्य चषकं गृहीत्वा सान्त्वयन्पाययेत् । भृष्टमांसमातुलुङ्गचुक्राद्युपदंशान्मधुरमिदं मृदु विशदमिदमिति विदश्य तत्तदुपाहरेत् । हर्म्यतलस्थितायाश्चन्द्रिकासेवनार्थमासनम् । तत्र चानुकूलाभिः कथाभिरनुवर्तेत । अङ्कसंलीनायाश्चन्द्रमसं पश्यन्त्या नक्षत्रपङ्क्तिव्यक्तीकरणमरुन्धतीध्रुवसप्तर्षिमण्डलदर्शनं च ॥' इति ॥

काचिन्मानिनीं शिक्षयति—

चपलहृदये किं स्वातन्त्र्यात्तथा गृहमागत-
श्चरणपतितः प्रेमार्द्रार्द्रः प्रियः समुपेक्षितः ।
तदिदमधुना यावज्जीवं निरस्तसुखोदया
रुदितशरणा दुर्जातानां सहस्व रुषां फलम् ॥ ५१ ॥

कार्यकार्यपर्यालोचनशून्यतया हे अव्यवस्थितहृदये, कुतो हेतोर्वल्लभोऽवधीरितः । किंविशिष्टः । गृहमागतः । कथम् । तथा । कोऽर्थः । प्रसाद्य संगमाकाङ्क्षया । पुनः कीदृशः । चरणप्रणतः । पुनरपि कथंभूतः । प्रेमार्द्रार्द्रः । लक्षणयातिसरसकोमल इत्यर्थः । कस्मात्समुपेक्षितः, स्वातन्त्र्यात् । मामपृष्ट्वैवेत्यर्थः । तदिदानीं दुरुत्पन्नानां निजक्रुधां फलमनुभव । कीदृशी सती । रुदितशरणा । किं तत्फलमित्याह—निरस्तसुखोदया । कियन्तं कालम् । यावज्जीवम् । जीवोऽपि तव क्षणस्थायीति भावः । रुषामिति बहुवचनेन वारंवारं त्वया कोपं कृत्वा सर्वं विनाशितमिति प्रतीयते । किं स्वातन्त्र्यादित्यत्र स्वातन्त्र्यमेव त्वया कुतः कृतमिति किंशब्दार्थः । अन्यथा स्वातन्त्र्यहेतुके प्रियसमुपेक्षणे सिद्धे किंशब्दोऽधिकः स्यात् । परिकरोऽलंकारः । यदुक्तम्—'साभिप्रायैः सम्यग्विशेषणैर्वस्तु यद्विशेष्येत । द्रव्यादिभेदभिन्नं चतुर्विधः परिकरः स इति ॥' यथा—'उचितपरिणाम॰

रम्यं स्वादु सुगन्धि स्वयं करे पतितम् । फलमुत्सृज्य तदानीं ताम्यसि मुग्धे मुधेदानीम् ॥'

अत्रान्तरे बहवः प्रक्षेपकश्लोकाः सन्ति । तत्र विचारः—यः कश्चित्स्वाञ्श्लोकान्रचयित्वा परकाव्ये प्रक्षिपति स तावन्न प्रसिद्ध्यै । स्वनामलेखनाभावात् । तस्मादेवं संभाव्यते—यद्यस्मिन्सार्वपार्षदे काव्ये मम श्लोका अर्हन्ति तदाहं विशिष्टः कविरिति प्रक्षेपककवेराशयः । तेऽपि सन्तु यथा विसदृशनीरलहरीलेह्यस्वराणां (?) गायनानामोडवप्रयोगेनातोद्यलास्यानुविधानशालिनि रक्तिनिर्भरगीतलास्यमानमनसां प्रविष्टानामातोद्यकराणां ततसुषिरघनावनद्धात्मनि वादित्रे मन्दमुन्मुद्रितनिनादे नायिकानां नानाविधदृष्टिसृष्टिभिराप्यायितविदग्धचेतसां ललितहस्तकचारीचमत्कारेणाञ्चितभ्रमितनमितकुञ्चितस्तिमितक्षिप्तक्षुभितावयवानां कुचकलशनितम्बडम्बरान्तरतरङ्गितोद्वलितललितवलिभागानां क्वचिद्विस्रब्धमिव क्वचित्त्वरितत्वरितमिव क्वचिद्भीतभीतमिव क्वचित्सुप्तसुप्तमिव क्वचिदुन्निद्रितोन्निद्रितमिव सान्द्रमुखरागमनोभवमनोज्ञं नृत्यन्तीनामन्तरेऽष्टचेटकास्तथा निर्वचनीयचमत्काराणाममरुकश्लोकाना मध्ये छन्दोमात्रमेलनेन हासोत्पादकतया च प्रक्षेपकश्लोकाः ते यथा—

'मन्दं मुद्रितपांसवः परिपतज्झांकारिझञ्झामरु-
द्वेगव्यस्तकुटीरकाम्रनिपतच्छिद्रेषु लब्धान्तराः ।
कर्मव्यग्रकुटुम्बिनीकुचभरस्वेदच्छिदः प्रावृषः
प्रारम्भे मदयन्ति कन्दलदलोल्लासाः पयोबिन्दवः ॥'

अमी झञ्झानिलाः शिरोर्तिमुत्पादयन्ति विदुषाम् ॥

'इयमसौ तरलायतलोचना गुरुसमुन्नतपीनपयोधरा ।
पृथुनितम्बभरालसगामिनी प्रियतमा मम जीवितहारिणी ॥'

जीवितहारिणी शाकिनी ॥

'सालक्तकं शतदलाधिककान्तिरम्यं रत्नौघधामनिकरारुणनूपुरं च ।
क्षिप्तं भृशं कुपितया मृगनेत्रया यत्सौभाग्यचिह्नमिव मूर्ध्नि पदं विरेजे ॥'

इयं सा भद्रदेशिनां सर्वस्वं सौभाग्यस्योपरिमञ्जरी (?) ॥

'श्रुत्वाकस्मान्निशीथे नवघनरसितं विश्लथाङ्गं पतन्त्या
शय्याया भूमिपृष्ठे करतलधृतया दुःखितालीजनेन ।
सोत्कण्ठं मुक्तकण्ठं कठिनकुचतटापातशीर्णाश्रुबिन्दु
स्मृत्वा स्मृत्वा प्रियस्य स्खलितमृदुवचो रुद्यते पान्थवध्वा ॥'

वियोगमर्म निगूढं दुःखमेवोपवर्णयन्ति । तद्विपर्ययादियं मिथ्यामरणनिःसृताया योषितो मांचारिका (?) ॥

---

१. इतः प्रभृति प्रक्षिप्तं श्लोकपञ्चकं शृङ्गारदीपिकायामपि नास्ति.

'पीतो यतःप्रभृति कामपिपासितेन तस्या मयाधररसः प्रचुरः प्रियायाः ।
तृष्णा ततः प्रभृति मे द्विगुणत्वमेति लावण्यमस्ति बहु तत्र किमत्र चित्रम् ॥'

नूनं शाकंभरी[1]खनिकर्मकर एष महानुभावः कविः ॥

नूयमियं श्लोककन्था कुतार्किकच्छान्दसवैयाकरणैर्ग्रथिता । यदुक्तमुपाध्यायेन—'संपर्केण कुतर्काणां छन्दोव्याकरणस्पृशाम् । उड्डीयते रसः खण्डैः पावकेनेव पारदः' ॥

बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान्सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥ ९७ ॥

कश्चिन्मानिनीमनुनेतुं संबोधयति—हे मुग्धे । नायिका वक्ति—हे नाथ । नायकः—विमुञ्च मानिनि रुषम् । नायिका—रोषान्मया किं कृतम् । अपि तु न किमपि । कोऽभिप्रायः—न ते किंचिद्विरुद्धमुक्तम् । न च ताडनादिकं कृतम् । नापि तत्र गच्छन्वारितोऽसि । स्वशरीरेण दुरवस्थामनुभवन्ती तिष्ठामि । नायकः—रोषात्त्वया किमपि न कृतमित्येव न परमस्मासु खेदः कृतः । नायिका—खेदस्तस्योपपद्यते योऽपराधी भवति । भवांस्तु न मेऽपराध्यति । विपरीतलक्षणया विधिरत्र । सर्वेऽपराधा मयि । मया यत्त्वमुपेक्षितस्तेनैवमुच्छृङ्खलो जातः । नायकः—उक्तेरभिप्रायमजानन्निव, तत्किं रोदिषि गद्गदेन वचसा । नायिका—कस्याग्रतो रुद्यते । त्वमन्यासक्तो न मे कष्टं जानासि । त्वां च विहाय ममान्या गतिर्नास्तीति भावः । नायकः—पूर्ववत् । नन्वेतन्ममाग्रतो रुद्यते । नायिका—का तवास्मि । उदासीनो मयि सांप्रतं भवानित्यर्थः । नायकः—वल्लभा त्वं मे । नायिका—नास्मीत्यतो रुद्यते । कोऽर्थः—दयिता नास्मि योषित्संबन्धः पुनरस्त्येव । प्रश्नोत्तरमलंकारः । न तु वक्रोक्तिः । शब्दश्लेषकाक्वोरभावात् । यत्किंचिदर्थान्तरमत्र प्रतीयते तद्व्यङ्ग्यमेव । वक्रोक्तेरुदाहरणं चैतत्—'किं गौरि मां प्रति रुषा ननु गौरहं किं कुप्यामि कां प्रति मयीत्यनुमानतोऽहम् । जानाम्यतस्त्वदनुमानत एव सत्यमित्थं गिरो गिरिभुवः कुटिला जयन्ति ॥' 'गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम् । अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ ॥' धीराधीरा मध्या नायिका । 'न मेऽपराध्यति भवान्सर्वेऽपराधा मयि' इत्यनेन धैर्यम् । 'चापल्यरहिता धैर्यं हृद्वृत्तिरविकत्थना' ॥

श्लिष्टः कण्ठे किमिति न मया मूढया प्राणनाथ-
श्चुम्बत्यस्मिन्वदनविनतिः किं कृता किं न दृष्टः ।

---

१. शाकंभरी राजपूतानादेशान्तर्वर्ती 'सांभर' इति प्रसिद्धो लवणाकरः.

नोक्तः कस्मादिति नववधूचेष्टितं चिन्तयन्ती
पश्चात्तापं वहति तरुणी प्रेम्णि जाते रसज्ञा ॥ ५८ ॥

यथा यथा मौग्ध्यमपगतं तथा तथा प्रियसंगमबाहुल्येनोपलब्धे प्रेम्णि आस्वादाभिज्ञा संवृत्ता सती इत्थममुना प्रकारेण तरुणी पश्चात्तापं बिभर्ति । किं कुर्वती । इति स्वमेव नववधूचेष्टितं चिन्तयन्ती । इति किम् । मया मन्दभाग्यया किमिति न प्राणेश्वरः कण्ठे आलिङ्गितः । तस्मिन्परिरब्धुमुद्यते मया भुजाभ्यां निजमुरः किं पिहितमित्यर्थः । अस्मिंश्चुम्बति सति वदनविनतिः किमिति मया कृता । प्रतिचुम्बनं किमिति नारब्धमित्यर्थः । किमिति न दृष्टः । सततं नीरङ्गी[1]लम्बनव्यग्रया सम्यक्कदाचिदपि स्फारीकृतलोचनया नावलोकित इत्यर्थः । नोक्तः कस्मात् । तस्मिन्सविलासमालपति सति प्रत्युत्तरं किं न दत्तम् । अवनतवदनया स्थितमेवेत्यर्थः । तारुण्ये संगमसुखमनुभवन्ती मौग्ध्येन तदाहं वञ्चितेति चिन्तयतीति भावः ॥

काचिदपमानितानुनया पश्चात्तापयुक्ता यदि त्वं तेन विना स्थातुं न शक्नोषि तत्किमिति मानं करोषीति सख्या निर्भर्त्सिता तां प्रत्याह—

श्रुत्वा नामापि यस्य स्फुटघनपुलकं जायतेऽङ्गं समन्ता-
द्दृष्ट्वा यस्याननेन्दुं भवति वपुरिदं चन्द्रकान्तानुकारि ।
तस्मिन्नागत्य कण्ठग्रहनिकटपदस्थायिनि प्राणनाथे
भग्ना मानस्य चिन्ता भवति मयि पुनर्वज्रमय्यां कदाचित् ॥ ५९ ॥

नाहं सर्वदैव मानं करोमि किंत्वत्यन्तकठिनायां मयि निन्द्या मानचिन्ता कदाचिदुत्पद्यते । क्व सति । तस्मिन्प्राणेश्वरे प्रसादनतात्पर्येणागत्य कपोलचुम्बनप्रत्यासन्नस्थानस्थायिन्यपि । कोऽर्थः । यस्मिन्नवसरे चुम्बनं युज्यते तस्मिन्नाहं मानं करोमि । तस्मिन्प्राणेश्वरे कीदृशे । यस्य नामाप्याकर्ण्य व्यक्तसान्द्ररोमाञ्चं ममाङ्गं सर्वतो जायते । यस्य वक्त्रचन्द्रमसमवलोक्येदं वपुरुद्भिन्नस्वेदबिन्दुजालतया चन्द्रकान्तमणिसदृशं भवति । दयितमुखं दृष्ट्वा खिद्यामीति पर्यवसितत्वाद्भिन्नकर्तृकता नाशङ्कनीया । अयमपि श्लोकः प्रक्षेपक इति संभाव्यते । परं विरुद्धो नास्ति । एवंविधा अन्येऽप्यन्तरान्तरा द्वित्राः सन्ति । तेऽप्यविरुद्धा इति व्याख्यास्यन्ते ॥

लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥ ६० ॥

---

१. नीरङ्गी मुखाच्छादनवस्त्रम्. २. 'यत्समन्तात्' इति शृङ्गारदीपिका. ३. 'मम' इति शृङ्गारदीपिका. ४. 'कथंचित्' इति शृङ्गारदीपिका.

Given the thought of perverse attitude

ईर्ष्याविकारसंवरणार्थमाघ्राणच्छद्मना मुखप्रत्यासन्नीकृतस्य लीलातामरसस्योदरे कुरङ्गलोचनायाः श्वासा निःसृत्य निःसृत्य प्रौढापमानजन्मनाभिषङ्गेणान्तर्निरुद्धतया समाप्तिं गताः । किं कृत्वा । अन्याङ्गनाया मण्डनं तदिदं प्रेयसः संक्रान्तमत एव कोपविधायि प्रभाते चिरं दृष्ट्वा । इदं किम् । ललाटपट्टमभितस्तत्प्रसादनपादपतनानुमापकं लाक्षालक्ष्म । तदालिङ्गनशंसिनी केयूरमुद्रा कण्ठे । तल्लोचनचुम्बनसूचको वक्त्रे कज्जलकालिमा । अपरश्च तत्कृतचुम्बनपिशुनो नयनयोस्ताम्बूलरागः । अहेतुरलंकारः । यदुक्तम्—'बलवति विकारहेतौ सत्यपि नैवोपगच्छति विकारम् । यस्मिन्नर्थः स्थैर्यान्मन्तव्योऽसावहेतुरिति ॥' 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्या कषायिता' इत्यनेन खण्डिता नायिका । धृष्टो नायकः । यच्चेदं लीलातामरसं तदवश्यं विरहसंतापप्रतिविधानोपनतसखीजनोपनीतशीतोपचारीयम् ॥

कांचित्प्राणपरित्यागकृताध्यवसाया देशान्तरं प्रस्थितं प्रियं प्रत्याह—

[1]लोलैर्लोचनवारिभिः सशपथैः पादप्रणामैः प्रियै-
[2]रन्यास्ता विनिवारयन्ति कृपणाः प्राणेश्वरं प्रस्थितम् ।
[3]पुण्याहं व्रज मङ्गलं [4]सुदिवसः प्रातः प्रयातस्य ते
[5]यत्स्नेहोचितमीहितं प्रिय मया तन्निर्गतः श्रोष्यसि ॥ ६१ ॥

अन्यास्ताः प्राणलोभेन कृपणाः स्त्रियः न त्वहम् । याः प्रस्थितं प्राणेश्वरं निवारयन्ति । कैः । झलज्झलायमानैर्बाष्पाम्बुभिः । न केवलं तैः । किं तु यदि त्वं यास्यसि तदा तेऽमुकस्य शपथ इति सशपथैश्चरणप्रणामैः । किंविशिष्टैः । अनुरागव्यञ्जकत्वात्प्रियैः । अहं पुनरेवं वच्मि—हे प्रिय, पुण्याहं कल्याणं सुदिनं ते तस्माद्यदृच्छया गच्छ । यच्च तव प्रोषितस्य स्नेहोचितं मया किंचिदीप्सितमस्ति तन्निश्चयेन गतः सन्कस्मादपि पथिकादाकर्णयिष्यसि । अथ च यद्यहमिदानीमेव प्राणान्मुञ्चामि तदा तवामङ्गलं स्यात् । अत एव पुण्याहमित्यादि । पराभवोऽलंकारः । आशीर्वचनाक्षेपश्च । यथा—'गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ इत्याशीर्वचनाक्षेपो यदाशीर्वादवर्त्मना । स्वावस्थां सूचयन्त्यैव कान्तयात्रा निषिध्यते' ॥

काचिन्निजसख्याः स्वयं स्थापितप्रतिष्ठासु भर्तृकायाः स्वरूपं सिद्धसमीहितत्वेनान्यासामग्रे कथयति—

लग्ना नांशुकपल्लवे भुजलता न द्वारदेशेऽर्पिता[6]
नो वा पादयुगे [7]स्वयं निपतितं तिष्ठेति नोक्तं वचः ।

---

१. 'वान्तैः' इति शृङ्गारदीपिका. २. 'अन्यैः' इति शृङ्गारदीपिका. ३. 'धन्याहं' इति शृङ्गारदीपिका. ४. 'सुदिवसं' इति शृङ्गारदीपिका. ५. 'प्रियतम त्वं निर्गतः' इति शृङ्गारदीपिका. ६. 'स्थितं' इति शृङ्गारदीपिका. ७. 'मुहुः' इति शृङ्गारदीपिका.

काले केवलमम्बुदालिमलिने गन्तुं प्रवृत्तः शठ-
स्तन्व्या बाष्पजलौघकल्पितनदीपूरेण रुद्धः प्रियः ॥ ६२ ॥

सा वस्त्राञ्चले प्रियस्य न लग्ना । तथा द्वारदेशेऽर्गलवद्भुजलता न न्यस्ता । नापि चरणयुगले लुठितम् । तिष्ठेति वचनमपि नोक्तम् । कथं तर्हि निवारित इत्याह—काल इत्यादि । यस्मिन्देशान्तरादागत्य मिथुनानि मिलन्ति तस्मिन्मेघमालामलीसमे समये निर्दयः साहसिको गन्तुं प्रवृत्तः सन्कृशाङ्ग्या केवलमश्रुकल्लोलकल्पितनदीपूरेण वल्लभो निषिद्धः । अत्राश्रुनदीपूरेणेति वाक्येन रूपकेण मेघकार्यमश्रुभिरेव कृतमित्यनेन मेघाक्षेपेण परिपुष्टो विप्रलम्भः । औपम्यभेदः । पूर्वालंकारोऽप्यत्र प्रतीयते । यथा—'काले जलदकुलाकुलदशदिशि पूर्वं वियोगिनीवदनम् । गलदविरलसलिलभरं पश्चादुपजायते गगनम्' ॥

काचित्परपुरुषानुरागिणि कस्याश्चिज्जरत्कुलटायाः पुरतः प्रतीकारप्रत्याशया स्वदुःखं निवेदयति—

आस्तां विश्वसनं सखीषु विदिताभिप्रायसारे जने
तत्राप्यर्पयितुं दृशं सुरचितां शक्नोमि न व्रीडया ।
लोकोऽप्येष परोपहासचतुरः सूक्ष्मेङ्गितज्ञोऽप्यलं
मातः कं शरणं व्रजामि हृदये जीर्णोऽनुरागानलः ॥ ६३ ॥

हे मातः, कं शरणं व्रजामि । अपि तु न कमपि । तस्माद्धृदय एव केवलं संतापहेतुत्वेनानुराग एवानलो जरां प्राप्तः । तत्फलं किमपि नासादितमित्यर्थः । कथमित्याह—आस्तामित्यादि । प्रियं जनं प्रति प्रेषणतदानयनादिकार्यसाधके सखीजने विश्वसनं तावदास्ताम् । ताः कस्याप्यग्रे स्फुटित्वा कथयेयुरित्यर्थः । तर्हि स्वयं दूतीविलसितं किमिति नारभ्यते इत्याह—इयं मयि सर्वात्मनानुरक्तेति विदितोऽभिप्रायसारो येन तस्मिञ्जने दृष्टिमप्यारोपयितुं लज्जया न शक्नोमि । का कथा गमनानयनादिकार्यस्य । तर्हि लज्जां परित्यज्य तदवलोकनरसास्वादेनैव किमिति कालो नातिवाह्यत इत्याह—एष स्वपरगृहसंचारी लोकोऽमुकयमुकेन सह वर्तत इत्यादि परोपहासकुशलोऽप्यतिशयेन सूक्ष्मेङ्गितज्ञोऽपि । अपिशब्दः समुच्चये । सूक्ष्मेङ्गितज्ञोऽपि यदि मनसि धृत्वा तिष्ठति तदा कः शङ्कते । असौ परोपहासचतुरोऽपीति तात्पर्यम् । असत्समुच्चयोऽलंकारः । यथा राज्ञः श्रीहर्षदेवस्य—'दुल्लहजणाणुराओ लज्जा गरुई परव्वसो अप्पा । पिअसहि विसमं पेम्मं मरणं सरणं णवर एक्कम् ॥'

---

१. 'सललितां' इति शृङ्गारदीपिका. २. 'दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा । प्रियसखि विषमं प्रेम मरणं शरणं केवलमेकम् ॥' इति च्छाया.

त्वमस्माकमग्रे परं मानस्य वार्तामेव करोषि तत्संनिधौ पुनरन्यैव संपद्यस इति सखीभिः काचिदुपालब्धा स्वदोषं परिहरति—

न जाने संमुखायाते प्रियाणि वदति प्रिये ।
सर्वाण्यङ्गानि किं यान्ति नेत्रतां किमु कर्णताम् ॥ ६४ ॥

अहं किं करोमि समस्तान्येव ममाङ्गानि लोचनतां गच्छन्ति श्रवणतामथवेति न जाने । क्व सति । प्रिये संमुखायाते सति । न परं तथा, अभिमतालापं जल्पति च । तमभिमुखमागच्छन्तमुत्कण्ठया पश्यन्त्यास्तत्पेशलालापानाकर्णयन्त्याश्च ममेन्द्रियान्तराणि स्वव्यापारं परिहरन्तीति तात्पर्यम् । अङ्गशब्दोऽत्रेन्द्रियार्थः । अन्तरङ्गमित्यत्रापि दृष्टत्वात् । उत्तरसंशययथासंख्यान्यलंकाराः । ललितं नाम सात्त्विको नायकगुणः । यदुक्तम्—'शोभा विलासो माधुर्यं गाम्भीर्यं स्थैर्यतेजसी । ललितौदार्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥' यथा—'लावण्यमन्मथविलासविजृम्भितेन स्वाभाविकेन सुकुमारमनोहरेण । किं वा ममैव सखि योऽपि ममोपदेष्टा तस्यैव किं न विषमं विदधीत तापम् ॥' भावप्रगल्भा नायिका ॥

अनल्पचिन्ताभरमोहनिश्चला विलोक्यमानैव करोति साध्वसम् ।
स्वभावशोभानतिमात्रभूषणा तनुस्तवेयं बत किं नु सुन्दरि ॥ ६५ ॥
इति प्रिये पृच्छति मानविह्वला कथंचिदन्तर्धृतबाष्पगद्गदम् ।
न किंचिदित्येव जगाद यद्वधूः कियन्न तेनैव तयास्य वर्णितम् ॥ ६६ ॥
(युग्मम्)

अन्तर्निरुद्धबाष्पगद्गदं यथा भवत्येवं वधूर्न किंचिदेवोत्तरं यदवोचत्तेनैव तयास्य प्रियस्य कियन्न स्वदुःखं वर्णितम् । अपि तु भूयः । किंविशिष्टा सती जगाद, बहुदिवसोपचितेन मानेन विह्वला । क्व सति । सापराधे दयिते इति पर्यनुयुञ्जाने सति । इति किम् । इयं दुर्बला शरीरलता गुरुतरचिन्ताया दुर्वहत्वेन यद्वैचित्त्यं तेन निश्चला निरीक्ष्यमाणैव सती किमिति भयमुत्पादयति । कार्श्येन निश्चेष्टतया चामङ्गलचिन्तां प्रणिददातीत्यर्थः । विशेषेण दृश्यमानैव साध्वसं करोति दूरात्पुनराकृत्यविसंवादेन पूर्ववत्स्वस्थावस्थैव प्रतिभासते । यत आभरणनिरादरतया स्वभावरामणीयका । तथा च प्राग्भारे (?)- णानतिस्तन्मात्रं भूषणं यस्याः सा तथा । 'अङ्गानामतितानवं कुत इदं—' इत्यादिश्लोकवदत्रापि संविधानम् ॥

काचिद्दूती प्रणयापमानितं नायकं संबोधयति—

विरहविषमः कामो [1]वामस्तनूकुरुते तनुं
दिवसगणना[2]दक्षश्चायं व्यपेतघृणो यमः ।

---

१. 'कामं तनुं कुरुते' इति शृङ्गारदीपिका. २. 'दक्षः स्वैरं' इति शृङ्गारदीपिका.

त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ हे
किसलयमृदुर्जीवेदेवं कथं प्रमदाजनः ॥ १७ ॥

हे नाथ, विषमेषुर्युवयोस्तनुं दुर्बलां करोति । किंविशिष्टः । प्रतिकूलः । कीदृशः सन्प्रतिकूलः । विरहे विषमः । संभोगे पुनरनूकूल एवेत्यर्थः । शरीरकार्श्योपन्यासेनैवं प्रतिदिनोत्पद्यमानक्षीणतया कतिपयदिवसैः संभोगयोग्यतैव युवयोरस्तमेष्यतीत्यर्थः । अयमिति प्रत्यक्षनिर्देशेन पुर इव वर्तमानो निरनुक्रोशोऽन्तकश्च दिवसगणनादक्षः एवंविधानपि दिवसांल्लिखयति । संभोगे विप्रलम्भे चायुःक्षयस्तावदस्त्येव । तस्माद्विप्रलम्भे मृत्युर्वरमुतस्वित्संभोग इति यमशब्दस्योपयोगः । देहदौर्बल्येन संभोगपरिहारेण च मान एव व्याधिस्तस्य त्वमपि वशगः । अद्य यावन्मयैवं ज्ञातमासीद्यत्सैव मानव्याधेर्वशगेत्यपिशब्दार्थः । तस्माद्विचिन्तय, एवमुत्पातपरम्परया प्रमदाजनः कथं जीवति । प्रस्तुते एकस्यामपि प्रमदायां प्रमदाजन इति जात्यपेक्षया लोकोक्तिः । अथवा प्रकृष्टो मदो रिरंसालक्षणो मान्मथो विकारो यस्याः सा प्रमदा । सैव विधेयत्वेन जनः । अथवा नायकस्यानेकनायिकास्पृहणीयत्वेन प्रमदासमूह एवास्तु । किंविशिष्टः । किसलयमृदुः । विरहदुरवस्थां सोढुमक्षम इत्यर्थः । अथ च किसलयकोमलं प्रमदाजनमालिङ्ग्य किमिति चरितार्थो न भवसीति । असत्समुच्चयोऽलंकारः ॥

कश्चित्प्रियामानोपशान्ति कस्यचिद्विस्रम्भसंभावितस्याग्रे कथयति—

पादासक्ते सुचिरमिह ते वामता कैवं मुग्धे
मन्दारम्भे प्रणयिनि जने कोऽपराधोपरोधः ।
इत्थं तस्याः परिजनकथाकोमले कोपवेगे
बाष्पोद्भेदैस्तदनु सहसा न स्थितं न प्रवृत्तम् ॥ १८ ॥

तस्यास्तदनन्तरं त्वरितमेव बाष्पोत्पीडैर्न विलम्बितं न च स्यन्नम् । क्व सति । कोपवेगे सति । किंविशिष्टे । सखीप्रायपरिजनस्येत्थं संबोधकथया शिथिले न तु दृढे । कोपवेगस्य कोमलतयाश्रुभिर्न स्थितम् । कोपसत्तया च न प्रवृत्तम् । स्तम्भितैरेव जातमित्यर्थः । इत्थं कथमित्याह—हे अचेतने, इह प्रणयिनि जने सुचिरं चरणलग्ने कैव तव वामता । प्रातिकूल्यं न युज्यत इत्यर्थः । अथ च येन स्वेदरोमाञ्चप्रभृतयो भवन्ति तस्मिन्नपि दयितशरीरस्पर्शे तव कठिनायाश्चेतसि मानस्तिष्ठतीति भावः । ननु सापराधोऽयं वामतां कथं त्यजामीत्याह—अस्मिन्मन्दारम्भे । कोऽर्थः—दोषोद्घोषणे कृतेऽपि निरुत्तरतया नम्रमुखे यथाकथंचित्प्रसादमेवाकाङ्क्षति सति । तस्मादपराधस्य क उपरोधः ।

---

१. 'नैव कान्ते' इति शृङ्गारदीपिका. २. 'कोपने कोऽपराधः' इति शृङ्गारदीपिका. ३. 'परिजनगिरा कोपवेगे प्रशान्ते' इति शृङ्गारदीपिका.

प्रणयिजनस्यैवोपरोधोऽस्त्विति भावः। विरोधोऽलंकारः। यदुक्तम्—'यस्मिन्द्रव्यादीनां परस्परं सर्वथा विरुद्धानाम्। एकत्रावस्थानं समकालं भवति स विरोधः' ॥

काचिन्मनस्विनी दयितमुपालभते—

[१]तथाभूदस्माकं प्रथमम[२]विभक्ता तनुरियं
[३]ततो न त्वं प्रेयानहमपि हताशा प्रियतमा।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
[४]मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥ ६९ ॥

आदौ तावदियमस्माकं तनुस्तथानिर्वचनीयेन प्रकारेणाविभक्ता जाता। संयोगाभावः कदाचिदपि नासीदित्यर्थः। अत एवैक्यप्रतिपादकस्तनुरियमिति प्रयोगः, न तु तनू इमे इति। आवयोरिति वाच्ये प्रणयबहुमानादस्माकमिति। तदनन्तरं न त्वं प्रेयान् अहमपि हताशा न प्रियतमेति ज्ञानमविभागेऽपि भेदमाचष्टे। तदतिशायी तादात्म्येन स्त्रीपुरुषभेदोऽपि निवृत्त इत्यर्थः। इदानीं गवामिव त्वमस्माकं पतिः वयमप्यग्निसाक्षितया परिणीता इति यावज्जीवं भर्तव्या इति कलत्रम्। न तु प्रेमगन्धोऽपि। तदेतस्मादपि किमन्यत्। केवलं त्वयि पराङ्मुखे येन गजोन्मूलितकोमलमृणालनालन्यायेन विशुष्कास्तेन तेषां वज्रकर्कशानां प्राणानामिदं नाथकलत्रव्यवस्थारूपं फलमासादितम्। अथ च कारणानुरूपं कार्यमिति कर्कशानां फलमपि कर्कशमेवेत्यर्थः ॥

मुग्धे मुग्धतयैव नेतु[५]मखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि।
[६]सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥ ७० ॥

काचिदमुना प्रकारेण सख्या प्रतिबोधिता सती प्रतिवचनमाह—नीचैः शंस। यस्मात्त्वय्युच्चैरुच्चरन्त्यां मम हृदये कृतास्पदः प्राणेश्वरः श्रोष्यति। तवोपरि क्रुद्धो भविष्यतीति भावः। अथ च प्राणनाथोऽयं यस्य हस्ते स जयतीति(?) यद्यहमनेन सह विप्रतिपद्ये तदा मे प्राणान्गृहीत्वा तिष्ठतीति। अत एव भीतानना। संकुचितत्वेन भीतमिवाननं यस्याः सा तथा। इयं च मुग्धा तदेकताने हृदि प्राणेश्वरं साक्षादेव स्थितं मन्यते। एवं कथं प्रतिबोधितेत्याह—हे मुग्धे, बाल्यदुर्ललितेनैव सर्वः कालोऽतिवाहितुं कस्मादारभ्यते त्वया। केवलं मुग्धेत्याशङ्कनीया भविष्यसि। तस्मादीर्ष्याकारणं विनापि मानं धारय। माने धृते कथमवस्थातुं प्रभविष्यामीत्याह—धृतिमवस्थापय। न-

---

१. 'पुरा' इति शृङ्गारदीपिका. २. 'अविछि(भि)न्ना' इति शृङ्गारदीपिका. ३. 'ततोऽनु त्वं प्रेयान्वयमपि हताशाः प्रियतमाः' इति शृङ्गारदीपिका. ४. 'हतानां' इति शृङ्गारदीपिका. ५. 'अखिलं कालं' इति शृङ्गारदीपिका. ५. 'सख्येदं' इति शृङ्गारदीपिका.

स्वयं विना कारणैः स्थातुं न शक्नोमि तेन सह बाष्पाकारेण(?)इति बभ्रामीत्याह—प्रेयसि विषये प्राञ्जलतां परित्यज। मोट्टायितं नाम नाट्यालंकारः। 'मोट्टायितं तु तद्भावभावनेष्टकथादिषु'। यथा पद्मगुप्तस्य—'चित्रवर्तिन्यपि नृपे तत्त्वावेशेन चेतसि। व्रीडार्धवलितं चक्रे मुखेन्दुमवशैव सा'॥

एष प्रक्षेपकश्लोकोऽपि व्याख्यायते। काचिज्जरदभिसारिका नवनिष्पन्नस्वैरिणीं प्राह—

क्व प्रस्थितासि करभोरु घने निशीथे
प्राणाधिको[1] वसति यत्र जनः प्रियो[2] मे।
एकाकिनी बत[3] कथं न बिभेषि बाले
नन्वस्ति पुङ्खितशरो मदनः सहायः॥ ७१॥

मणिबन्धकनिष्ठयोरन्तरं करभः। तदाकारावूरू यस्यास्तस्याः। यथापूर्वं पीवरतया ऊर्वोर्गौरवेण कथं गन्तुं शक्ष्यसीत्याशयेन संबोधनं हे करभोरु, निर्भरेऽर्धरात्रे क्व चलितासि। यथा मरणाध्यवसिता यदृच्छया मनोगतमाचष्टे तथा मन्मथोन्मत्ततया दुष्कराभिसारप्रवृत्ता सती उत्तरमाह—जीवितादप्यधिको यत्र स्थाने मम वल्लभो वसति। किंभूतः। जनो विधेयः। इत्युभयानुरागः। पूर्वा पुनः पृच्छति—हे बाले, असहाया केन प्रकारेण न बिभेषि। बतशब्दः खेदार्थो बालाशब्दवत्। सोल्लुण्ठं स्वैरिण्युत्तरं ब्रूते—ननु विद्यते सज्जितसायको मदनः सहायः। शरप्रहारोन्मुखमन्मथहेतुकोऽयमारम्भ इत्यर्थः। सहायो हि गन्तव्यं स्थानं प्रापयति। ननु सहायो यं सहायिनमनुगच्छति न तु तमेव प्रहर्तुं शरं पुङ्खयति तत्कथमत्र मदनः सहायः। सत्यम्। ईदृशमेवात्र साहाय्यं यत्पुङ्खितशरसज्जितमेव सहायी गन्तव्यं स्थानं प्राप्यते। यथा हन्यमानस्वार्थस्येव दर्शनेन्द्रियस्य तमसि नीलिमोपलम्भः। अथवा नन्वस्ति पुङ्खितशरो मदनः सहाय इति सोल्लुण्ठम्। अहं किं करोमि, यद्यद्विषमशरः कारयति तदेव करोमि। यथा विपरीतलक्षणायाम्—'उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्। विदधदीदृशमेव सदा सखे सुखितमास्व ततः शरदां शतम्॥' प्रश्नोत्तरमलंकारः॥

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कैश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः[4]।
मुग्धा कुड्मलिताननेन्दु[5] ददती वायुं स्थिता तत्र सा
भ्रान्त्या धूर्ततयाथवा[6] नतिमृते तेनानिशं[7] चुम्बिता॥ ७२॥

कश्चित्कामुकोऽन्याङ्गनास्वच्छन्ददष्टौष्ठो नायिकया क्रीडातामरसेन ताडितः सँल्लो

---

१. 'प्राणेश्वरः' इति शृङ्गारदीपिका. २. 'मनः प्रियः' इति शृङ्गारदीपिका. ३. 'वद' इति शृङ्गारदीपिका. ४. 'प्रेयान्' इति शृङ्गारदीपिका. ५. 'कान्ता कुड्मलिताननेन' इति शृङ्गारदीपिका. ६. 'तदा' इति शृङ्गारदीपिका. ७. 'तेनाभवत्' इति शृङ्गारदीपिका.

चने मुद्रयित्वा स्थितः । किंविशिष्ट इव । कैतवेन कुशेशयकिंजल्कदूषितदृष्टिरिव । अथ सा मुग्धा नायमधरक्षतप्रकाशापह्नवार्थमभिनयं करोति, किं तु मत्प्रहारदूषितदृष्टित्वेन व्यथित एवेति या भ्रान्तिस्तया । अथवाभिनयं जानाति परं प्रेम्णः कुटिलस्वरूपत्वाल्लुण्ठनार्थं या धूर्तता तया मुकुलिताननमृगाङ्कं यथा भवत्येवं वदनमारुतं निश्चला सती तस्य लोचनयोर्ददती तेन प्रणामोपायं विनैव सिद्धसमीहितेन वारंवारं चुम्बिता । भ्रान्तिपक्षे प्रियतमस्यापराधग्रहणं तावद्दूरत एवास्ताम्, प्रत्युत प्रहरणीकृतपङ्कजकिंजल्ककल्कदूषितदृष्टिरिति स्वयमपराधिनी जाता । अतः कुड्मलिताननेत्यनेनानुल्बणमुखमारुतवितरणप्रयत्नः । अन्यथा चुम्बनार्थमभियुक्ता कोपेन पराङ्मुखी भवति । मौग्ध्यमप्यतस्मिंस्तदिति प्रत्यय एव ; न तु वयोमौग्ध्यम् । धूर्ततयेत्यनुपपन्नत्वात् । धूर्ततापेक्षया च स्थितेत्यत्र प्रियप्रत्यासत्तिजनितेन त(ह)र्षातिरेकेणापराधविस्मरणं हेतुः । अत एव प्रणत्युपायं विनैव तेन चुम्बिता । अत्र केचिद्वायुपदेन जुगुप्साश्लीलमिति दोषमाचक्षते । तद्यदि कीरदेशे कुड्मलिताननेन्दुपदसंनिधावपि कमलपरिमलोद्गारिणो मुखमारुतस्य प्रतीतिर्न भवति भवति चाश्लीलप्रतीतिस्तदा वाग्देवतादेश इति व्यवसितव्य एवासौ । किं तु ह्लादैकमयीवरलब्धप्रसादौ काव्यप्रकाशकारौ प्रायेण दोषदृष्टी येनैवंविधेष्वपि परमार्थसहृदयानन्दमन्त्रे(प्रदे)षु सरसकविसंदर्भेषु दोषमेव साक्षादकुरुताम् । उक्तं च भट्टवार्तिके—'न चाप्यतीव कर्तव्यं दोषदृष्टिपरं मनः । दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥' इति ॥

काचित्सखी कोपनिर्धूतभर्तृकाया नायिकायाः पश्चात्तापमपरस्याः प्रतिपादयति—

स्फुटतु हृदयं कामः कामं करोतु तनुं तनुं
न सखि चपलप्रेम्णा कार्यं पुनर्दयितेन मे ।
इति सरभसं मानावेशादुदीर्य वचस्तया
रमणपदवी सारङ्गाक्ष्या निरन्तरमीक्षिता ॥ ७३ ॥

तया कुरङ्गलोचनया गतवतो रमणस्य पदवी निरन्तरं निर्वर्णिता । किं कृत्वा । इत्यमुना प्रकारेणापर्यालोचिताध्यवसितत्वेन सरभसं यथा भवत्येवं मानावेशवशाद्वचनमुच्चार्य । इति कथम् । हे सखि, संततचिन्ताप्राग्भारेण हृदयं मे विदीर्यताम् । स्वेच्छया मन्मथस्तनुं दुर्बलां करोतु । क्षणिकप्रेम्णा प्रियेण न किंचित्प्रयोजनम् । धृत्यौत्सुक्ये व्यभिचारिभावौ ॥

काचित्कान्तैकान्तवृत्तान्तं सख्याः कथयति—

गाढाश्लेषविशीर्णचन्दनरजःपुञ्जप्रकर्षादियं
शय्या संप्रति कोमलाङ्गि परुषेत्यारोप्य मां वक्षसि ।

---

१. 'कोपाटोपात्' इति शृङ्गारदीपिका. २. 'सशङ्कितं' इति शृङ्गारदीपिका. ३. 'पश्याश्लेष' इति शृङ्गारदीपिका.

गाढौष्ठग्रहपूर्वमाकुलतया पादाग्रसंदंशके-
नाकृष्याम्बरमात्मनो यदुचितं धूर्तेन तत्प्रस्तुतम् ॥ ७४ ॥

तेन धूर्तेन स्वच्छन्दमधरपीडनपूर्वकमनङ्गपर्याकुलतया चरणाग्रस्थाङ्गुलियन्त्रेण मन्मितम्बसिचयं मोचयित्वा तत्कालयोग्यमात्मनो यत्समीहितं तत्प्रक्रान्तम्। अत्र संनिवेशवशेन पुरुषायितम्। तथा आत्मनो यदुचितं न तु मम। तेनाग्राम्यत्वं लज्जा च। किं कृत्वा। इति हृदये मामारोप्य। इति किम्। हे सुकुमाराङ्गि, इदानीमिदं तल्पं कर्कशम्। कस्मात्। निर्भरमालिङ्गनोद्घटितचन्दनरजःपुञ्जप्रसञ्जनात्। इयं च नायिका प्रौढत्वेन मनस्विनी पूर्वमासीत्। अन्यथा सात्त्विकस्वेदेन चन्दनरजो नोपपद्यते॥

कथमपि कृतप्रत्याख्याने प्रिये स्खलितोत्तरे
विरहकृशया कृत्वा व्याजं प्रकल्पितमश्रुतम्।
असहनसखीश्रोत्रप्राप्तिप्रमादससंभ्रमं
विगलितदृशा शून्ये गेहे समुच्छ्वसितं पुनः ॥ ७५ ॥

सापराधे प्रिये कथमपि प्रणामशपथादिभिः कृतनिराकरणे सति। अथ तस्यैव गोत्रस्खलितावसरे सुबहुदिवसमानात्मकविरहदुर्बलतया यथाकथंचित्संगमलौल्येन संप्रतिपित्सया परिजनव्यापारादिकं व्याजं विधायाश्रुतं नाटितम्। अथ चासहनवयस्याकर्णेऽन्याङ्गनानामप्राप्तिः सैव प्रमादस्तेन पर्याकुलं यथा भवत्येवं बाष्पायितदृष्ट्या शून्ये वेश्मनि पुनः समुच्छ्वसितम्। निवृत्ते रुदिते यदि प्राणी रुदितहेतुभूतां दुरवस्थामनुस्मरति तद्वेत्कम्पितहृदयः पुनरुच्छ्वसिति। संगमलोभेन सैव नायिका परगोत्रस्खलनं सहते न तु सखी। तस्मात्तयैवं चिन्तितं यद्येतद्गोत्रस्खलनमसहनसखीकर्णे प्रमादात्पतितं भवति तदाहमपि लघ्वी कथं जीवामि। अतिबहुमानसंभावनायाः ससंभ्रममिति विशेषणम्॥

आदृष्टिप्रसरात्प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विच्छिन्नेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति।
दत्त्वैकं सशुचा गृहं प्रति पदं पान्थस्त्रियास्मिन्क्षणे
मा भूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम् ॥ ७६ ॥

कयाचिदध्वगवध्वा सकलं दिवसं यावद्दृष्टिः प्रसरति तावदन्तरे दयितस्यागमनपद्धतिमुद्ग्रीविकया वीक्ष्य प्राणनिरपेक्षतारम्भकं निर्वेदं प्राप्तया वासरान्ते विरलसंचारेषु वर्त्मसु तमसि सम्यगुत्कटं प्रसरति सति निष्प्रत्याशया सशुचा गृहं प्रति पदमेकं क्षिप्त्वा-

१. 'ग्रहपीडनाकुलतया' इति शृङ्गारदीपिका. २. 'कृतप्रत्यापत्तौ' इति शृङ्गारदीपिका. ३. 'प्राप्तिं विशङ्कय' इति शृङ्गारदीपिका. ४. 'विवलितदृशा' इति शृङ्गारदीपिका. ५. 'विश्रान्तेषु' इति शृङ्गारदीपिका.

स्मिन्नेवान्तरे कदाचिदागतो मा भूदिति प्रत्याशया औत्सुक्याद्वेगविवर्तितकंधरं यथा भवत्येवं पुनः पृष्ठतो विलोकितमिति तदेकतानेन प्रीतिप्रकर्षः । पथिष्विति बहुवचनेन सर्वमार्गेषु प्रियस्यागमनपदवी निर्वर्णितेत्यर्थः । पान्थस्त्रियेत्येकवचनेन विरहहृद्रोगभेषजात्मकप्रबोधनवाक्यप्रस्तावनादिभिराश्वासदायिनी वयस्यापि तस्या नास्तीति भावः । तदेवं प्रवासात्मको विप्रलम्भोऽप्येष करुणप्राय एवेति मर्मणि स्पृशति । परमप्रेतनश्लोकस्यौचित्येन रसिकाः संजीवन्ति । 'दूरदेशान्तरस्थे तु कार्यतः प्रोषिते प्रिये' इति प्रोषितभर्तृका नायिका ॥

आयाते दयिते मनोरथशतैर्नीत्वा कथंचिद्दिनं
वैदग्ध्यापगमाज्जडे परिजने दीर्घां कथां कुर्वति ।
दष्टास्मीत्यभिधाय सत्वरपदं व्याधूय चीनांशुकं
तन्वङ्ग्या रतिकातरेण मनसा नीतः प्रदीपः शमम् ॥ ७७ ॥

कृशाङ्ग्या रत्यर्थे कातरेण मनसा विशिष्टया प्रदीपो विध्यापितः(निर्वापितः) । किं कृत्वा । द्रुतपदं प्रदीपसमीपमेत्य चीनदेशोद्भवं वस्त्रं विशेषेणास्फाल्य । एतदेव किं कृत्वा । इति मिथ्याभिधाय । इति किम् । दष्टास्मीति । वृश्चिकादिना हि दष्टो विश्रृङ्खलवस्त्राञ्चलचरणविन्यासप्रक्रियोद्भ्रान्तो दीपविध्यापनभाण्डपातनादिकमवश्यं करोति । क्व सति । दयिते मनोरथशतैरायाते सति । पुनरपि किं कृत्वा दीपः शमितः । उभयत्र संबन्धान्मनोरथशतैरेवमेवमुपालम्भपरिरम्भचुम्बनादिकं करिष्यामीति स्वरूपैर्महता कष्टेन दिनमतिवाह्य । ननु व्याजेन दीपमुपशमय्य किमिति रतिमाकाङ्क्षतीत्याह—वैदग्ध्येत्यादि । इदानीं कीदृशोऽवसरः । कीदृशमत्रत्यानां चेतः । किमस्माभिः कर्तव्यमित्यादिवैदग्ध्याभावान्मूर्खे परिजने गृहदेशान्तराकथां दीर्घां कुर्वति । इयं च कथा संभोगान्तरायत्वाद्विद्विष्टा । यदुक्तम्—'या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी । परहिंसात्मिका या च न तामवगिरेद्बुधः ॥ नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया । कथां गोष्ठीषु कथयंल्लोके बहुमतो भवेत् ॥ लोकचित्तानुवर्तिन्या क्रीडामात्रैककार्यया । गोष्ठ्या समाचरंल्लोके नृणां बहुमतो भवेत् ॥'

कश्चिद्विरही प्रियतमामनुध्यायति—

आलम्ब्याङ्गणवाटिकापरिसरे चूतद्रुमे मञ्जरीं
सर्पत्सान्द्रपरागलम्पटरटद्भृङ्गाङ्गनाशोभिनीम् ।
मन्ये त्वां तनुमुत्तरीयशकलेनाच्छाद्य बाला स्फुरत्कण्ठध्वाननिरोधकम्पितकुचश्वासोद्गमा रोदिति ॥ ७८ ॥

१. 'गत्वा वासगृहे जडे' इति शृङ्गारदीपिका. २. 'चेलाञ्चलम्' इति शृङ्गारदीपिका. ३. 'वापिका' इति शृङ्गारदीपिका. ४. 'रणत्' इति शृङ्गारदीपिका.

मन्येऽवश्यमस्मिन्समये मुग्धा रोदिति। किंविशिष्टा। स्फुरणानुमेयो यः कण्ठध्वानस्तस्य निरोधस्तेन कम्पितौ कुचौ येन तादृशः श्वासोद्गमो यस्याः सा तथोक्ता। किं कृत्वा। निजां कृशां शरीरलतामुपरितनांशुकशकलेन पिधाय। पुनः किं कृत्वा। रसालशाखिनि मञ्जरीमालम्ब्य। किंविशिष्टाम्। सर्पत्सान्द्रपरागो येषु। ते च रजस्यसंभवायोग्यतया मधुनि मधुलम्पटा मधुकराः प्रसरन्ति। घने कुसुमरजसि परिमललोभेन लम्पटा रटन्तो ये भृङ्गास्तेषामङ्गनाश्च ताभिः शोभत इत्येवंशीला ताम्। चूतद्रुम एव क इत्याह—यत्र मया सह क्रीडितं यत्रैव च पिष्टविकाराशन(?)द्यूतपणव्यतिकरे जयपराजयव्यवस्थया विलसितं तस्या अङ्गणवाटिकायाः प्रदेशे। स्वामित्यनेन विशेषध्वनिना संप्रति तस्यास्तनुरेवेत्यर्थः। प्राणानां गतकल्पत्वात्। यः शाखादिकमवलम्ब्य तिष्ठति तस्याङ्गमुद्घाटितं भवति। तथापि विकलतयोत्तरीयशकलेनाच्छाद्य न तु सावधानतया समस्तेन। चूतद्रुमालम्बनपूर्वकं संस्थानमपि प्राणजिहासया दुष्करप्रायम्। मुकुलिताम्रदर्शनस्यापि विरहिणामशक्यत्वात्। यथा मालतीमाधवे—'धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते मार्गे गात्रं क्षिपति बकुलामोदगर्भस्य वायोः। दावप्रेम्णा सरसबिसिनीपत्रमात्रान्तरायस्ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान्॥' अङ्गनवाटिका च शृङ्गारिणां भवत्येव। यदुक्तम्—'तत्र भवनमासन्नोदकं वृक्षवाटिकासहितं द्विवासगृहं कारयेत्॥ [अथ च मूलगृहद्वारि सहकारारोपणं सुप्रसिद्धम्। यदुक्तम्—'किं द्वारि दैवहतिके सहकारकेण संवर्धितेन विषपादप एष पापः। अस्मिन्मनागपि विकासविकारभाजि भीमा भवन्ति मदनज्वरसंनिपाताः॥' इति॥]

काचित्प्रोषितभर्तृकात्मानमधिक्षिपति—

यास्यामीति समुद्यतस्य गदितं विस्रब्धमाकर्णितं
गच्छन्दूरमुपेक्षितो मुहुरसौ व्यावृत्य तिष्ठन्नपि।
तच्छून्ये पुनरास्थितास्मि भवने प्राणास्त एते दृढाः
सख्यस्तिष्ठत जीवितव्यसनिनी दम्भादहं रोदिमि॥ ७९॥

हे सख्यः, स्वस्थावस्थया तिष्ठत मद्विषये नाधृतिः कार्या। यतोऽहं जीविताकाङ्क्षिणी च्छद्मना रोदिमि। यदि च प्राणनिरपेक्षा भवामि रोदिम्येव न। किं च, दयितस्य प्रवासार्थमुद्यतस्य यास्यामीति वचनं मया विस्रब्धं यथा भवत्येवमाकर्णितम्। गच्छन्सन्मदपेक्षया वारंवारमसौ व्यावृत्य तिष्ठन्नपि दूरं यावदुपेतः। तदैव किल जीवितत्यागावसर आसीत्। तस्मादनेकसङ्ग्रामनिर्व्यूढास्मि। इदानीं पुनर्यस्मिन्नेव भवने तेन सह विलसितं तस्मिन्नेवा वज्रमयी आस्थितास्मि। त एते चण्डालचरिताः प्राणा अपि दृढा एव। अत्र चायमुक्तेरुल्लेखः—पूर्वार्धे यद्यहं यास्यामीति गदिते पर्याकुलीभवामि तदा च गच्छन्तं निवारयामि। यदि जीविताकाङ्क्षिणी भवामि। तस्माद्विस्रब्धचेष्टागमनोपेक्षिणी च किं न भवामि इति मे पूर्वं निश्चितमासीत्। इदानीं कस्मादपि दुर्दै-

वादेवंविधा कर्कशा संवृत्तास्मि । गदितमित्यत्र भावे क्तः । अत्राविवक्षितवाच्यस्य ध्वनेर्भेदोऽत्यन्ततिरस्कृतवाच्यो नाम । यथादिकवेर्वाल्मीकेः—'निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते' इति ॥

काचित्सखी नायिकां भीषयित्वा मानग्रहापस्मारान्मोचयति—

अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृद-
स्त्वयाकाण्डे मानः किमिति सरले संप्रति कृतः ।
समाकृष्टा ह्येते प्रलयदहनोद्भासुरशिखाः
स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः ॥ ८० ॥

धूर्तविदग्धानां कुटिलमनोज्ञेषु चेष्टितचमत्कारेषु प्रविश्य क्रीडितुं न जानासीति हे सरले, तस्मिन्नेवावसरे तव दयितोऽन्याङ्गनानवरङ्गस्नेहवागुरायां पतित इत्यकाले संप्रति त्वया किमिति मानः कृतः । किं कृत्वा । प्रेम्णः परिणतिमनालोच्य । दिनानि पञ्च यथा तथास्तु । अक्षिणी निमील्य समयोऽतिवाहनीयः । पानीयमवश्यं पानीयवर्त्मन्यागमिष्यतीत्यादि किमपि न संप्रधारितमित्यर्थः । न केवलमिदं कृत्वा, एवंविधोपदेशपेशलानस्मादृशान्सुहृदोऽप्यनादृत्य । इदानीं पुनः किं कर्तुं याति । यतः प्रलयदहनस्येवोद्भासुराः शिखा येषां तेऽमी स्वहस्तेनाङ्गारास्त्वया सम्यगाकृष्टाः । उपाख्यानमेतत् । अथ च देहदाहात्मक उपन्यासः । तस्मादिदानीं पुनः पर्याप्तमरण्यरुदितैः । लोकोक्तिरियम् । अथ चारण्यप्रायं सर्वमिदानीं ते शून्यमासीत् ॥

कश्चिन्मनस्विनीमनुनयति—

कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।
मुहुः कण्ठे लग्नस्तरलयति[1] बाष्पः स्तनतटं[2]
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥ ८१ ॥

हे निरनुरोधे, पादोपान्तेऽपि लुठतोऽति मे भणितं न करोषि मन्युस्ते वल्लभो जातः । किंचिदुपेक्षालेशेनान्तर्गर्भितेयमुक्तिः । अत एव न तु वयमित्यौदासीन्यव्यञ्जकं बहुवचनम् । कथं मन्युरेव प्रियकार्यं करोतीत्याह—कपोल इत्यादि । विषादानुभावतया यस्मिन्सततं मुखं न्यस्तं तस्य करतलस्य निरोधेन कपोले पत्राली प्रोञ्छिता । स्वेनाननुभूतत्वात् । सुधास्वादुरयमित्यनिर्वचनीय ओष्ठरसो निःश्वासैः शोषितः । अन्तनिरुद्धतया कण्ठे सक्तो बाष्पः स्तनतटं कम्पयति । अपह्नुतिरलंकारः ॥

शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।

१. 'तरले' इति शृङ्गारदीपिका. २. 'स्तनतटीं' इति शृङ्गारदीपिका.

विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला[1] चिरं चुम्बिता ॥ ८२ ॥

व्रीडानम्रवदना बाला वल्लभेन स्मयमानेन चिरं चुम्बिता । किं कृत्वा लज्जानम्रमुखी । पत्युः कपोलस्थलीं जातपुलकामिति हेतोर्जाग्रदवस्थाशंसिनीं विलोक्य । कपोलावलोकनमेव किं कृत्वा कृतम् । निद्राव्याजमुपागतस्य मुखं परिचुम्ब्य । कथम् । विस्रब्धम् । विस्रब्धचुम्बनमेव किं कृत्वा कृतम् । सुचिरं निर्वर्ण्य । मुग्धा ह्यन्यदा लज्जासाध्वसाभ्यां पराङ्मुखीकृताः क्व दयितमुखनिर्वर्णनचुम्बनरसमनुभवन्ति । सुचिरं निर्वर्णनमेव किं कृत्वा कृतम् । शयनात्स्तोकमुत्थाय । कथम् । प्रबोधशङ्कया शनैः । स्तोकोत्थानमेव किं कृत्वा कृतम् । मा कदाचिदपि कोऽपि मां पश्येदिति शङ्कया शून्यमपि वासगृहं विशेषेण दृष्ट्वा । (अत्र भिन्नकर्तृकत्वशङ्का न कार्या । लज्जाक्रियापेक्षया समानकर्तृकत्वात् ।) नायिकायाश्च स्वाभिप्रायचुम्बनमेतत् । यदुक्तम्—'सुप्तस्य मुखमालोकयन्त्याः स्वाभिप्रायेण चुम्बनं रागोद्दीपनम्' इति । स्वाधीनपतिका मुग्धा नायिका ॥

लोलद्भूलतया[2] विपक्षदिगुपन्यासेऽवधूतं[3] शिर-
स्तद्वृत्तान्तनिरीक्षणे कृतनमस्कारो विलक्षः स्थितः ।
कोपात्ताम्रकपोलभित्तिनि मुखे दृष्ट्या गतः पादयो-[4]
रुत्सृष्टो गुरुसंनिधावपि विधिर्द्वाभ्यां न कालोचितः ॥ ८३ ॥

श्वशुरप्रायगुरुजनसकाशेऽपि द्वाभ्यां चातुर्येण कोपप्रसादनात्मको विधिः समयोचितो न मुक्तः । कथं कथमित्याह—तत्र गत्वा आगतोऽसीति सूचकं स्पन्दितया भ्रूलतयान्यवनितागृहोद्देशोपक्षेपे नायिकया शिरोऽवधूतम् । नायकोऽपि शिरःकम्पनवृत्तान्तनिरीक्षणे विलक्षः स्थितः । किंविशिष्टः । नमस्या भवती यदेवमेव निरपराधस्य ममापराधमारोपयतीत्याशयेन कृतनमस्कारः । अथवा तस्यै दिशे मम नमस्कार एवेति भावः । न केवलं विलक्षः स्थितः नायिकाया मुखे इदानीं किं ते कितव कर्तुं शक्नोमि यद्येकान्ते लब्धो भवसि तदा शिक्षां ग्राहयामीति कोपात्ताम्रगण्डमण्डले मुखे सत्याभिनयेन प्रणामं सूचयन्दृष्ट्या तत्पादयोः पतितः । अत्र कोपेन पुलकाद्यभावात्कपोले कर्कशत्वसाधारणधर्मो भित्तित्वेन रूपितः । दृष्टिश्चेयं लज्जितशङ्किता । यथा—'किंचिदञ्चितपक्ष्माग्रा पतितोर्ध्वपुटा भिया । त्रपाभोगततारा च शङ्किता दृष्टिरिष्यते' ॥

काचित्सखीभिरुपदिष्टं मानं स्थापयितुमक्षमा ताः प्रत्याह—

जाता नोत्कलिका स्तनौ न लुलितौ गात्रं न रोमाञ्चितं
वक्त्रं स्वेदकणान्वितं न सहसा यावच्छठेनामुना ।

---

१. 'बालाभवच्चुम्बिता' इति शृङ्गारदीपिका. २. 'लोलभ्रूलतया' इति शृङ्गारदीपिका. ३. 'विधूतं' इति शृङ्गारदीपिका. ४. 'ईषत्ताम्रकपोलकान्तिनि मुखे दृष्ट्या गतः' इति शृङ्गारदीपिका.

दृष्टैनैव मनो हृतं धृतिमुषा प्राणेश्वरेणाद्य मे
तत्केनात्र निरूप्यमाणनिपुणो मानः समाधीयताम् ॥ ८४ ॥

तस्मात्कथयत केनोपायेनात्र संस्थानके मानः स्थैर्यं नीयताम्, अपि तु न केनापि । कथंभूतः । निरूप्यमाणनिपुणः । निपुणं निरूप्यमाणो निरूप्यमाणनिपुणः । सुप्सुपेति समासः । पूर्वनिपातानियमः । यतो यन्मानात्मकविरहातिवाहनक्षममिति संभावितमासीत्तदद्य मे मनो दृष्टैनैव यावदमुना शठेन प्राणेश्वरेण सहसा लुण्ठितम् । किंविशिष्टेन । एतदसंगमे कथं जीविष्यामिति मे धृतितस्करेण । (यदि पुनः संनिधावुपविश्य प्रणामादिकमारभते तदा तस्य कथैव का । तच्चानेन कृतमेव न । कथं ज्ञायत इत्याह—उत्कण्ठा न जाता । कुचौ न कम्पितौ । अङ्गं न पुलकितम् । मुखमपि स्वेदकणचितं न जातम् ।) संनिधावुपविश्य यदि प्रणामादिकमारभते तदा सर्वमेव जातप्रायं भवतीत्यर्थः । अहो नूतनोऽयं तस्करो यद्दृष्टिमात्र एव पदार्थमपहरतीत्याश्चर्यद्योतकं शठेनेति प्रीतिवचनमेव ॥

दृष्टः कातरनेत्रया चिरतरं बद्ध्वाञ्जलिं याचितः
पश्चादंशुकपल्लवेन[1] विधृतो निर्व्याजमालिङ्गितः ।
इत्याक्षिप्य[2] यदा समस्तमघृणो गन्तुं प्रवृत्तः शठः
पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभः ॥ ८५ ॥

तदा प्रवसतो नायकस्य दयितया प्रथमं जीवितास्था मुक्ता तदनन्तरं दयितो मुक्तः । तदा कदा । यदेत्यादिकं सर्वममानयित्वा गन्तुमेव कितवः प्रवृत्तः । किंविशिष्टः । मुमूर्षुमपि वल्लभामुपेक्षत इति निर्घृणः । इत्यादिकं किमित्याह—स्थापनार्थं दैन्यव्यञ्जकत्वेन कातरचक्षुषा चिरतरमवलोकितः । पश्चादञ्जलिं बद्ध्वा प्रार्थितः । अनन्तरं वस्त्राञ्चलेन विधृतः । चरमं गाढमुपगूढः । गन्तुं प्रवृत्तो न तु गत एवेति हेतोरेकानुरागो न शङ्कनीयः । कर्तृदीपकमलंकारः । यदुक्तम्—'यत्रैकमनेकेषां वाक्यार्थानां क्रियापदं भवति । तद्वत्कारकपदमपि तदेतदिति दीपकं द्वेधा ॥' अतिशयभेदः पूर्वं च । यदुक्तम्—यत्रातिप्रबलतया विवक्ष्यते पूर्वमेव जन्यस्य । प्रादुर्भावः पश्चाजनकस्य तु तद्भवेत्पूर्वम् ॥' यथा—'दुर्लभजनमभिलषतामादौ दंदह्यते मनो यूनाम् । गुरुरनिवारप्रसरः पश्चात्कामानलो ज्वलति' ॥

कश्चिद्वियोगी दयितादुरवस्थामनुस्मरति—

तप्ते महाविरहवह्निशिखावलीभि-
रापाण्डुरस्तनतटे हृदये प्रियायाः ।

---

१. 'पल्लवे च' इति शृङ्गारदीपिका. २. 'इत्याक्षिप्य समस्तमेवमघृणो' इति शृङ्गारदीपिका.

मन्मार्गवीक्षणनिवेशितदीनदृष्टे-
नूनं छमच्छमिति बाष्पकणाः पतन्ति ॥ ८६ ॥

नूनमहमेवं मन्ये—दयिताया हृदि च्छमच्छमित्यश्रुविप्रुषः पतन्ति । किंविशिष्टायाः । मदागमनपदवीगवेषणदत्तदीनदृष्टेः । किंविशिष्टे हृदये । महतीभिर्वियोगानलज्वालाभिस्तप्ते । पुनः कीदृशे । आपाण्डुरस्तनतटे । संतप्तवस्तुनिपतितं पयश्छमत्करोतीत्यनुकारः । रूपकमलंकारः । यदुक्तम्—'यत्र गुणानां साम्ये सत्युपमानोपमेययोरभिधा । अविवक्षितसामान्या कल्प्यत इति रूपकं ज्ञेयम् ॥' परं गृहीतमुक्तोऽलंकारः ॥

काचित्सखी मानिनीवृत्तान्तमपरसख्याः कथयति—

चिन्तामोहविनिश्चलेन[1] मनसा मौनेन पादानतः
प्रत्याख्यानपराङ्मुखः[2] प्रियतमो गन्तुं प्रवृत्तोऽधुना[3] ।
सव्रीडैरलसैर्निरन्तरलुठद्बाष्पाकुलैरीक्षणैः
श्वासोत्कम्पिकुचं[4] निरीक्ष्य सुचिरं जीवाशया वारितः ॥८७॥

तया प्रियतमो निवारितः । किंविशिष्टः सन् । गन्तु प्रवृत्तः । यतः प्रत्याख्यानेन पराङ्मुखो निराकृत एव । किंविशिष्टः सन् । चरणानतः । केन विशिष्टः । विदितापराधत्वान्मौनेन । पुनरपि केन । चेतसा । कथंभूतेन । प्रसादं करिष्यति न वेति चिन्तयान्तःकरणशून्यत्वान्मोहेन च स्तिमितेन । विनिश्चलमिति भीरुत्वोक्तिः । कदा । अधुना । इदानीं यावत्प्रसादोपायांश्चकारेत्यर्थः । कया वारितः । जीविताशया । प्रत्याख्यानं तावत्साहसेन कृतम् । गन्तुं प्रवृत्ते तस्मिन्प्राणान्धारयितुमशक्यत्वादनन्यगतिकत्वं जातमित्यर्थः । अद्याहमेव त्वया विना जीवितुं न शक्नोमि, तदा किमेव लघ्वी भवामीत्यभिधानात् । श्वासेनोत्कम्पितौ कुचौ यत्र तत्तथोक्तम् । अथ च यद्यहं जीवामि तदा प्रियसंगमं प्राप्नोमीति जीवने कृता आशा जीवाशा । किं कृत्वा वारितः । सुचिरं निरीक्ष्य । कैः । ईक्षणैः । किंविशिष्टैः । अवष्टम्भत्यागव्यञ्जकतया सव्रीडैः । दैन्यद्योतकतयालसैः । अपमानातिशयान्निरन्तरलुठद्बाष्पाकुलैः ॥

कश्चिद्देशान्तरादागतो मनोरथप्राप्तप्रियतमासमागमं प्रणिधत्ते—

म्लानं पाण्डु कृशं वियोगविधुरं[5] लम्बालकं सालसं[6]
भूयस्तत्क्षणजातकान्ति रभसप्राप्ते[7] मयि प्रोषिते ।

---

१. 'मोहनिबध्यमानमनसा' इति शृङ्गारदीपिका. २. 'प्रत्याख्यात' इति शृङ्गारदीपिका. ३. 'प्रवृत्तः शठः' इति शृङ्गारदीपिका. ४. 'तन्वङ्ग्या स पुनस्तया तरलया तत्रान्तरे वारितः' इति शृङ्गारदीपिका. ५. 'विलास' इति शृङ्गारदीपिका. ६. 'चालसं' इति शृङ्गारदीपिका. ७. 'मधुरं प्राप्ते' इति शृङ्गारदीपिका.

साटोपं रतिकेलिकालसरसं रम्यं किमप्यादरा-
द्यत्पीतं सुतनोर्मया वदनकं वक्तुं न तत्पार्यते ॥ ८८ ॥

यन्मया सुतनोर्वदनकमधरग्रहचमत्कारिचुम्बनपूर्वकत्वेन यत्नात्पीतं तदनिर्वचनीयत्वा-द्वक्तुं न शक्यते। तस्य विशेषणान्याह—आन्तरेण मर्मस्पृशा दुःखेन कुसुममिव म्लानम्। प्रत्यूषतुषारांशुवत्कान्तिविगलितत्वेन पाण्डु । असौस्थेनाहारस्यारोचकत्वात्सुतनोरिति [पदेन] शरीरकार्श्यात्कृशम्। किंविशिष्टं सदुक्तवक्ष्यमाणविशेषणयोग्यं जातमित्याह—वि-योगविधुरम्। इदं विशेषणं हेतुत्वेन सालसं यावत्सर्वत्र संबध्यते। नहि वैधुर्यमेव केवलं वियोगहेतुकम्। म्लानत्वादीनामपि तन्निमित्तत्वात्। प्रसाधनपरित्यागेन कर्तनादिरहित-त्वाल्लम्बालकम् । अन्तःखेदेन सालसम्। अथ दर्शनात्मकसंभोगसमुचितं विशेषणमा-ह। चिरमनोरथप्राप्त्या पुनस्तत्कालोल्लसितकान्ति। क्व सति। मयि पथिकेऽकस्मात्प्रभ-सप्राप्ते सति। अथ चुम्बनसमयविशेषणमाह—त्वमद्य यावन्मां विहाय तत्र स्थित इत्या-शयेन मानाद्भ्रूभङ्गादिभिः साटोपम्। रतिक्रीडासमये आर्द्रमत एव किमपि रमणीयम्। सालसमित्यत्रालसपदं भावप्रधानम्। तेन सालस्यमित्यर्थः। मुग्धाया अल्पत्वेन मुखम-प्यल्पं तेनाल्पार्थे कप्रत्ययेन वदनकम्। भूयस्तत्क्षणजातकान्तीत्यनेन विलासः। 'ता-त्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु' ॥

सैवाहं प्रमदा नृणामधिगतावेतौ च तौ नूपुरा-
वेषास्माकमवृत्तिरेव सहजव्रीडाधनः स्त्रीजनः।
इत्थं लज्जितया स्मृतेरुपगमे मत्वा तनुं संभ्रमा-
त्पुंभावः प्रथमं रतिव्यतिकरे मुक्तस्ततो वल्लभः ॥ ८९ ॥

कयाचिद्विपरीतरतिव्यतिकरे पूर्वं पर्याकुलतया पुरुषभावस्त्यक्तस्तदनन्तरं वल्लभो मुक्तः। किं कृत्वा। तनुं ज्ञात्वा। मोहनसमये शरीरपरिज्ञानमेव नासीत्, का पुनः कथा स्त्रीपुरुषविषयविभागस्येति भावः । किंविशिष्टया। लज्जितया। क्व सति। इत्थं स्मृ-तेरुपगमे। इत्थं कथम्। सैवाहं लज्जावती गृहलोकानां विदिता इदानीं प्रकृष्टमदा जाता। एतौ च तौ नूपुरौ संभोगाभियोगेन शब्दायमानौ मयोच्छृङ्खलया लोकानां श्रु-तिसंवादेन ज्ञापितौ। एषास्माकं स्त्रीणामक्रियैव। यतः सहजव्रीडैव धनं यस्य स त-थोक्तः स्त्रीजनः। अतिशयभेदः पूर्वमलंकारः। 'निःसाध्वसत्वं प्रागल्भ्यम्' इत्यनेन च प्रागल्भ्यं नाम नाट्यालंकारः ॥

करकिसलयं धूत्वा धूत्वा विमार्गति वाससी
क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति।

---

१. 'केलिदत्तरभसं' इति शृङ्गारदीपिका. २. 'पीतं यत्' इति शृङ्गारदीपिका. ३. 'मुखमिदं तत्केन विस्मार्यते' इति शृङ्गारदीपिका. ४. 'विलम्बितमेखला' इति शृङ्गारदीपिका.

स्थगयति मुहुः पत्युर्नेत्रे विहस्य समाकुला
सुरतविरतौ रम्या तन्वी मुहुर्मुहुरीक्षते ॥ ९० ॥

संभोगावसाने क्षामाङ्गी रमणीया पतिं वारंवारमवलोकते। अत एव साकूतं विहस्य लज्जया संभ्रान्ता भर्तुर्नेत्रे भूयोभूयः समाच्छादयति। रम्यैव कथमित्याह—इतस्ततः पतिते वाससी पाणिपल्लवं भ्रमयित्वा परिधानार्थं मृगयति। प्रदीपविध्यापनार्थं सुरतसंमर्दत्रुटितधम्मिल्लकुसुममालाशेषं क्षिपति। प्रियनयनस्थगनं च घट्टितकचुम्बनेऽप्युक्तमस्ति मुग्धायाः—'ईषत्परिगृह्य मीलिताक्षी जिह्वाग्रेण घट्टयन्ती करेण तस्य नयने छादयतीति घट्टितकम्'। 'मन्मथाप्यायिता छाया सैव कान्तिरिति स्मृता' इत्यनेन कान्तिर्नाम्व्यालंकारः। यथा भट्टनारायणस्य—'उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः। भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु'॥

काचित्सखी मानिनीं भीषयित्वा नायकसंप्रतिपत्तौ प्रवेशयति—

सन्त्येवात्र गृहे गृहे युवतयस्ताः पृच्छ गत्वाधुना
प्रेयांसः प्रणमन्ति किं तव पुनर्दासो यथा वर्तते।
आत्मद्रोहिणि दुर्जनैः प्रलपितं कर्णेऽनिशं मा कृथा-
श्छिन्नस्नेहरसा भवन्ति पुरुषा दुःखानुवर्त्याः पुनः ॥ ९१ ॥

सन्त्येवात्र गृहे गृहे यौवनोद्धताः स्त्रियः। ताः पृच्छ गत्वा। कदा। अधुना। विलम्बं मा कृथा इत्यर्थः। किं पृच्छामीत्याह—प्रेयांसः किं तथा प्रणमन्ति यथा तव प्रेयान्दासवत्प्रणमंश्च वर्तते। प्रेयांसो हि प्रणम्यन्ते। तस्मात् हे आत्मद्रोहिणि, दुर्जनैरनर्थमभिहितं कर्णेऽप्यनिशं मा कृथाः का पुनः कथा हृदये। कर्णेजपवचनैर्हि प्रियोऽपमानितः सन्कदाचित्स्नेहमुत्सृजति। निःस्नेहे तस्मिन्सति किं भवतीत्याह—छिन्नस्नेहरसाः पुरुषाः पुनर्दुःखानुवर्त्या भवन्ति दुःखेनानुवर्तितुं शक्यन्ते। दुराराध्या इत्यर्थः॥

काचिन्मानशिक्षणनिर्बन्धदुर्ललिताः सखीरुपालभते—

निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मथ्यते
निद्रा नैति न दृश्यते प्रियमुखं नक्तंदिवं रुद्यते।
अङ्गं शोषमुपैति पादपतितः प्रेयांस्तदोपेक्षितः
सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः ॥ ९२ ॥

---

१. 'रम्यं तन्वी पुनः पुनरीक्षते' इति शृङ्गारदीपिका. २. 'दुर्जनप्रलपितं कर्णे भृशं' इति शृङ्गारदीपिका. ३. 'दुःखानुवृत्त्या यतः' इति शृङ्गारदीपिका. ४. 'उन्मूल्यते' इति शृङ्गारदीपिका. ५ 'तथा' इति शृङ्गारदीपिका.

हे सख्यः, कं स्वार्थमनुसंधाय दयिते वयं मानं कारिताः । वयमिति बहुवचनेन सखीष्वौदासीन्यम् । अनर्थ एव को जात इत्याह—निःश्वासा इत्यादि । अनन्तदुःखसंबाधत्वेन संततमुल्लसन्तो निःश्वासवायवो मुखमुष्णतया तपन्ति । निराधारतया हृदयं निर्मूलमुन्मथ्यते । कर्मकर्तरि यक् । चिन्ताज्वरेण निद्रा नागच्छति । संतापशमनं चन्द्ररुचिरं प्रियमुखं न दृश्यते । तद्दर्शनमन्तरेण चक्षुषोः साश्रुत्वादहोरात्रं रुद्यते । सरस्याजितायाः कमलिन्या इवाङ्गं मे शुष्यति । तदा पादपतितोऽपि युष्मद्भणितेन प्रेयानवगणितः । विषमालंकारः । यदुक्तम्—'यत्र क्रियाविपत्तेर्न भवेदेव क्रियाफलं तावत् । कर्तुरनर्थश्च भवेत्तदपरमभिधीयते विषमम्' ॥

काचिन्मानिनी पुण्यसामग्र्या मनोरथशतप्राप्तप्रियतमसंप्रतिपत्तिः पुनर्विप्रतिपत्तिविषये स्वगतेन शपथं करोति—

अद्यारभ्य यदि[1] प्रिये पुनरहं मानस्य वान्यस्य वा
गृह्णीयां शठदुर्नयेन मनसा नामापि संक्षेपतः ।
[2]तत्तेनैव विना शशाङ्कधवलाः[3] स्पष्टाट्टहासा निशा
[4]एको वा दिवसः पयोदमलिनो यायान्मम प्रावृषि ॥ ९३ ॥

यद्यहमद्यारभ्य मानस्यान्यस्य वापि परिचरणप्रसादादेर्नामापि गृह्णीयाम् । अस्तु तावत्करणम् । केन । मनसा । कीदृशेन । शठदुर्नयेन । कोऽर्थः । मिथ्यैवास्य दोषमारोपयामीति । तदा किं स्यादित्यत आह—संक्षेपत इत्यादि । संदिग्धमरणानेकप्रतिज्ञानां परिहारेण निःसंदेहमरणाध्यवसायतया संक्षेपतस्तेनैव प्रियेण विना सुधांशुधवला अत एव स्पष्टाट्टहासा इव यामिन्यो मे यान्तु । दुःखितस्य हि हसन्कोऽपि न प्रतिभासते । अत एव प्रावृट्काले समन्ततः संनद्धमेघमालामलीमस एकोऽपि दिवसो यायात् । एकसंख्याविशेषेण चन्द्रवत्यनेकरात्रिभ्योऽपि प्रावृड्दिवसस्यातिवाहयितुमशक्यत्वमुक्तम् ॥

काचित्सखी नूतनमानिनीमात्मप्रियदुर्नयावेदनेन बोधयति—

इदं कृष्णं कृष्णं प्रियतम ननु श्वेतमथ किं
गमिष्यामो यामो भवतु गमनेनाथ भवतु ।
पुरा येनैवं मे चिरमनुसृता चित्तपदवी
स एवान्यो जातः सखि परिचिताः कस्य पुरुषाः ॥ ९४ ॥

हे सखि, कस्य परिचिताः पुरुषाः । अपि तु न कस्यापि । आत्मीया न भवन्तीत्यर्थः । अथातिनिर्बन्धमानेनोद्वेजितैस्तैः सह परिचयोऽपि दुर्लभः । यतः स एवान्यो

१. 'नहि प्रिये पुनरहं मानस्य वा भाजनं गृह्णीयां विषरूपिणः शठमतेर्नामापि' इति शृङ्गारदीपिका. २. 'किं तेनैव' इति शृङ्गारदीपिका. ३. 'किरणस्पष्टा—' इति शृङ्गारदीपिका. ४. 'नैकोऽपि' इति शृङ्गारदीपिका.

जातः। एतेनातः प्राग्यैवाहं स एवासीदित्यर्थः। तस्मात्त्वमपि सागसि प्रिये खेदं मा कृथाः। स एव कः। येन पुरा मम चित्तपदवी चिरकालमेवमनुसृता। येन येन वर्त्मना मम चित्तं विलसितं तेन तेन पृष्ठतो लग्नः। सर्ववारानुवृत्तिपर आसीदित्यर्थः। एवं कथमित्याह—हे प्रियतम, इदं कृष्णम्। स आह—कृष्णम्। ननु श्वेतमिदम्। स आह—अथ किम्। गमिष्यामः। स आह—यामः। नायिकाभविष्यदुक्तौ नायकस्य वर्तमानोक्त्यानुवृत्तेरतिशयः। आस्तां गमनेन। स आह—आस्ताम्॥

काचिदन्तर्विलीनमाना स्वगतेन वितर्कं संधारयति—

चरणपतनं सख्यालापा मनोहरचाटवः
कृशतरतनोर्गाढाश्लेषो हठात्परिचुम्बनम्।
इति हि चपलो मानारम्भस्तथापि हि[3] नोत्सहे
हृदयदयितः कान्तः कामं किमत्र करोम्यहम्॥ ९५॥

इत्यमुना प्रकारेण नूनं गत्वर एव मानोपक्रमः। तथापि स्फुटमीर्ष्यया न मानं त्यक्तुमुत्सहे। इतिशब्दस्यापि शब्दस्याग्रे च हिशब्दो मानारम्भचापल्यस्य मानत्यागानुत्साहस्य च निश्चयं गमयति। इति किम्। चरणपतनेत्यादि। प्रियस्य मच्चरणे पतनम्। तदनुरुद्धसखीनामालापाः। किंविशिष्टाः। मनोहराणि चाटूनि येषु ते तथोक्ताः। मदीयदुर्बलाङ्गस्य प्रियकृतं गाढालिङ्गनम्। बलात्कारेण समन्ताच्चुम्बनम्। कृशतरतनोरित्यस्य पदस्यायमभिप्रायः—मया तावन्मानः कृतो यावत्क्षीणेन्दुलेखाशेषं मम शरीरमभूत्। ननु यदि नोत्सहे तदा प्रियेण विनैव स्थास्यामीत्याह—अतिशयेन हृदयदयितः कान्तश्च तत्किमत्र प्रस्तावे करोमीति। चिन्ता व्यभिचारिभावः॥

तन्वङ्ग्या गुरुसंनिधौ नयनयोर्यद्वारि संस्तम्भितं
तेनान्तर्गलितेन मन्मथशिखी सिक्तो वियोगोद्भवः।
मन्ये तस्य निरस्यमानकिरणस्यैषा मुखेनोद्गता
श्वासायाससमाकुलालिसरणिव्याजेन धूमावली॥ ९६॥

इयं बाल्य एव प्रियं विना स्थातुं न शक्नोतीति गुरुजनेन ज्ञास्य इति लज्जया तत्संनीधौ नयनयोर्वारि स्तम्भितम्। तेनाभ्यन्तर एव व्यावृत्य गलितेन यो हृदये विरहोद्भवः कामानलः सिक्तस्तस्य संस्तभ्यमानज्वालस्य नूनमेषा वदनद्वारेण धूमवर्तिरुत्थिता। केन। सुगन्धिश्वासेन य उष्णताजनित आयासस्तेन समाकुलानामलीनां या पद्धतिस्तद्व्याजेन। जलाभिषेकेण मन्दितार्चिषि वैश्वानरे हि धूमोद्गमः समुल्लसति॥

१. 'सख्यालापाः' इति शृङ्गारदीपिका. २. 'इति बहुफलो' इति शृङ्गारदीपिका. ३. 'च' इति शृङ्गारदीपिका.

काचित्सखीभिर्मानं शिक्षितानध्यवसायगर्भं संदेहमाह—

भ्रूभेदो गुणितश्चिरं नयनयोरभ्यस्तमामीलनं
रोद्धुं शिक्षितमादरेण हसितं मौनेऽभियोगः कृतः ।
धैर्यं कर्तुमपि स्थिरीकृतमिदं चेतः कथंचिन्मया
बद्धो मानपरिग्रहे परिकरः सिद्धिस्तु दैवे स्थिता ॥ ९७ ॥

मानस्वीकारे मया सामग्री प्रगुणीकृता सिद्धिः पुनर्दैवाधीना । दैवयोगान्माननिर्वाहो भवति न वेत्यर्थः । कथं परिकारो बद्ध इत्याह—भ्रूभेद इत्यादि । सूत्रपाठप्राथमकल्पिकन्यायेन भ्रूभङ्गश्चिरं गुणितः । लोचनयोः संकोचनमभ्यस्तम् । प्रयत्नेन स्मितं निवारयितुं शिक्षितम् । वाचंयमत्वेऽभियोगः कृतः । अकातरतां विधातुमपि कथंचिदेतच्चेतः स्थिरीकृतम् । एते प्रकारास्तस्मिन्दृष्टे निर्वाहं न गमिष्यन्तीत्यर्थः ॥

काचित्स्वैरिणी चिरमनोरथप्राप्तकामुकचौर्यरतं साधितसाध्यतया सख्याः कथयति—

अहं तेनाहूता किमपि कथयामीति विजने
समीपे चासीना सरसहृदयत्वादवहिता ।
ततः कर्णोपान्ते किमपि वदताघ्राय वदनं
गृहीता[1] धम्मिल्ले सखि स च मया गाढमधरे ॥ ९८ ॥

हे सखि, किमपि कथयामीति व्यपदेशेन विजने तेनाहमाहूता । अहं च सखि, साभिलाषहृदया तस्य प्रियतमस्य समीप आसीना । अथ च तेन श्रवणोपान्ते किंचिद्वदता पर्याकुलतया मन्मुखमाघ्रायापसरणशङ्कयाहं धम्मिल्ले गृहीता । न केवलमेवम्, स च मया गाढमधरे गृहीतः । किमपि कथयामीति विस्रम्भणम् । यदुक्तम्—'विविक्ते च किंचिदस्ति कथयितव्यमित्युक्त्वा निर्वचने भावं तत्रोपलक्षयेत्' ॥

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननै-
र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि ।
उद्ग्रीवश्चरणार्ध[2]रुद्धवसुधः प्रोन्मृज्य सास्रे दृशौ
तामाशां पथिकस्तथापि[3] किमपि ध्यायन्पुन[4]र्वीक्षते ॥ ९९ ॥

तथापि किमपि ध्यायन्पथिकस्तां दयितासंबद्धां दिशं वारंवारमवलोकयति । अथ वाशामिवाशाम् । किं कृत्वा । साश्रुणी नेत्रे पदार्थोपलम्भार्थं प्रकर्षात्प्रोञ्छ्य । किंविशिष्टः । दर्शनोत्कलिकयोत्कंधरः । पुनः कीदृशः । उन्नतो भवितुं परार्धेनावष्टब्धभूमिः ।

---

१. 'गृहीत्वा धम्मिल्लं मम सखि निपीतोऽधररसः' इति शृङ्गारदीपिका. २. 'चरणाग्र' इति शृङ्गारदीपिका. ३. 'तथैव' इति शृङ्गारदीपिका. ४. 'मुहुः' इति शृङ्गारदीपिका.

तथापि कथमित्याह—इति जानन्नपि । इति किम् । यत्नेनापि कान्ता नयनयोर्गोचरं न गच्छति । किंविशिष्टा । यतोऽन्तरिता । कैः । देशैः । न परं तैः । नदीनां पर्वतानां च शतैः । न केवलमेभिः, विपिनैश्च ॥

[1]चक्षुःप्रीतिप्रसक्ते मनसि परिचये चिन्त्यमानाभ्युपाये
[2]रागे यातेऽतिभूमिं विकसति सुतरां गोचरे दूतिकायाः ।
आस्तां [3]दूरेण तावत्सरभसदयितालिङ्गनानन्दलाभ-
स्तद्गेहोपान्तरथ्याभ्रमणमपि परां निर्वृतिं संतनोति ॥ १०० ॥

साभिलाषप्रियाश्लेषसंगमप्राप्तिस्तावद्दूरत एवास्तु । कस्तादृशः सुकृतराशिर्यस्यैवं संपद्यते । तन्मन्दिरोपान्तरथ्यासंचरणमप्यनिर्वचनीयं (········· अस्मिन्नपि निस्तरणोपाये कश्चित्परेङ्गितज्ञः प्रतिबन्धीभवतीत्यभिप्रायः । केन । मनसा । संस्तवे चिन्त्यमानप्रातिवेश्मिकमैत्रीप्रभृत्युपाये । अनुरागे प्रकर्षं गते । दूतिकायाः सुतरा पुण्यवन्मनोज्ञे······विकसति । अनुभवी वक्ता । 'यत्रासंभाव्यभावो वा' इति विषमभेदः ॥)

तव प्रियः कथं रमत इति सखीभिः पृष्टा काचिदाह—

कान्ते तल्पमुपागते विगलिता नीवी स्वयं [4]बन्धना-
द्वासो विश्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम् ।
एतावत्सखि वेद्मि [5]सांप्रतमहं तस्याङ्गसङ्गे पुनः
[6]कोऽयं कास्मि रतं [7]नु वा कथमिति स्वल्पापि मे न स्मृतिः ॥ १०१ ॥

हे सखि, सांप्रतं तावदेतावदेवाहं जानामि । एतावत्किम् । कान्ते शय्यां प्राप्ते सति नितम्बसिचयबन्धनसंस्पर्शनिर्वृतिं सम्यग्विस्तारयति । स्पर्शमपि विनैव नीवीविस्रसनं जातमिति सात्त्विकातिशयः । विश्रृङ्खलमेखला तत्रावलम्बितमम्बरं नितम्बे मनाक्स्थितम् । तदङ्गस्पर्शे तु क एषः । का वाहम् । रतमाहोस्वित्केन प्रकारेण । कापि स्मृतिर्नास्तीत्यर्थः । अत एवोक्तम्—'धन्यासि या कथयसि प्रियसंगमेऽपि विश्रब्धचाटुकशतानि रतान्तरेषु । नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि ॥' इति ॥

कश्चिद्वियोगी स्वगतं वितर्कयति—

प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा
पर्यङ्के सा पथि पथि च सा तद्वियोगातुरस्य ।

---

१. 'चक्षुःप्रीत्या निषण्णे मनसि परिचयाच्चिन्त्यमाने' इति शृङ्गारदीपिका. २. 'याते रागे विवृद्धिं प्रविसरति गिरां विस्तरे' इति शृङ्गारदीपिका. ३. 'दूरे स' इति शृङ्गारदीपिका. ४. 'तत्क्षणात्तद्वासः श्लथ—' इति शृङ्गारदीपिका. ५. 'केवलं' इति शृङ्गारदीपिका. ६. 'कोऽसौ' इति शृङ्गारदीपिका. ७. 'तु किं कथमपि' इति शृङ्गारदीपिका.

हंहो चेतः प्रकृतिरपरा नास्ति मे कापि सा सा
सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥ १०२ ॥

तद्विरहातुरस्य ममान्या कापि प्रकृतिर्नास्ति । तर्हि किमस्तीत्याह—प्रासादादिषु सैव । तस्मादहो आश्चर्यम् । सा सेति सकले जगति कोऽयमद्वैतवादः । आत्मनोऽप्युल्लेखितत्वेन तस्यां तादात्म्यम् । विशेषोऽलंकारः । यदुक्तम्—'यत्रैकमनेकस्मिन्नाधारे वस्तु विद्यमानतया । युगपदभिधीयतेऽसावत्रान्यः स्याद्विशेष इति ॥' यथा—'हृदये चक्षुषि वाचि च तव सैवाभिनवयौवना वसति । वयमत्र निरवकाशा विरम कृतं पादपतनेन ॥' पूर्वार्धे यावन्त एव साशब्दाः प्रयुक्तास्तावन्त एवोत्तरार्धेऽनूदिताः ॥

समाप्तेयं रसिकसंजीविनी टीका ।

कृतिर्महाराजाधिराजवीरचूडामणिश्रीमदर्जुनवर्मदेवस्य ।

## समाप्तमिदं रसिकसंजीविनीटीकासमेतममरुशतकम् ।

## १ परिशिष्टम् ।

वेमभूपालविरचितशृङ्गारदीपिकाख्यटीकायां केचन श्लोका अधिकाः सन्ति, तेऽत्र सटीकास्तत एवोद्ध्रियन्ते । यथा—

नायकोक्तिः—

नभसि जलदलक्ष्मीं सास्रया वीक्ष्य दृष्ट्या
प्रवससि यदि कान्तेत्यर्धमुक्त्वा कथंचित् ।
मम पटमवलम्ब्य प्रोल्लिखन्ती धरित्रीं
यदनु कृतवती सा तत्र वाचो निवृत्ताः ॥ १०३ ॥

नभस्याकाशे जलदलक्ष्मीं मेघसामग्रीं सास्रया सबाष्पया दृष्ट्या दृशा वीक्ष्यावलोक्य 'हे कान्त हे प्रिय, प्रवससि यदि प्रवासं करोषि चेत्' इति कथंचित्कृच्छ्रेणार्धं सावशेषम् । वाक्यमिति शेषः । उक्त्वा मम पटमंशुकमवलम्ब्य गृहीत्वा धरित्रीं भुवं प्रोल्लिखन्ती कर्षन्ती अनु पश्चात्सा यत्कर्म कृतवती तत्र तस्मिन्कर्मणि वाच उक्तयो निवृत्ता व्यावृत्ता इति संबन्धः । यत्कृतवतीत्यत्र यच्छब्दवाच्यैश्चिन्तानिःश्वासवैवर्ण्यबाष्पगद्गदिकादिभिरनुभावैस्त्वां विना क्षणमपि जीवितुमहं न शक्नोमीत्ययमर्थः प्रवससि यदीत्यस्य वाक्यस्य शेषत्वेनावगन्तव्यः । तत्र वाचो निवृत्ता इत्यनेन नायिकायाश्चिन्तानिःश्वासादीनामनुभावानां दशाविशेषः पश्यतां मनोगोचर एव न वाग्गोचर इत्ययमर्थोऽवगम्यते । दैन्यं नाम संचारिभावः । अत्र नायिका स्वीया मुग्धा च । नायकोऽनुकूलः । भविष्यत्प्रवासविप्रलम्भशृङ्गारः । तत्र नर्मस्फोटः । जातिरलंकारः । मालिनी वृत्तम् ॥

कवेर्वाक्यम्—

स्मररसनदीपूरेणोढाः पुनर्गुरुसेतुभि-
र्यदपि विधृतास्तिष्ठन्त्यारादपूर्णमनोरथाः ।
तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा
नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥ १०४ ॥

प्रियाः । 'पुमान्स्त्रिया' इत्येकशेषः । प्रियश्च प्रियाश्चेत्यर्थः । स्मररसनदीपूरेणोढाः स्मरेण कामेन कृतो रसो रागः स एव नदीपूरस्तेनोढा उद्धृताः । बलान्नीता इत्यर्थः । पुनर्भूयो गुरुसेतुभिर्गुरवो गुरुजनास्त एव सेतवः प्रवाहबन्धास्तैर्यद्यस्मात्कारणाद्विधृता अपि निवारिताश्च भवन्ति । तस्मादारात्समीपेऽपूर्णमनोरथा अपर्याप्तकामास्तिष्ठन्ति आसते । तदापि तथापि लिखितप्रख्यैश्चित्रसदृशैरङ्गैः शरीरैरुपलक्षिताः परस्परमन्योन्यमुन्मुखा अभिमुखाः सन्तो नयननलिनीनालानीतं नयनानि दर्शनान्येव नलिनीनालानि पद्मकाण्डानि तैरानीतमाहृतं रसं पिबन्ति आस्वादयन्तीति संबन्धः । अत्र स्मररसनदीपूरेणोढा इत्यनेनात्यन्ताभिलाषपरतन्त्रा इति गम्यते । लिखितप्रख्यैरङ्गैरित्यनेन स्तम्भं नाम सात्त्विकभावं गता इति गम्यते । अत्रौत्सुक्यं नाम संचारी भावः । संभोगशृङ्गारः । यथोक्तं दशरूपके—'अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ । दर्शनस्पर्शनादीनि स संभोग उदाहृतः ॥' इति । अत्र चेष्टाकृतं संभोगेच्छारूपं शृङ्गारिनर्म जातिरलंकारः । हरिणीवृत्तम् ॥

नायकमानेतुं गत्वा समागतां लक्ष्यमाणसंभोगचिह्नां दूतीं नायिका प्राह—

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥१०५॥

स्तनतटं कुचतटं निःशेषच्युतचन्दनं निःशेषं यथा भवति तथा च्युतं गलितं चन्दनं यस्मात्तथोक्तम् । अधरो दशनच्छदो निर्मृष्टरागोऽपगतालक्तकोऽपगतताम्बूलरागो वा । नेत्रे दूरमत्यर्थमनञ्जने कज्जलरहिते । तन्वी तवेयं तनुः पुलकिता सरोमाञ्चा। मिथ्यावादिन्यसत्यप्रलापिनि बान्धवजनस्य सुहृज्जनस्याज्ञातपीडागमे। अज्ञातोऽनवगतः पीडागमो दुःखप्राप्तिर्यया सा तथोक्ता तस्याः संबुद्धिः । अज्ञातबान्धवजनपीडागमे इत्यर्थः । हे दूति संदेशहरे, अतोऽस्मात्प्रदेशाद्वापीं दीर्घिकां स्नातुं जलावगाहनं कर्तुं गतासि यातासि तस्याधमस्य निकृष्टस्य नायकस्यान्तिकं पुनः समीपं तु न गतासीति संबन्धः । अत्र वापीस्नानचिह्नकथनव्याजेन संभोगचिह्नकथनान्नायकस्याधमत्वकथनाच्च तदन्तिकमेव रन्तुं गतासीत्ययमर्थो व्यज्यते । अत्र नायिका स्वीया प्रगल्भा च । नायकः शठः ।

ईर्ष्याक्रोधप्रायं नर्म । समाधिरलंकारः । यथोक्तं काव्यादर्शे—'युगपन्नैकधर्माणामभ्यासश्च मतो यथा' इति । शार्दूलविक्रीडितं वृत्तम् ॥

नायकोक्तिः—

आयस्ता कलहं पुरेव कुरुते न स्रंसने वाससो
भुग्नभ्रूरतिखण्ड्यमानमधरं धत्ते न केशग्रहे ।
अङ्गान्यर्पयति स्वयं भवति नो वामा हठालिङ्गने
तन्व्या शिक्षित एष संप्रति पुनः कोपप्रकारोऽपरः ॥ १०६ ॥

आयस्ता आयासं प्राप्ता। ईर्ष्याकोपेनेति शेषः । पुरेव पूर्वमिव वाससो वस्त्रस्य स्रंसने कलहं विवादं न कुरुते न विधत्ते । किं च केशग्रहे कचाकर्षणे पुरेव भुग्नभ्रूर्भ्रूभङ्गवती सती अतिखण्ड्यमानमत्यन्तं दश्यमानमधरं दन्तच्छदं न धत्ते न वहति । किं च हठालिङ्गने प्रसभाश्लेषे पुरेव वामा वक्रा न भवति । किं त्वङ्गानि गात्राणि स्वयमात्मनार्पयति प्रयच्छति । संप्रति पुनरिदानीं तु तन्व्या कान्तया एषोऽयमपरोऽन्यः कोपप्रकारो रोषभङ्गिः शिक्षितोऽभ्यस्त इति संबन्धः । अत्रावहित्थं नाम संचारी भावः । नायिका स्वीया धीरा प्रगल्भा च । नायकः शठः । ईर्ष्यामानकृतो विप्रलम्भशृङ्गारः । अत्र नर्मगर्भः । युक्तिरलंकारः । शार्दूलविक्रीडितम् ॥

कवेर्वाक्यम्—

क्वचित्ताम्बूलाक्तः क्वचिदगुरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः ।
वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रिया नानावस्थं प्रथयति रतं प्रच्छदपटः ॥ १०७ ॥

क्वचिदेकत्र ताम्बूलाक्तस्ताम्बूलरसेन रञ्जितः । क्वचिदेकत्रागुरुपङ्काङ्कमलिनोऽगुरोः पङ्कस्तस्याङ्को लक्ष्म तेन मलिनो मलीमसः । क्वचिदेकत्र चूर्णोद्गारी चूर्णस्य कर्पूरादिक्षोदस्योद्गारो गलनं सोऽस्मिन्नस्तीति चूर्णोद्गारी । 'अत इनिठनौ' इति मत्वर्थ इनिप्रत्ययः । क्वचिदपि च कुत्रापि सालक्तकपदोऽलक्तकेन लाक्षया सहितं सालक्तकं पदं पादमुद्रा यस्मिन्स तथोक्तः । वलीभङ्गाभोगैर्वल्य एव भङ्गास्तरङ्गास्तेषामाभोगो विस्तारस्तैश्च । अलकपतितैरलकेभ्यः पतितान्यलकपतितानि तैः शीर्णकुसुमैः शीर्णानि विकीर्णानि च तानि कुसुमानि च शीर्णकुसुमानि तैश्चोपलक्षितः प्रच्छदपट आस्तरणवस्त्रं स्त्रियः कान्ताया नानावस्थं बहुप्रकारावस्थानं रतं रमणं प्रथयति ख्यापयतीति संबन्धः । अत्र क्वचित्ताम्बूलाक्त इत्यनेन मार्जारकरणं सूचितम् । यथोक्तं रतिरहस्ये—'प्रसारिते पाणिपादे शय्यास्पृशि मुखोरसि । उन्नतायां स्त्रियः कट्यां मार्जारकरणं मतम् ॥' इति । क्वचिदगुरुपङ्काङ्कमलिन इत्यनेन करिपदं नाम बन्धविशेषः सूच्यते । य-

थोक्तम्—'भूगतस्तनभुजास्यमस्तकामुन्नतस्फिजमधोमुखीं स्त्रियम् । कामति स्वकरकृष्टमेहने वल्लभे करिपदं तदुच्यते ॥' इति । क्वचिच्चूर्णोद्गारीत्यनेन धेनुकं नाम करणं सूच्यते । यथोक्तम्—'न्यस्तहस्तयुगला भुवस्तले योषिदेति कटिरूढवल्लभा । अग्रतो यदि शनैरधोमुखी धेनुकं वृषवदुन्नते प्रिये ॥' इति । क्वचिदपि च सालक्तकपद इत्यनेन पुरुषायितं सूच्यते । तत्स्पष्टमेव । वलीभङ्गाभोगैरित्यनेनालकपतितैः शीर्णकुसुमैरित्यनेन च रत्युपमर्दातिशयः सूच्यते । जातिरलंकारः । शिखरिणीवृत्तम् ॥

कवेर्वाक्यम्—

पुष्पोद्भेदमवाप्य केलिशयनाद्दूरस्थया चुम्बने
कान्तेन स्फुरिताधरेण निभृतं भ्रूसंज्ञया याचिते ।
आच्छाद्य स्मितपूर्णगण्डफलकं चेलाञ्चलेनाननं
मन्दान्दोलितकुण्डलस्तबकया तन्व्यावधूतं शिरः ॥ १०८ ॥

पुष्पोद्भेदं रजःप्रादुर्भावमवाप्य प्राप्य केलिशयनाद्दूरस्थया क्रीडातल्पं विहाय विप्रकृष्टया । ल्यब्लोपे पञ्चमी । स्फुरिताधरेण स्पन्दिताधरेण कान्तेन प्रियेण भ्रूसंज्ञया साधनेन निभृतं निगूढं चुम्बने याचिते प्रार्थिते सति स्मितपूर्णगण्डफलकं मन्दहासभरितकपोलतलमाननं चेलाञ्चलेनांशुकपल्लवेनाच्छाद्य पिधाय मन्दान्दोलितकुण्डलस्तबकया मन्दं शनैरान्दोलिते आलोलिते कुण्डले कर्णवेष्टने एव स्तबकौ गुच्छौ यस्याः सा तथोक्ता तया तन्व्या कान्तया शिरोऽवधूतं तिर्यग्वक्रितमिति संबन्धः । शिरोऽवधूतमित्यनेन प्रतिषेधः सूचितः । औत्सुक्यं नाम संचारी भावः । नायिका स्वीया मध्याप्रगल्भयोरन्यतरा स्वाधीनपतिका च । नायकोऽनुकूलः । संभोगश्रृङ्गारः । अत्र चेष्टाकृतं संभोगेच्छारूपं श्रृङ्गारिनर्म । सूक्ष्मोऽलंकारः । यथोक्तं काव्यादर्शे—'इङ्गिताकारलक्ष्यार्थसौक्ष्म्यात्सूक्ष्म इति स्मृतः' इति । शार्दूलविक्रीडितम् ॥

नायिका नायकमुपालभते—

शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः ।
तदेतत्क्वाचक्षे घृतमधुमयत्वद्बहुवचो-
विषेणाघूर्णन्ती किमपि न सखी मे गणयति ॥ १०९ ॥

हे शठ धूर्त, अन्यस्या इतरनायिकायाः काञ्चीमणिरणितं मेखलारत्नशिञ्जितमाकर्ण्याश्लिष्यन्नेवालिङ्गन्नेव सहसा शीघ्रं प्रशिथिलभुजग्रन्थिर्विश्लथबाहुबन्धनोऽभव आसीरिति यत्तदेतच्छाठ्यं क्वाचक्षे कुत्र ब्रवीमि । यतो घृतमधुमयत्वद्बहुवचोविषेण घृतमधुमयं सर्पिःक्षौद्ररूपं त्वद्बहुवचस्तव भूरिवचनं घृतमधुमयं च तत्त्वद्बहुवचश्च तदेव विषं तेनाघूर्णन्ती भ्राम्यन्ती मे सखी किमपि न गणयति न विचारयति । न विश्वसितीत्यर्थः ।

वचनमिति शेषः । इति संबन्धः । अत्र नायकवचसां घृतमधुमयत्वकथनेन तदानीं हितत्वं पश्चादहितत्वं च गम्यते । यतो घृतं मधुमिश्रितं विपाके विषत्वमापद्यते। यथोक्तं वाग्भटे—'मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः । एकत्र वा समांशानि विरुध्यन्ते परस्परम् ॥' इति । तदेतत्काचक्षे इत्यनेन सखी त्वया वञ्चिता कस्याग्रतो मम दुःखं कथयामीति स्वनिर्वेदः सूचितः । अत्र नायिका स्वीया प्रगल्भा च । नायकः शठः । विप्रलम्भशृङ्गारः । अत्र सोपालम्भवचनं नर्म । आक्षेपालंकारः । शिखरिणीवृत्तम् ॥

दूती नायकमुपालभते—

अच्छिन्नं नयनाम्बु बन्धुषु कृतं चिन्ता गुरुष्वर्पिता
दत्तं दैन्यमशेषतः परिजने तापः सखीष्वाहितः ।
अद्य श्वः परनिर्वृतिं भजति सा श्वासैः परं खिद्यते
विस्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तया ॥ ११० ॥

अच्छिन्नं संततं नयनाम्बु अश्रु बन्धुषु कृतमर्पितम् । चिन्ता विचारो गुरुषु जनन्यादिष्वर्पिता न्यस्ता । दैन्यं दीनत्वं परिजनेऽशेषतः सर्वस्मिन्परिचारकवर्गे । सप्तम्यर्थे तसिल् । दत्तं निहितम् । तापः संज्वरः सखीषु वयस्यास्वाहितो निक्षिप्तः । एवमनेन प्रकारेण तया विप्रयोगजनितं विरहोत्पादितं दुःखं विभक्तं विभागं प्रापितम् । सा यतः श्वासैः श्वसितैः परमत्यर्थं खिद्यते खिन्ना भवति । तस्मादद्यास्मिन्दिवसे श्वः परस्मिन्दिवसे वा परनिर्वृतिमत्यन्तसौख्यं भजति प्राप्नोति । अतो विस्रब्धो निश्चिन्तो भवेति संबन्धः । परनिर्वृतिं भजतीत्यनेन मरणं सूच्यते । विस्रब्धो भवेत्यनेनोपालम्भो गम्यते । अत्र मूर्च्छा नाम दशाविशेषः । नायिका परकीया कन्या च । अयोगविप्रलम्भशृङ्गारः । अत्र सोपालम्भवचनं नर्म । आक्षेपालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥

पूर्वं कृतपरिचयेन नायकेन पश्चात्परित्यक्ता नायिका स्ववाटिकायां यदृच्छागतं प्रियं दृष्ट्वा तमुपालभते—

रोहन्तौ प्रथमं ममोरसि तव प्राप्तौ विवृद्धिं स्तनौ
संलापास्तव वाक्यभङ्गिमिलनान्मौग्ध्यं परं त्याजिताः ।
धात्रीकण्ठमपास्य बाहुलतिके कण्ठे तवासञ्जिते
निर्दाक्षिण्य करोमि किं नु विशिखाप्येषा न पन्थास्तव ॥ १११ ॥

प्रथमं ममोरसि रोहन्तावुद्भवन्तौ स्तनौ तवोरसि विवृद्धिं प्राप्तौ गतौ । मम संलापाः संभाषणानि तव वाक्यभङ्गिमिलनाद्वचनरीतिमिश्रणात्परमत्यर्थं मौग्ध्यं मूढतां त्याजिताः। मम बाहुलतिके धात्रीकण्ठमुपमातृकण्ठमपास्य विहाय तव कण्ठे आसञ्जिते आसङ्गं प्रापिते । हे निर्दाक्षिण्य अज्ञातपरचेतोनुवर्तन, एषा विशिखापि इयं रथ्यापि तव पन्था मार्गो न भवति । एवं सति किं नु करोमि किं कर्तव्यम् । नु पृच्छायाम् । भवन्तं

किमुपालभे इत्यर्थः । इति संबन्धः । अत्र नायिका साधारणा । सोपालम्भवचनं नर्म । आक्षेपालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥

कवेर्वाक्यम्—

परावी कोपेन स्फुटकपटमुद्रामुकुलिता
प्रविश्याङ्गेनाङ्गं प्रणयिनि परीरम्भचतुरे ।
शनैर्नीवीबन्धं स्पृशति सभयव्याकुलकरं
विधत्ते संकोचग्लपितमवलग्नं वरतनुः ॥ ११२ ॥

कोपेन प्रणयकोपेन पराची पराङ्मुखी । स्फुटकपटनिद्रामुकुलिता । स्फुटं प्रव्यक्ता । तथैव भासमानेत्यर्थः । कपटेन कृता निद्रा तया मुमुलिता निमीलिताक्षी सती वरतनुस्तन्वी अङ्गेन गात्रेणाङ्गं स्वस्य गात्रं प्रविश्यासाद्य परीरम्भचतुरे आलिङ्गनदक्षे प्रणयिनि प्रिये नीवीबन्धं वस्त्रग्रन्थिं सभयव्याकुलकरं सभयो भयसहितो व्याकुलस्तरलः करो यस्मिन्कर्मणि तत्तथोक्तं शनैर्मन्दं स्पृशति सत्यवलग्नं मध्यं संकोचग्लपितमम्बराकर्षणकर्शितं विधत्ते करोतीति संबन्धः । अत्र कपटनिद्रयावलग्नसंकोचेन च नायिकाया विरहासहिष्णुत्वं व्यज्यते । औत्सुक्यं नाम संचारी भावः । नायिका स्वीया मध्या स्वाधीनपतिका च । नायकोऽनुकूलः संभोगशृङ्गारः । कैशिकीवृत्तेरङ्गं नर्म । युक्तिरलंकारः । शिखरिणी वृत्तम् ॥

नायकमानेतुं प्रेषितायां लक्ष्यमाणसंभोगचिह्नाया दूत्या नायिकायाश्च प्रश्नोत्तररूपा वाक्यमाला—

स्विन्नं केन मुखं दिवाकरकरैस्ते रागिणी लोचने
रोषात्तद्वचनोदिताद्विलुलिता नीलालका वायुना ।
भ्रष्टं कुङ्कुममुत्तरीयकषणात्क्लान्तासि गत्यागतै-
रुक्तं तत्सकलं किमत्र वद हे दूति क्षतस्याधरे ॥ ११३ ॥

हे दूति, तव मुखं केन कारणेन स्विन्नं सस्वेदं जातम् । अयं नायिकायाः प्रश्नः । दिवाकरकरैः स्विन्नमिति दूत्या उत्तरमुक्तम् । ते तव लोचने दृशौ केन कारणेन रागिणी रक्ते । अयं नायिकायाः प्रश्नः । तद्वचनोदितात्तस्य धूर्तस्य वचनं वाक्यं तस्मादुदितादुद्गताद्रोषाद्रक्ते इत्युत्तरम् । नीलालकाः कृष्णकुन्तलाः केन विलुलिता व्याकुलिताः । अयं प्रश्नः । वायुना विलुलिता इत्युत्तरम् । कुङ्कुमं काश्मीरं केन भ्रष्टं विगलितम् । अयं प्रश्नः । उत्तरीयकषणात्संव्यानघर्षणाद्भ्रष्टम् । इत्युत्तरम् । केन क्लान्तासि तान्ता भवसि । अयं प्रश्नः । गत्यागतैर्गमनागमनैः क्लान्तास्मि । इत्युत्तरम् । हे दूति, सकलं त्वया यदुक्तं तत्सर्वं युक्तमुपपन्नम् । अधरे क्षतस्य व्रणस्य किं कारणमत्रास्मिन्प्रश्ने वद ब्रूहि । उत्तरमिति शेषः । इति संबन्धः । अत्र वदेत्यनेन त्वया वैदग्ध्यात्त-

त्सर्वं संभोगचिह्नमपह्नुतमधरक्षतं कथमपह्नुयेतेत्ययमर्थो गम्यते । नायिका स्वीया प्रगल्भा च । नायकः शठः । विप्रलम्भशृङ्गारः । वाक्योत्तरमलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥

अत्यन्तापराधिनि प्रिये समागते सति कुपिताया नायिकाया आकारगोपनप्रकारं कविराह—

नान्तः प्रवेशमरुणद्विमुखी न चासी-
दाचष्ट रोषपरुषाणि न चाक्षराणि ।
सा केवलं सरलपक्ष्मभिरक्षिपातैः
कान्तं विलोकितवती जननिर्विशेषम् ॥ ११४ ॥

सा नायिका नायकस्यान्तः प्रवेशं स्वगृहान्तः प्रवेशं नारुणन्न निवारयति स्म । किं च विमुखी पराङ्मुखी नासीत् । कि च रोषपरुषाणि कोपकर्कशान्यक्षराणि वचनानि नाचष्ट नाभाषत । किं तु सरलपक्ष्मभिः सरलानि ऋजूनि पक्ष्माण्यक्षिरोमाणि येषु ते तथोक्तास्तैरक्षिपातैः संदर्शनैः कान्तं प्रियं जननिर्विशेषं सर्वजनसामान्यं यथा भवति तथा केवलं विलोकितवती दृष्टवती । एवेति शेषः । इति संबन्धः । जननिर्विशेषं विलोकितवतीत्यनेनापराधिनः प्रियस्यासाधारणं दण्डनं कृतमित्यवगम्यते । अवहित्थं नाम संचारी भावः । अत्र नायिका स्वीया धीरा प्रगल्भा च । नायकः शठः । ईर्ष्यामानकृतो विप्रलम्भशृङ्गारः । ईर्ष्याक्रोधप्रायं नर्म । आक्षेपालंकारः । वसन्ततिलकावृत्तम् ॥

कवेर्वाक्यम्—

प्रियकृतपटस्तेयक्रीडाविडम्बनविह्वलां
किमपि करुणालापां तन्वीमुदीक्ष्य ससंभ्रमम् ।
अपि विगलिते स्कन्धावारे गते सुरताहवे
त्रिभुवनमहाधन्वी स्थाने न्यवर्तत मन्मथः ॥ ११५ ॥

प्रियकृतपटस्तेयक्रीडाविलम्बनविह्वलां प्रियेण कृता प्रियकृता पटस्तेयक्रीडा पटस्य वस्त्रस्य स्तेयं चौर्यं तदेव क्रीडा विनोदस्तस्या विलम्बनं कालक्षेपस्तेन विह्वला व्याकुला ताम् । किमपि करुणालापामनिर्वाच्यादीनभाषितां तन्वीं कान्तामुदीक्ष्यावलोक्य त्रिभुवनमहाधन्वी त्रैलोक्यैकवीरो मन्मथः कामः सुरताहवे संभोगसंगरे गते निवृत्ते सति स्कन्धावारे शिबिरे विगलिते च्युते सत्यपि ससंभ्रमं सत्वरं यथा भवति तथा न्यवर्तत निवृत्तोऽभूत्स्थाने युक्तमिति संबन्धः । अत्र पटस्तेयक्रीडा संभोगावसाने कृतेति वेदितव्यम् । गते सुरताहवे इत्युक्तत्वात् । सुरतस्याहवत्वरूपणं परस्परोपमर्दस्य विद्यमानत्वात् । अत्र स्कन्धावारशब्देन स्रक्चन्दनादिप्रसाधनहारमेखलाद्याभरणलीलाविलासविभ्रमादिचेष्टास्वरूपोद्दीपनसामग्री कथ्यते । विगलिते इत्यनेन सुरतान्ते लक्ष्यमाणं सामग्रीशैथिल्यं क॰

श्यते । न्यवर्तत मन्मथ इत्यनेन पुनः सुरतारम्भो गम्यते । यथा लोके शूरः पुरुषः पराभ्निर्जित्य गलितसंनाहः प्रयातः सन्पश्चात्परैरभिभूतानां स्वकीयानामार्तनादं श्रुत्वा तत्प्रशमनाय पुनर्निवर्तते तद्वदयमपीत्यभिप्रायः । अत्र व्रीडा नाम संचारी भावः । नायिका स्वीया मध्या स्वाधीनपतिका च । नायकोऽनुकूलः । संभोगशृङ्गारः । चेष्टाकृतं सहासं शृङ्गारिनर्म । हेतुरलंकारः । हरिणी वृत्तम् ॥

कवेर्वाक्यम्—

सालक्तकेन नवपल्लवकोमलेन
पादेन नूपुरवता मदनालसेन ।
यस्ताड्यते दयितया प्रणयापराधा-
त्सोऽङ्गीकृतो भगवता मकरध्वजेन ॥ ११६ ॥

स्पष्टोऽर्थः । अत्र दयितया पादेन ताडितोऽपि भगवता मकरध्वजेन सोऽङ्गीकृत इत्यनेन नानाविधैरुपचारैरुपलालितः किमुतेत्ययमर्थः सूचितः । एतावता कामपुरुषार्थस्योपादेयत्वमुक्तं भवति ॥

## २ परिशिष्टम् ।

रुद्रमदेवकुमारप्रणीतटीकायां केचनाधिकाः श्लोकाः । यथा—

प्रयच्छाहारं मे यदि तव रहोवृत्तमखिलं
मया वाच्यं वोच्चैरिति गृहशुके जल्पति शनैः ।
वधूर्वक्त्रं व्रीडाभरनमितमन्तर्विहसितं
हरत्यर्धोन्मीलन्नलिनमनिलावर्जितमिव ॥ ११७ ॥

काचन नायिका गृहशुके शनैर्मन्दमिति वदति सति मुखं वक्रं करोति । कथं जल्पति । हे नायिके, मह्यमाहारं देहि यदि न दास्यसि तदा तवकान्तवृत्तान्तं समस्तं मयोच्चैः कथनीयम् । कीदृशं मुखम् । लज्जातिशयनम्रम् । गुप्तहसितम् । इदानीमुत्प्रेक्षते—अर्धविकसत्पद्मं वायुवक्रीकृतमिव ॥

किंचिन्मुद्रितपांसवः शिखिगणैरुत्पक्ष(रूर्ध्वाक्ष)मालोकिता
जीर्णावासरुदद्दरिद्रगृहिणीश्वासानिलैर्जर्जराः ।
एते ते निपतन्ति नूतनघनात्प्रावृड्भरानन्दिनो
विच्छायीकृतविप्रयुक्तवनिता वक्त्रेन्दवो बिन्दवः ॥ ११८ ॥

त एते नूतनघनाज्जलबिन्दवः पतन्ति । कथंभूताः । किंचिन्निषिद्धरेणवः । मयूरवृन्दैरूर्ध्वनयनं यथा स्यादेवं दृष्टाः । पुराणभवनदरिद्रकान्तानिःश्वासमारुतैरनेकधा कृताः । वर्षागमहर्षिणः । मलिनीकृतवियोगिवनिता वक्त्रचन्द्राः ॥

[1]नीत्वोच्चैर्विक्षिपन्तः कृततुहिनकणासारसङ्गान्परागा-
[2]न्नामोदानन्दितालीनतितरसुरभीन्भूरिशो दिङ्मुखेषु ।
एते ते कुङ्कुमाङ्कस्तनकलशभरास्फालनादुच्छलन्तः
पीत्वा सीत्कारिवक्त्रं हरिणशिशुदृशां हैमना वान्ति वाताः॥११९॥

एते ते प्रसिद्धा हेमन्तसंबन्धिनो वाता वहन्ति । मृगाक्षीणां सीत्कारयुक्तं मुखं स्पृष्ट्वा । किं कुर्वन्तः । कुङ्कुमलेपयुक्तस्तनकलशताडनादूर्ध्वं गच्छन्तः । पुनः किं कुर्वन्तः । अनेकान्परागानुच्चैर्नीत्वा दिशामुखेषु निक्षिपन्तः । जनिततुषारकणवृष्टिभ्रमान् । पुनः कथंभूतान् । परिमलतोषितभ्रमरान् । अतिशयसुगन्धान् ॥

पीतस्तुषारकिरणो मधुनैव सार्ध-
मन्तः प्रविश्य चषकप्रतिबिम्बवर्ती ।
[3]नानाकरं मनसि मानवतीजनस्य
नूनं बिभेद यदसौ प्रससाद सद्यः ॥ १२० ॥

कविरुत्प्रेक्षते—निश्चयेनायं चन्द्रो मधुपात्रे प्रतिबिम्बितः सन्मद्येनैव सह पीतः सन्मानिनीसमूहस्य चित्तेऽन्तः प्रविश्य मानोत्पत्तिस्थानं चूर्णयामास । कथमेतज्ज्ञायते—यदसौ मानिनीलोकस्तत्क्षणान्मानरहितो बभूव ॥

ललनालोलधम्मिल्लमल्लिकामोदवासिताः ।
वान्ति रात्रौ रतक्लान्तकामिनीसुहृदोऽनिलाः ॥ १२१ ॥

एवंविधा वायवो रात्रौ ग्रीष्मे वहन्ति । कथंभूताः । अङ्गनाचपलकेशपाशमल्लिकापरिमलसुगन्धयः । संभोगखिन्नकामिनीप्रियाः ॥

वान्ति कह्लारसुभगाः सप्तच्छदसुगन्धयः ।
वाता नवर्[4]रतिम्लानवधूसंगममन्थराः ॥ १२२ ॥

शरत्काले एवंविधा वाता वहन्ति । कीदृशाः । सौगन्धिकमनोज्ञाः । विषमच्छदसुरभयः । नवसंभोगखिन्नकामिनीसुखोत्पादनमन्दाः ॥

रामाणां रमणीयवक्त्रशशिनः स्वेदोदबिन्दुप्लुतो
व्यालोलामलकावलीं प्रचलयंश्चुम्बन्नि[5]तम्बांशुकम् ।

१. 'क्षिप्त्वोच्चैः' इति पाठः. २. 'कौन्दानानन्दितालीनतिशय' इति पाठः. ३. 'मानान्धकारमपि' इति पाठः. ४. 'रतग्लानवधूगमन' इति पाठः. ५. 'नितम्बाम्बरम्' इति पाठः.

प्रातर्वाति मधौ विकृष्टविकसद्राजीवराजीरजो-
जालामोदमनोहरो रतिरसग्लानिं हरन्मारुतः ॥ १२३ ॥

मधौ वसन्ते प्रभात एवंविधो वातो वहति । कीदृशः । रमणीनां मनोहरमुखचन्द्रस्य स्वेदजलबिन्दुयुक्तः । तथा तासां चञ्चलां कुटिलकेशपङ्क्तिं कम्पयन् । तथा तासां कटीवस्त्रं स्पृशन् । तथा तासां संभोगसक्तिश्रमं स्फेटयन् । कीदृशः । अपहृतकमलपङ्क्तिपरागसमूहसौगन्ध्यहृद्यः ॥

अङ्गं चन्दनपाण्डु पल्लवमृदुस्ताम्बूलताम्रोऽधरो
धारायन्त्रजलाभिषेककलुषे धौताञ्जने लोचने ।
अन्तःपुष्पसुगन्धिराजिकबरी सर्वाङ्गलग्नाम्बरं
कान्तानां कमनीयतां विदधते ग्रीष्मेऽपराह्णागमे ॥ १२४ ॥

ग्रीष्मस्य संध्यासमये नारीणामेतानि वस्तूनि रमणीयतां कुर्वन्ति । एतानि कानि । चन्दनशुभ्रमङ्गम् । न केवलमङ्गम् । कीसलयकोमलस्ताम्बूलरक्तोऽधरश्च । तथा प्रक्षालितकज्जले नयने च । कथंभूते । धारागृहजलस्नानारुणिते । तथा अशुष्कः केशपाशश्च । कीदृशः । मध्यस्थितकुसुमसुरभिः । तथा निर्मलसूक्ष्मवस्त्रं च ॥

वरमसौ दिवसो न पुनर्निशा ननु निशैव वरं न पुनर्दिनम् ।
उभयमेतदपि व्रजतु क्षयं प्रियतमेन न यत्र समागमः ॥ १२५ ॥

एका सखी एवं ब्रूते—हे सखि, असौ दिवसो वरं न पुना रात्रिः । ततो द्वितीया ब्रवीति—हे सखि, रात्रिरेव श्रेष्ठा न पुनर्दिनं वरम् । ततस्तृतीया वदति—यत्र दिने यस्यां रात्रौ च प्रियतमेन सह मेलापको नास्ति तद्द्वितयमपि नाशं यातु ॥

मन्दं मुद्रितपांसवः परिपतज्झांतान्धकारा मरु-
द्वेगध्वस्तकुटीरकाग्रनिपतच्छिद्रेषु लब्धान्तराः ।
कर्मव्यग्रकुटुम्बिनीकुचभरस्वेदच्छिदः प्रावृषः
प्रारम्भे मदयन्ति कन्दलदलोल्लासाः पयोबिन्दवः ॥ १२६ ॥

वर्षायाः प्रारम्भे एवंविधा जलबिन्दवो हर्षयन्ति । कथंभूताः । मन्दं यथा स्यादेवं निवारितधूलयः । सर्वदागच्छज्झाततमसः । वायुवेगापसारिततृणकुटीरकजातच्छिद्रेषु प्राप्तप्रवेशाः । तथा गृहकर्माकुलगृहस्थकामिनीकुचयुगस्वेदापहारिणः । कन्दलपत्रोल्लासिनः ॥

---

१. 'प्रकाम' इति पाठः. २. 'प्रकुरुते ग्रीष्मापराह्णागमः' इति पाठः. ३. इतः प्रभृति श्लोकपञ्चकमर्जुनवर्मदेवेन प्रक्षिप्तमित्युक्त्वा पद्मपञ्चाशश्लोकानन्तरमुद्धृत(४६ पृष्ठे)मस्ति. ४. 'झांकारिझञ्झामरुद्' इति पाठः. ५. 'निपतन्ति' इति पाठः.

कोऽपि नायकः कामपि नायिकां दृष्ट्वानुरागातिशयात्पुनरुक्तं दोषमगणयित्वा इदमाह—

इयमसौ तरलायतलोचना गुरुसमुन्नतपीनपयोधरा ।
पृथुनितम्बभरालसगामिनी प्रियतमा मम जीवितहारिणी ॥ १२७ ॥

इयमसौ प्रियतमा मम जीवितमानन्दयति । चञ्चलदीर्घनयना । पृथुलोन्नतमांसलस्तनी । विस्तीर्णकटिप्रदेशभारमन्थरगामिनी ॥

सालक्तकं शतदलाधिककान्तिरम्यं
रात्रौ स्वधामनिकरारुणनूपुराङ्कम् ।
क्षिप्तं भृशं कुपितया तरलायताक्ष्या
सौभाग्यचिह्नमिव मूर्ध्नि पदं विरेजे ॥ १२८ ॥

कस्यचिन्नायकस्य मस्तके चञ्चलदीर्घलोचनया प्रियया कुपितया रात्रौ पदं दत्त विरेजे शुशुभे । किमिव । सौभाग्यचिह्नमिव । कीदृशम् । सयावकम् । कमलाधिकदीप्तिमनोज्ञम् । निजायतनसमूहरक्तीकृतपादकटकचिह्नम् ॥

श्रुत्वाकस्मान्निशीथे नवघनरसितं विश्लथाङ्गं पतन्त्या
शय्याया भूमिपृष्ठे करतलधृतया दुःखितालीजनेन ।
सोत्कण्ठं मुक्तकण्ठं कठिनकुचतटोपान्तदीर्णाश्रुबिन्दु[1]
स्मृत्वा स्मृत्वा प्रियस्य स्खलितमृदुवचो रुद्यते पान्थवध्वा ॥१२९॥

कयाचन पथिकस्त्रियार्धरात्रे नवमेघगर्जितमचिन्तितमेव श्रुत्वा रुद्यते । शयनान्मन्दशरीरं यथाभवत्येवं भूमौ पतन्त्या । दुःखितसखीजनेन प्रसारितहस्तं धृतया । कथं रुद्यते । उत्कण्ठायुक्तम् । तथा मुक्तकण्ठम् । किं कृत्वा । वल्लभं स्मृत्वा स्मृत्वा । कठिनस्तनोपरिपतितविदीर्णाश्रुबिन्दु अव्यक्तमृदुवचनं च यथा भवत्येवमनुरुद्यते ॥

कोऽपि नायको दूतीं प्रति ब्रूते—

पीतो यतः प्रभृति कामपिपासितेन
तस्या मयाधररसः प्रचुरः प्रियायाः ।
तृष्णा ततः प्रभृति मे द्विगुणत्वमेति
लावण्यमस्ति बहु तत्र किमत्र चित्रम् ॥ १३० ॥

यतः प्रभृति कंदर्पव्यथितेन मया तस्या अधररसः प्रचुरः पीतस्तदादि मम तृष्णाभिलाषो द्विगुणतामेति । अत्र किमाश्चर्यम् । यतस्तत्र लावण्यं सौन्दर्यमस्ति ॥

१. 'शीर्णाश्रु' इति पाठः.

## ३ परिशिष्टम्।

मूलपुस्तकेष्वधिकाः श्लोकाः—

ग्रामेऽस्मिन्पथिकाय पान्थ वसतिर्नैवाधुना दीयते
रात्रावत्र विवाहमण्डपतले पान्थः प्रसुप्तो युवा।
तेनोत्थाय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं
येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति॥ १३१॥

कान्ते कत्यपि वासराणि गमय त्वं मीलयित्वा दृशौ
स्वस्ति स्वस्ति निमीलयामि नयने यावन्न शून्या दिशः।
आयाता वयमागमिष्यसि सुहृद्वर्गस्य भाग्योदयैः
संदेशो वद कस्तवाभिलषितस्तीर्थेषु तोयाञ्जलिः॥ १३२॥

कोपस्तया हृदि कृतो यदि पङ्कजाक्षि
सोऽस्तु प्रियस्तव किमत्र विधेयमन्यत्।
आश्लेषमर्पय मदर्पितपूर्वमुच्चै-
र्मह्यं समर्पय मदर्पितचुम्बनं च॥ १३३॥

हारो जलार्द्रवसनं नलिनीदलानि
प्रालेयशीकरमुचस्तुहिनांशुभासः।
यस्येन्धनानि सरसानि च चन्दनानि
निर्वाणमेष्यति कथं स मनोभवाग्निः॥ १३४॥

तन्वी शरत्त्रिपथगा पुलिने कपोले
लोले दृशौ रुचिरचञ्चलखञ्जरीटौ।
तद्बन्धनाय सुचिरार्पितसुभ्रुचाप-
चाण्डालपाशयुगलाविव शून्यकर्णौ॥ १३५॥

पादाङ्गुष्ठेन भूमिं किसलयरुचिना सापदेशं लिखन्ती
भूयो भूयः क्षिपन्ती मयि शितशबले लोचने लोलतारे।
वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना
यन्मां नोवाच किंचित्स्थितमपि हृदये मानसं तद्दुनोति॥ १३६॥

ऊरुद्वयं मृगदृशः कदलस्य काण्डौ
मध्यं च वेदिरतुलं स्तनयुग्ममस्याः ।
लावण्यवारिपरिपूरितशातकुम्भ-
कुम्भौ मनोजनृपतेरभिषेचनाय ॥ १३७ ॥
हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले ।
मुक्तानामप्यवस्थेयं के वयं स्मरकिंकराः ॥ १३८ ॥

---

## ४ परिशिष्टम् ।

सुभाषितावलावमरुकनाम्ना समुद्धृताः पूर्वागतश्लोकाधिकाः श्लोकाः । यथा—

अन्योन्यग्रथितारुणाङ्गुलि नमत्पाणिद्वयस्योपरि
न्यस्योच्छ्वासविकम्पिताधरदलं निर्वेदशून्यं मुखम् ।
आमीलन्नयनान्तवान्तसलिलं श्लाघ्यस्य निन्द्यस्य वा
कस्येदं दृढसौहृदं प्रतिदिनं दीनं त्वया स्मर्यते ॥ १३९ ॥
असद्वृत्तो नायं न च खलु गुणैरेष रहितः
प्रियो मुक्ताहारस्तव चरणमूले निपतितः ।
गृहाणेमं मुग्धे व्रजतु निजकण्ठप्रणयिता-
मुपायो नास्त्यन्यस्तव हृदयसंतापशमने ॥ १४० ॥
आलोकयति पयोधरमुपमन्दिरमभिनवाम्बुभरनीलम् ।
दयितारचितचितानलधूमोद्गमशङ्कया पथिकः ॥ १४१ ॥
आश्लिष्टा रभसाद्विलीयत इवाक्रान्ताप्यनङ्गेन या
यस्याः कृत्रिमचण्डवस्तुकरणाकूतेषु खिन्नं मनः ।
कोऽयं काहमिति प्रवृत्तसुरता जानाति या नान्तरं
रन्तुः सा रमणी स एव रमणः शेषौ तु जायापती ॥१४२॥
किं बाले मुग्धतेयं प्रकृतिरियमथो रौद्रता किं नु कोपः
किं वा चापल्यमुच्चैर्व्रतमुत किमु ते यौवनारम्भदर्पः ।
यत्केशालापवक्रस्मितललितकुचभ्रूविलासावलम्भैः
स्वस्थो लोकस्त्वदीयैर्मनसि विनिहितैर्दह्यतेऽमीभिरार्यैः ॥ १४३ ॥

गच्छेत्युन्नतया भ्रुवैव गदितं मन्दं वलन्त्या तया
तेनाप्यञ्चितलोचनद्वयपुटेनाज्ञा गृहीता शनैः ।
संकेताय वलद्दृशा पिशुनिता ज्ञाता च दिक्प्रेयसा
गूढः संगमनिश्चयो गुरुपुरोऽप्येवं युवभ्यां कृतः ॥ १४४ ॥
चटुलनयने शून्या दृष्टिः कृता खलु केन ते
क इह सुकृती द्रष्टव्यानामुवाह धुरं पराम् ।
यमभिलिखितप्रख्यैरङ्गैर्न मुञ्चसि चेतसा
वदनकमलं पाणौ कृत्वा निमीलितलोचना ॥ १४५ ॥
चलतु तरला धृष्टा दृष्टिः खला सखि मेखला
स्खलतु कुचयोरुत्कम्पान्मे विदीर्यतु कञ्चुकम् ।
तदपि न मया संभाव्योऽसौ पुनर्दयितः शठः
स्फुटति हृदयं मानेनान्तर्न मे यदि तत्क्षणम् ॥ १४६ ॥
तैस्तैश्चाटुभिराज्ञया किल तया वृत्ते रतिव्यत्यये
लज्जामन्थरया तया निवसिते भ्रान्त्या मदीयांशुके ।
तत्पट्टांशुकमुद्वहन्नहमपि स्थित्वा यदुक्तोऽधुना
वेषो युज्यत एष एव हि तवेत्येतन्न विस्मर्यते ॥ १४७ ॥
पत्रं न श्रवणेऽस्ति बाष्पगुरुणोर्नो नेत्रयोः कज्जलं
रागः पूर्व इवाधरे चरणयोस्तन्व्या न चालक्तकः ।
वार्तोच्छित्तिषु निष्ठुरेति भवता मिथ्यैव संभाव्यते
सा लेखं लिखतु च्युतोपकरणा न्यायेन केनाधुना ॥ १४८ ॥
यदि विनिहिता शून्या दृष्टिः किमु स्थिरकौतुका
यदि विरचितो मौने यत्नः किमु स्फुरितोऽधरः ।
यदि नियमितं ध्याने चेतः कथं पुलकोद्गमः
कृतमभिनयैर्दृष्टो मानः प्रसीद विमुच्यताम् ॥ १४९ ॥
यद्रात्रौ रहसि व्यपेतविनयं वृत्तं रसात्कामिनो-
रन्योन्यं शयनीयमीहितरसावाप्तिप्रवृत्तस्पृहम् ।

तत्सानन्दमिलद्दृशोः कथमपि स्मृत्वा गुरूणां पुरो
हासोद्भेदनिरोधमन्थरमिलत्तारं कथंचित्स्थितम् ॥ १९० ॥

याते गोत्रविपर्यये श्रुतिपथं शय्यागतायाश्चिरं
निर्ध्यातं परिवर्तनं हृदि पुनः प्रारब्धमङ्गीकृतम् ।
भूयस्तत्प्रकृतं कृतं च वलितक्षिप्तैकदोर्लेखया
मानिन्या न तु पारितः स्तनभरो नेतुं प्रियस्योरसः ॥ १९१ ॥

सा यौवनमदोन्मत्ता वयमस्वस्थचेतसः ।
तस्या लावण्यभङ्गेषु दाहोऽस्मासु विजृम्भते ॥ १९२ ॥

सति प्रदीपे सत्यग्नौ सत्सु तारामणीन्दुषु ।
विरामे मृगशावाक्ष्यास्तमोभूतमिदं जगत् ॥ १९३ ॥

सुरतविरतौ व्रीडावेशश्रमश्लथहस्तया
रहसि गलितं तन्व्या प्राप्तुं न पारितमंशुकम् ।
रतिरसजडैरङ्गैरङ्गं पिधातुमशक्तया
प्रियतमतनौ सर्वाङ्गीणं प्रविष्टमधृष्टया ॥ १९४ ॥

सख्यस्तानि वचांसि यानि बहुशोऽधीतानि युष्मन्मुखा-
द्वक्ष्येऽहं बहुशिक्षिता क्षणमिति ध्यात्वापि मौनं श्रिता ।
धूर्तेनैत्य च मण्डलीकृतकुचं गाढं परिष्वज्य मां
पीतान्येव सहाधरेण हसता वक्रस्थितान्येव मे ॥ १९५ ॥

उत्कम्पो हृदये स्खलन्ति वचनान्यावेगलोलं मनो
गात्रं सीदति चक्षुरश्रुकलुषं चिन्ता मुखं शुष्यति ।
यस्यैषा सखि पूर्वरङ्गरचना मानः स मुक्तो मया
वन्ध्यास्ता अपि योषितः क्षितितले यासामयं संमतः ॥ १९६ ॥

मानव्याधिनिपीडिताहमधुना शक्नोमि तस्यान्तिकं
नो गन्तुं न सखीजनोऽस्ति चतुरो यो मां बलान्नेष्यति ।
मानी सोऽपि जनो न लाघवभयादभ्येति मातः स्वयं
कालो याति चलं च जीवितमिति क्षुण्णं मनश्चिन्तया ॥ १९७ ॥

## ५ परिशिष्टम् ।

सूक्तिमुक्तावल्यामरुकनाम्ना समुद्धृताः पूर्वश्लोकातिरिक्ताः श्लोकाः । यथा—

कान्ते कथंचिद्गदितप्रयाणे क्षणं विनम्रा विरहार्दिताङ्गी ।
ततस्तमालोक्य कदाऽऽगतोऽसीत्यालिङ्ग्य मुग्धा मुदमाससाद ॥ १५८॥

यद्गम्यं गुरुगौरवस्य सुहृदो यस्मिँल्लभन्तेऽन्तरं
यद्दाक्षिण्यवशाद्भयाच्च सहते मन्दोपचारानपि ।
यल्लज्जा निरुणद्धि यत्र शपथैरुत्पाद्यते प्रत्यय-
स्तत्किं प्रेम स उच्यते परिचयस्तत्रापि मानेन किम् ॥ १५९॥

दृष्टे लोचनवन्मनाङ्मुकुलितं पार्श्वस्थिते वक्त्रव-
न्न्यग्भूतं बहिरासितं पुलकवत्स्पर्शे समातन्वति ।
नीवीबन्धवदागतं शिथिलतां संभाषमाणे क्षणा-
न्मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥ १६० ॥

ललितमुरसा तरन्ती तरलतरङ्गौघचालितनितम्बा ।
विपरितरक्तासक्तेव दृश्यते सरसि सा सख्या ॥ १६१ ॥

## ६ परिशिष्टम् ।

शार्ङ्गधरपद्धतौ पूर्वश्लोकाधिकः श्लोकः । यथा—

कान्तामुखं सुरतकेलिविमर्दखेद-
संजातघर्मकणविच्छुरितं रतान्ते ।
आपाण्डुरं विलसदर्धनिमीलिताक्षं
संस्मृत्य हे हृदय किं शतधा न यासि ॥ १६२ ॥

## ७ परिशिष्टम् ।

औचित्यविचारचर्चायां पूर्वश्लोकातिरिक्तः श्लोकः । यथा—

गन्तव्यं यदि नाम निश्चितमहो गन्तासि केयं त्वरा
द्वित्राण्येव पदानि तिष्ठतु भवान्पश्यामि यावन्मुखम् ।
संसारे घटिकाप्रणालविगलद्वारा समे जीविते
को जानाति पुनस्त्वया सह मम स्याद्वा न वा संगमः ॥ १६३ ॥

१. औचित्यविचारचर्चायाममरुकनाम्नायं श्लोकः समुद्धृतस्तत्रामरुकस्येति भाति.

# अमरुशतकश्लोकानुक्रमणी ।



१. शृङ्गारदीपिकायां नास्ति. २. सुभाषितावलौ अद्भुतफुल्लस्य; शार्ङ्गधरपद्धतौ अद्भुतपुण्यस्य. ३. सुभाषितावलौ भीमस्य. ४. शृङ्गारदीपिकायां नास्ति. ५. शृङ्गारदीपि- [illegible] नस्य. ८. सूक्तिमुक्तावलौ शार्ङ्गधरपद्धतौ च वामनस्य. ९. सुभाषितावलौ विज्जिकायाः.

१. सुभाषितावलौ पुण्ड्रकस्य. २. सूक्तिमुक्तावलावप्यमरुकनाम्नैवोद्धृतः. ३. शृङ्गारदीपिकायां नास्ति. ४. शृङ्गारदीपिकायां नास्ति; सुभाषितावलौ दुर्वहकस्य. ५. शृङ्गारदीपिकायां नास्ति. ६. शृङ्गारदीपिकायां नास्ति; सुभाषितावलौ शार्ङ्गधरपद्धतौ च छमच्छमिकारकस्य. ७. सूक्तिमुक्तावलावप्यमरुकनाम्नैवोद्धृतः. ८. सुभाषितावलौ नरसिंहस्य. ९. शृङ्गारदीपिकायां नास्ति. १०. शृङ्गारदीपिकायां नास्ति. ११. सूक्तिमुक्तावलौ सुभाषितावलौ शार्ङ्गधरपद्धतौ च नामरहितः. १२. सूक्तिमुक्तावलावप्यमरुकनाम्नैवोद्धृतः. १३. हरविजयस्थोऽयं (१६।६२) श्लोकः.

---

१. शृङ्गारदीपिकायां नास्ति. एतद्युग्मं दशरूपावलोकेऽप्यमरुकनाम्नैवोदाहृतम्; सुभाषितावलावेतद्युग्मं दुर्वहकस्य. २. सूक्तिमुक्तावलौ सुभाषितावलौ च झलज्झलिकावासुदेवस्य; शार्ङ्गधरपद्धतौ गलज्जलवासुदेवस्य. ३. शृङ्गारदीपिकायां नास्ति. ४. सूक्तिमुक्तावलौ शार्ङ्गधरपद्धतौ च कुमारदासस्य; सुभाषितावलौ भट्टकुमारस्य. ५. सुभाषितावलौ भदन्तधर्मकीर्तेः; सूक्तिमुक्तावलौ धर्मकीर्तेः. ६. सूक्तिमुक्तावलौ सुभाषितावलौ च भदन्तारोग्यस्य; शार्ङ्गधरपद्धतौ भदन्तवर्मणः. ७. शृङ्गारदीपिकायां नास्ति, ८. सूक्तिमुक्तावलौ शार्ङ्गधरपद्धतौ च भट्टेन्दुराजस्य. ९. शृङ्गारदीपिकायां नास्ति. १०. सुभाषितावलौ ...र्गटस्य. ११. शार्ङ्गधरपद्धतावप्यमरुकस्यैव. १२. सुभाषितावलौ दाक्षिणात्यस्य कस्या... १३. सुभाषितावलौ शार्ङ्गधरपद्धतौ च शीलाभट्टारिकायाः. १४. अर्जुनवर्मदेवेन ...विंशश्लोकव्याख्यायां प्रमाणत्वेनोपन्यस्तः.

१. सुभाषितावलौ लीलाचन्द्रस्य. २. शृङ्गारदीपिकायां नास्ति. ३. सूक्तिमुक्त वलौ शार्ङ्गधरपद्धतौ चामरुकनाम्नैवोद्धृतः. ४. शृङ्गारदीपिकायां नास्ति. ५. सुभ षितावलौ बाणकवेः.